## ॥ अष्टकप्रकरणानुक्रमः ॥

सकलसूरिपुरन्दर–भव्यसत्त्वानुग्रहगद्यपद्यात्मकानेकलक्षश्लोकप्रमाणविरहाङ्कचतुश्चत्वारिंशदुत्तर-
चतुर्दशशतशास्त्रप्रासादसूत्रणसूत्रधारश्रीहरिभद्रसूरिविनिर्मितं-
श्रीनवाङ्गीवृत्त्याद्यनेकग्रन्थकारकचन्द्रकुलाम्बरभास्करश्रीअभयदेवसूरिप्रतिसंस्कृत–
सूरिशेखरश्रीजिनेश्वरसूरिसन्दृब्धविवृत्यलङ्कृतं–

# ॥ श्री अष्टकप्रकरणम् ॥

आविष्कृताशेषपदार्थसार्थो, दोषानुषक्तं तिमिरं विधूय ॥ गावः प्रथन्तेऽस्खलितप्रचारा, यस्येह तं वीररविं प्रणम्य ॥ १ ॥
गुणेषु रागाद्धरिभद्रसूरे–स्तदुक्तमावर्तयितुं महार्थम् ॥ विबुद्धिरप्यष्टकवृत्तिमुच्चै–र्विधातुमिच्छामि गतत्रपोऽहम् ॥ २ ॥
सूर्यप्रकाश्यं क नु मण्डलं दिवः, खद्योतकः कास्य विभासनोद्यमी ॥ क धीशगम्यं हरिभद्रसद्वचः, काधीरहं तस्य विभास(व)नोद्यतः ॥ ३ ॥
तथापि यावद्गुरुपादभक्ते–र्विनिश्चितं तावदहं ब्रवीमि ॥ यदस्ति मत्तोऽपि जनोऽतिमन्दो, भवेदतस्तस्य महोपकारः ॥ ४ ॥

इह हि सुगृहीतनामधेयो हरिभद्राचार्यो मिथ्यादृशो विप्रवदमानानसत्कर्तव्यतया स्वयं नष्टानसदुपदेशदानेन प्र

परानपि नाशयतो विलोक्य, तदुभयमप्युपकर्तुं द्वात्रिंशदधिकारशासनरूपं शास्त्रं चिकीर्षुस्तस्य च श्रेयोभूततया विघ्नसम्भवे तद्विनिवर्तनाय असाधारणगुणगणमणिनिकरमकराकरायमाणपुरुषविशेषविषयनमस्कारकरणरूपं भावमङ्गलमुपकल्पयँस्तथा 'सकलपरलोकप्रयोजनेषु प्रवचनादेव प्रायः प्रवृत्तिः परिदृश्यते तच्च पुरुषविशेषेण(ष)प्रणीतमेव प्रमाणं पुरुषविशेषविषये च विप्रतिपद्यन्ते कुप्रवचनानुगामिनो जना' इति तद्विप्रतिपत्तिव्यपोहनाय तत्स्वरूपमुपदर्शयन्महादेवाष्टकं तावदादावाह ॥ महादेवस्य च तात्त्विकं महत्त्वमखिलजनासुलभस्वभावेभ्योऽतिशयेभ्यस्ते चापायापगमज्ञानवचनसुखप्रभृतयस्तत्र चापायापगमातिशयपूर्वकत्वाच्छेषाणां तमेव तावत्तस्य श्लोकद्वयेनाह ॥ २ श्लो०

यस्य संक्लेशजननो, रागो नास्त्येव सर्वथा ॥ न च द्वेषोऽपि सत्त्वेषु, शमेन्धनदवानलः ॥ १ ॥

न च मोहोऽपि सज्ज्ञान—च्छादनोऽशुद्धवृत्तकृत् ॥ त्रिलोकख्यातमहिमा, महादेवः स उच्यते ॥ २ ॥

(वृत्तिः) 'यस्य' देवताविशेषस्य, 'रागो नास्त्येव महादेवः स उच्यत' इति सम्बन्धः। तत्र यस्य कस्याप्यनिर्धारिताभिधानस्य पारगतसुगतहरिहरहिरण्यगर्भादेर्देवस्येति सामान्यनिर्देशः। एतेन च माध्यस्थ्यमात्मनो दर्शितम्,॥ आह च ॥ "पक्षपातो न मे वीरे, न द्वेषः कपिलादिषु ॥ युक्तिमद्वचनं यस्य, तस्य कार्यः परिग्रहः ॥१॥" माध्यस्थ्यदर्शनेन चात्मीयवचसि श्रोतॄणामुपादेयताबुद्धिरुपाहिता, यस्मादनाग्रहादेव वक्तुः सकाशात्तत्त्वाधिगमो भवति। यदाह। "आग्रही बत निनीषति युक्तिं, तत्र यत्र मतिरस्य(स्ति)निविष्टा॥पक्षपातरहितस्य तु युक्ति–र्यत्र तत्र मतिरेति निवेशम् ॥१॥" रागस्याव्यभिचरितस्वरूपप्रतिपादनायाह–'समिति' सामस्त्येन क्लेशनं विबाधनम्, "क्लिश विबाधन" इति वचनात्, संक्लेशः ॥ १ ॥

आत्मनः स्वाभाविकस्वास्थ्यबाधनम्, तं जनयति उत्पादयतीति 'संक्लेशजननः'। अथ व्यभिचार एव विशेषण-मर्थवद्भवति, न चासंक्लेशजननोऽपि रागोऽस्ति येनासौ व्यवच्छिद्यते, न चाधिकृतमहादेवस्य प्रकारान्तरेणापि रागो विवक्ष्यत इति विशेषणमनर्थकम् । नैवम्। अविदितस्वभावस्य भावस्य स्वभावाविर्भावनाय विशेषण-स्याभिमतत्वाद्यथा "परमाणुरप्रदेश" इति । कोऽसावित्याह । जीवस्वरूपोपरञ्जनाद्' रागो 'ऽभिष्वङ्गलक्षणः । 'नास्त्येव' न विद्यत एव, इदं चावधारणं रागांशस्याप्यभावप्रतिपादनार्थम् । स चोपशान्तमोहावस्थायामुदयापेक्षया कदाचिद्रागभेदापेक्षया वा स्यात्। अतः सत्ताद्यपेक्षयापि(प्ये)तद्व्यवच्छेदार्थमाह। 'सर्वथा' सर्वैः प्रकारैर्बन्धोदयसत्ता-लक्षणैर्विषयरागस्नेहरागदृष्टिरागरूपैर्द्रव्यक्षेत्रकालभावाभिष्वङ्गस्वभावैर्वेति ॥ तथा, 'न च' नैव 'द्वेषोऽपि' अप्रीतिलक्षणो, न केवलं रागो नास्त्येव द्वेषोपि नास्त्येव सर्वथेत्यपिशब्दार्थः। केष्विल्याह 'सत्त्वेषु' प्राणिषु, सत्त्वग्रहणं च प्रायः संव्यवहारार्हप्राणिनां प्राणिविषयस्यैव क्रोधमानात्मकद्वेषस्य दर्शनादप्राणिषु पुनरसौ महामोहविजृम्भितमेव ॥ उक्तं च ॥ "किं एत्तो कट्ठयरं, मूढो जं थाणुगंमि अप्फिडिओ। थाणुस्स तस्स रूसइ, न अप्पणो दुप्पउत्तस्स[1]॥१॥" अत एव रागस्य विषयविशेषानभिधानेनोपादानं कृतम्। तस्य संव्यवहारार्हप्राणिनामपि जीवाजीवविषयतयोपलम्भात्। जीवाजीवविषयत्वादेव महाविषयतया प्राधान्याद्रागस्यादावुपादानम् ॥ नन्वप्रीतिमात्रलक्षणस्य द्वेषस्यानिष्टस्पर्शादि-विषयेष्वप्राणिष्वपि दर्शनाद्देवताविशेषस्य च सर्वविषयस्य द्वेषाभावस्य विवक्षितत्वान्न युक्तं सत्त्वग्रहणमिति। नैवम्, अनेन हि प्रतिपन्थ्यप्रतिपन्थिरूपप्राणिविषयद्वेषाभावप्रतिपादनेन निखिलजनविदितसपत्ननिपातनादिफलद्वेषवतीनां

१ किमेतस्मात्कष्टतरं मूढो यत्स्थाणावास्फालितः। स्थाणवे तस्मै रुष्यति नात्मने दुष्प्रयुक्ताय ॥ १ ॥

पराभिमतदेवतानां महत्त्वाभावस्य वक्तुमिष्टत्वात् यस्य च प्रतिपन्थ्यप्रतिपन्थिष्वपि (प्राणिष्वपि) द्वेषो नास्ति तस्याप्राणिषु सुतरामसौ न संभवतीति। किं स्वरूपो द्वेष इत्याह। 'शम' उपशमः क्षान्त्यादिभावः, स एव 'इन्धनं' दाह्यं दार्वादि, तस्य दहने 'दवानल' इव दवानलो वन्याग्निः 'शमेन्धनदवानलः'। इदमपि स्वरूपविशेषणं नतु व्यवच्छेदकं सर्वस्यापि द्वेषस्यैवं-रूपत्वादिति॥ तथा 'न च' नैव 'मोहोऽपि' मूढताऽपि, न केवलं रागो द्वेषश्च नास्ति सर्वथा, मोहोऽपि नास्त्येव सर्वथा यस्य, स महादेव इति प्रकृतम्। मोहमेव(मोहं च) स्वरूपतो विशेषयन्नाह। 'सत्' शोभनं यथावत्पदार्थपरिच्छेदितया तच्च त'ज्ज्ञानं' च बोधः सज्ज्ञानम्, सतां वा सद्भूतानामर्थानां ज्ञानं सज्ज्ञानम्, तच्छादयितुमावरीतुं शीलं धर्मो वा यस्य स 'सज्ज्ञानच्छादनः'। सज्ज्ञानच्छादकत्वादेव 'अशुद्धं' कल्मषमलकलङ्काङ्कितम् 'वृत्तं' वर्तनं चेष्टितं, करोतिशरीरिणां विदधाति यः सोऽ'शुद्धवृत्तकृत्'॥ किं भूतोऽसो महादेव इत्याह। त्रयो लोकाः समाहृताः त्रिलोकं त्रिभुवनं तत्र ख्यातः प्रसिद्धो महिमा महत्त्वं यस्य स 'त्रिलोक-ख्यातमहिमा'। त्रिलोकख्यातमहिमता च भवत्येव निखिलनरनिकरनाकिनिकायनायकलोककदर्थनसमर्थरागादिरिपुनिकर-निराकरणसमर्थस्य सकलपुरुषचक्रचूडामणेः पुरुषविशेषस्य। यदाह। "रागद्वेषमहामोहैः, कदर्थितजगज्जनैः। नाभिभूतं मनो यस्य, महिम्ना तस्य कः समः॥१॥" "दिवुक्रीडाविजिगीषाव्यवहारद्युतिस्तुति(मोदमद)कान्तिस्वप्नगतिषु" इति वचनाद्दिव्यते स्तूयते इति देवः स्तवनीयः, स च प्रेक्षावतामसाधारणगुणगणमाणिक्यमकरनिकेतनायमानत्वेन महानेव स्तवनीय इति महां-श्चासौ देवश्चेति 'महादेवः', 'स' इति असावेव, 'उच्यते'ऽभिधीयते महादेवस्वरूपवेदिभिर्न पुना रागादिरिपुपराकृतपराक्रम इति॥ अथ सर्वप्राणिनां रागादिमत्त्वोपलब्धेर्न सर्वथा तदभावः कस्यापि सम्भवतीति। नैवम्। सर्वप्राणिनामनुपलब्धेः प्रति-नियतप्राण्युपलब्धेश्च व्यभिचारित्वात्, किञ्च स्वात्मन्यपि कञ्चिद्विषयविशेषे रागाद्यभावदर्शनात्कस्यापि सार्वदिकः(दैहिकः)

सार्वत्रिकः सर्वथा च रागाद्यभावो भवन्नविरुध्यते। आह च। "दृष्टो रागाद्यसद्भावः, क्वचिदर्थे यथात्मनः॥ तथा सर्वत्र कस्यापि, तद्भावे नास्ति बाधकम् ॥१॥" तथा रागादयो भावाः सम्भाव्यमानसर्वथाक्षयाः देशतः क्षयोपलब्धेः । ये पौद्गलिकभावा अल्पबहुबहुतरादिक्षयेण देशतः क्षयवन्तस्ते सर्वतः क्षयवन्तोऽपि दृष्टाः, यथा रविकरावारिका घनपङ्क्तयः । देशतः क्षयवन्तश्च रागादयोऽतः सम्भाव्यमानसर्वथाक्षया इति ॥ आह च ॥ "देशतो नाशिनो भावा, दृष्टा निखिलनश्वराः ॥ मेघपङ्क्त्यादयो यद्व-देवं रागादयो मताः ॥१॥" अथ सम्भवत्यात्यन्तिकरागाद्यभावे तस्य चित्तवृत्तिरूपत्वेन दुर्विज्ञेयत्वा-त्कथं तद्वान् पुरुषविशेषोऽवगन्तव्य इति। अत्रोच्यते, तस्य रू(स्वरू) पाच्चरिताच्च। तथाहि। यस्य रूपमकामिनीकमनायुधम-नक्षमालं, चरितं च शृङ्गारादिरसापरिकरितमेकान्तशान्तरसानुरञ्जितमजेयान्तरारिजयबद्धासमञ्जसं च स एवासाविति प्रतिपत्तव्यम्। यदाह। "रागोऽङ्गनासङ्गमनानुमेयो, द्वेषो द्विषद्दारणहेति(तु)गम्यः। मोहः कुवृत्तागमदोषसाध्यो, नो यस्य देवः स स चैवमर्हन्॥१॥" तथा। "शृङ्गारादिरसाङ्गारै-र्न दूनं देहिनां हितम्। एकान्तशान्ततोपेत (ताद्येव)-मार्हतं (मर्हतां) वृत्तमद्भुतम्॥१॥" देवतान्तराणां तु रागाद्यभावानुचितरूपचरितत्वं सुप्रसिद्धमेव। तथाहि। "ब्रह्मा लूनशिरा हरिर्दृशि सरु-ग्व्यालुप्तशिश्नो हरः, सूर्योऽप्युल्लिखितोऽनलोऽप्यखिलभुक् सोमः कलङ्काङ्कितः॥ स्वर्नाथोऽपि विसंस्थुलः खलु वपुःसंस्थैरु-पस्थैः कृतः, सन्मार्गस्खलनाद्भवन्ति विपदः प्रायः प्रभूणामपि॥१॥" तथा। "यद्ब्रह्मा चतुराननः समभवद्देवो हरिर्वामनः, शक्रो गुह्यसहस्रसङ्कुलतनुर्यच्च क्षयी चन्द्रमाः॥ यज्जिह्वादलनामवापुरहयो राहुः शिरोमात्रतां, तृष्णे देवि विडम्बने-यमखिला लोकस्य युष्मत्कृता॥१॥" तथा ब्रह्मा लूनशिरा इत्येतत्कथम्?। अत्रोच्यते। किलैकदा त्रयस्त्रिंशद्देवकोट्यो मि-लिताः। तत्र च ते परस्परं मातापितृवर्णनं कुर्वन्ति स्म। तत्र च तैरुक्तं अहो महेश्वरस्य न ज्ञायेते मातापितराविति न

तावस्य बभूवतुः। इदं च देववचनमुपश्रुत्य ब्रह्मणः पञ्चममुखेन गर्दभमुखाकारेण समत्सरमभिहितम्। यदुत मय्यपि
सर्वपदार्थज्ञातरि जीवति सति क एवं ब्रुवते यथा महेश्वरस्य पितरौ न ज्ञायेते यतोऽहं जानामि। ततस्तस्य तौ वक्तुमारेभे।
ततो महेश्वरेणाप्रकाश्यप्रकाशनारंभ(नात्)कुपितेन कनिष्ठिकानखशुक्तिकरवालव्यापारणेन निखिलसुरसमूहसमक्षं झटिति
॥ ३ ॥ निकृत्तं तद्ब्रह्मणो गर्दभशिर इति॥ एवं ब्रह्मा लूनशिराः॥ अन्ये त्वाहुः॥ किल ब्रह्मवासुदेवयोरात्ममहत्त्वविषयो विवादः श्लो० २
समजनि। विवदन्तौ च तौ महादेवमुपस्थितौ। महादेवेन चाभिहितौ अलं भवतोर्विवादेन, य एव मदीयलिङ्गस्यान्तं लभते,
स एव युवयोर्महांस्तदन्यस्त्वितर इति। ततो वासुदेवो लिङ्गस्यान्तोपलम्भार्थमधस्ताद्गतवान्। स च प्रभूतं यावन्महा-
वेगेन गत्वापि अप्राप्ततदन्तः पातालवज्राग्निना च गन्तुमशक्तस्तत्संतापादेव च कृष्णीभूतशरीरः प्रतिनिवृत्य महादेवा-
न्तिकमाजगाम निवेदितवांश्च यथा नास्ति भवल्लिङ्गस्यान्त इति। ब्रह्मा तू (प्यु) परिष्टात्तथैव गतोऽप्राप्ततदन्तश्च निर्विण्णो
लिङ्गमस्तकान्निपतन्तीं मालामासादितवान् तां चासौ पप्रच्छ, कुतो भवतीति। तयोक्तम्, महेश्वरलिङ्गमस्तकात्।
कियांश्च ते कालस्ततः समागच्छन्त्याः। तयोक्तम्। षण्मासाः। ततो ब्रह्मणोक्तम्, अहं लिङ्गान्तोपलम्भाय प्रस्थितः
किं तु भवत्या यो मार्गः षड्भिर्मासैरतिक्रान्तस्तस्यातिबहुत्वान्निर्विण्णोऽहं निवर्तिष्ये ततो महादेवपृष्टया त्वया साक्ष्यं
दातव्यम्। तयापि प्रतिपन्नम्। ततस्तां गृहीत्वा शम्भुसमीपमाजगाम समागत्य चोक्तवान्। लब्धो मया लिङ्गान्तः
एषा च सम्प्रत्ययार्थं ततो माला मयाऽऽनीता। ततः पृष्टाऽसौ। तयाप्युक्तम्, एव(सर्व)मेतत्। ततोऽनन्तमपि मल्लिङ्गं सान्तं
व्यवस्थापयत एतावित्यसद्भूतभाषणकुपितेन शम्भुना कनिष्ठिकानखकुठारेण ब्रह्मणो गर्दभशिरो लूनं,माला त्वसत्यतया
शापितेति॥ हरिर्दशि सरुगित्येतदेवंश्रूयते॥ किल दुर्वासा महर्षिरुर्वशीं कामितवान्। तया चासावुक्तः। यद्यपूर्वेण ॥ ३ ॥

यानेन त्वं स्वर्गे समागच्छसि ततोऽहं भवन्तमिच्छामि । तेन च प्रतिपन्नमेतत् । गतवांश्चासौ वासुदेवसमीपम् । कृता च तेन तस्य प्रतिपत्तिः । पृष्टश्च तेनागमनकारणम् । उक्तं च तेन स्वर्गेऽहं गन्तुमिच्छामि । ततो भवता सभार्येण गोरूपधारिणा रथारूढोऽहं स्वर्गे नेतव्यो, न च गच्छता पश्चाद्भागो निरूपणीयः । प्रतिपन्नं च तद्भक्तिभयाभ्यां वासुदेवेन । नेतुं च प्रवृत्तः । ततः स्त्रीत्वात्तथाविधगमनशक्तिविकलां लक्ष्मीं प्राजनकदण्डेन मुनिः पुनःपुनः प्रणुनोद । तच्च स्नेहादसहमानेन वासुदेवेन तदभिमुखं निभालितम् । तेन च प्रतिपन्नवैतथ्यकारित्वात्कुपितेन वासुदेवो लोचने प्राजनकदण्डेन प्रणोदितः । इत्येवं हरिर्लोचने सरोगः संवृत्त इति ॥ अन्ये त्वाहुः ॥ किलैकदा वासुदेवः सरित्तटे तपस्यति स्म । तत्र च तापसी काचित् स्नाति स्म । तेन च तस्या निरावरणाया अङ्गेषु सकामा दृष्टिर्निवेशिता । तयापि लक्षितोऽसौ । ततः शापेन सरोगलोचनः कृत इति ॥ व्यालुप्तशिश्नो हर इत्येतत्पुनरेवम् ॥ किल दारुवनाभिधाने तपोवने तापसाः परिवसन्ति स्म । तदुटजेषु च भिक्षार्थं महेश्वरो गृहीतसमस्तस्वकीयालङ्कारो घण्टाटङ्कारतुम्बरुझङ्काररवमुखरितदिक्चक्रवालः समागच्छति [स्म]। तापसीश्च स्वदर्शनजनितकामविकाराः परिभुङ्क्ते स्म । ततोऽन्यदा ऋषिभिर्विज्ञातव्यतिकरैः कोपातिरेकाच्छापेन तल्लिङ्गस्य छेदः कृतः । तत्र निखिलजनानां तच्छेदोऽभवत्प्रजानुत्पत्तिश्च । ततो देवैरकाल एव संहारो मा भूदिति तापसाः प्रसादिताः । ते च लिङ्गं तथैव चक्रुरुक्तवन्तश्चेदम् । पूर्वकाले सदा स्तब्धमासीद्, इतस्तु भोगार्थित्व एव स्तब्धीभविष्यतीति । ततो जना अपि लिङ्गवन्तो जाताः प्रजोत्पत्तिश्चेति ॥ सूर्योऽप्युल्लिखित इत्येतदेवम् ॥ किल सूर्यस्य रन्नादेवी नाम भार्याऽऽसीत् । तस्याश्च यमाभिधानः पुत्रोऽभूत् । सा च आदित्यतापमसहमाना स्वकीयस्थाने स्वप्रतिच्छायां व्यवस्थाप्य समुद्रतटे गत्वा वडवारूपेण तिष्ठति स्म । प्रतिच्छाया च शनैश्चरभद्राभिधाने अपत्ये जनितवती ।

॥ ४ ॥

श्लो० २

अन्यदा यमेन बहिस्तादागतेन भोजनं याचिता प्रतिच्छाया, सा तु तन्न दत्तवती। ततः कोपात्तेन पार्ष्णिप्रहारेण प्रहता। तया च तत्पादः शापेन क्षयीकृतः। तेन च पितुस्तन्निवेदितम्। सोऽप्यचिन्तयत्, कथं स्वमातैवं करोति। ततो नूनं नेयमस्य मातेत्यालोचयता दृष्टा तन्माता वडवारूपा। ततः सूर्यस्तत्र गत्वा तामनिच्छन्तीमपि बलादेव बुभुजे। तत्र चाश्विनदेवौ जातौ। तया च रोषारुणनयनावलोकनेनासौ कुष्ठीकृतः। ततश्च सूर्यो नीरुजार्थं धन्वन्तरिमुपतस्थौ। स चोवाच। न शरीरोल्लेखनं विना तव प्रगुणतास्ति। ततः सूर्येण तनू(नु)ल्लेखनार्थं देववर्धकिरभ्यर्थितः। स तूवाच। सहिष्णुना भवितव्यम्, नो चेत्त्यक्ष्यामि त्वाम्। तेनोक्तम्। एवमस्तु। ततो मस्तकादारभ्य जानुनी यावदुल्लेखने कृते गाढं पीडितेन सूर्येण सीत्कारः कृतः। तत उल्लेखनादसौ विरराभेति। एवमनिच्छद्योषिद्भोगलक्षणात् सत्पुरुषमार्गस्खलनादसौ विपदं प्राप्तवानिति ॥ अन्ये पुनरित्थमाहुः ॥ वडवारूपां स्वभार्यामुपभुज्य सूर्यस्तत्पितुरुपालम्भं दत्तवान्। यथेयं त्वद्दुहिता मां विहायाऽन्यत्र तिष्ठति। स तूवाच । त्वच्छरीरतापमसहमाना किं करोत्वियं वराकी। ततो यद्यनया ते प्रयोजनं ततः शरीरमुल्लेखय । ततः सूर्यो देववर्धकिमुपतस्थौ शेषं तथैव ॥ अनलोऽप्यखिलभुगेवमुच्यते ॥ किल कश्चिदृषिः स्वकीयोटजावस्थितं वैश्वानरं भक्तिभरेणाहुतिभिः पूजयति स्म। स चान्यदा मदीयभार्या भवता रक्षणीयेत्यभिधाय प्रयोजनेन बहिर्गतः। ततः केनचिदृषिणागत्य वैश्वानरसमक्षमेव सोपभुक्ता। क्षणान्तरे समागतोऽसौ। तेन चेङ्गिताकारनिपुणतया परपुरुषसेवितेति लक्षितासौ। पृष्टश्च तेन वैश्वानरः सा च, यथेह कः समागत आसीत्। ततस्तौ न किञ्चिदूचतुः। ज्ञानोपयोगेन च ज्ञातोऽसावुपपतिस्तेन। ततो रक्षणीयस्यारक्षणात्पृच्छतश्चानिवेदनात् कुपितोऽसौ वैश्वानरं प्रति, सर्वभक्षको भवेत्ये(वत्वे)वं शापं (च) दत्तवान्। ततश्चाशुच्यादेरप्यसौ भक्षणस्वभावो ॥ ७ ॥

जातो यच्च किल वैश्वानरो भुङ्क्ते तत्सर्वं देवानामुपतिष्ठति, मुखं ह्यसौ देवानाम्। ततश्च देवैरशुच्यादिरसास्वादनादु-द्विग्नैर्ब्रानेनोपलब्धशापव्यतिकरैरागत्य स मुनिः प्रसादयितुमारेभे। न चासौ प्रससाद तथापि देवानुवृत्त्या वैश्वानरस्य सप्त जिह्वाः कृताः ततोऽसौ सप्तार्चिरुच्यते। तत्र द्वाभ्यामाहुतीरेवासौ भुङ्क्ते, ताश्च देवानाममृतत्वेनोपतिष्ठन्ति। पञ्चभिस्तु सर्वभक्षक एव स्थापित इति॥ सोमः कलङ्काङ्कित इत्येतत्पुनरेवम्॥ किल चन्द्रो बृहस्पतिसमीपेऽध्येतुं गतो देवाचार्यत्वात्तस्य। तेन च तद्गृहेऽधीयमा(या)नेन तद्भार्योपभुक्ता। ज्ञातं च बृहस्पतिना। शपितश्चासौ तेन, यथा रे गुरुतल्पग कलङ्किनाकालं भवितव्यमिति॥ स्वर्नाथो भगसहस्रसङ्कुलतनुः पुनरेवं संवृत्तः॥ किल गौतममुनेरहल्या नाम भार्या बभूव। तद्रूपाक्षिप्तचेताः सुरपतिस्तदुटजे प्रविश्य तां रेमे। बहिश्च समागतो मुनिः। सोऽपि तद्भयान्मार्जाररूपं कृत्वा तद्गृहान्निर्गत्य स्वर्गं गतवान्। मुनिस्तु नायं प्राकृतो बिडालः ततः कोऽयमिति पर्यालोचयन्निन्द्रं ज्ञातवान्। ततः कोपादसाविन्द्रदेहे भगसहस्रं शापेन विहितवान् स्वच्छात्रांश्च तदुपभोगाय प्रेषितवान्। मुनिस्तु नाययौ। देवैस्त्वसावृषिः प्रसादितस्तेन च भगा लोचनीकृता इति॥ ब्रह्मा चतुर्मुख एवं जातः॥ किल ब्रह्मा महोद्याने तपस्यति। तत्क्षोभणार्थं च रूपस्य तिलं तिलमादाय कृता तिलोत्तमा। अतस्तां प्रेषयामास, अन्याश्च। ताश्च तस्य समाधिध्वंस-नाय पूर्वाभिमुखस्थितस्याग्रे गीतनृत्याद्युपचारं चक्रुः। तत्राक्षिप्तलोचनमानसं वीक्ष्य दक्षिणतो गत्वा तथैव ताश्चक्रुः। स च ध्वस्तसमाधिरपि लज्जामानाभ्यां तदभिमुखो भवितुमशक्नुवंस्ताः प्रति द्वितीयं मुखं कृतवान्। एवमपरस्यां दिशि गतासु तृतीयमुत्तरतो गतासु चतुर्थम्। उपरि च गतासु पञ्चमं गर्दभमुखम्। एवं पञ्चमुखः संजातः॥ शम्भुना च गर्दभशिरसिच्छिन्ने चतुर्मुख इति॥ हरिस्तु वामन एवम्॥ किल बलेर्दानवस्य बन्धनार्थं विष्णुर्वामनो भूत्वा

मठिकानिमित्तं पदत्रयमात्रां भुवं तमेव याचितवान् । बलिना च प्रतिपन्ने तद्दाने पदत्रयेण त्रिलोकमाक्रम्य स्थानवर्जितं तं पाताले निहितवानिति ॥ क्षयी चन्द्रमाः कथम्?अत्रोच्यते ॥ किल दक्षस्य सप्तविंशतिर्दुहितरस्ताश्च चन्द्रेण परिणीताः। तासु च मध्ये रोहिण्यामासक्तोऽसौ । शेषाभिस्त्वपमानिताभिः पितुर्निवेदितम् । तेन शापात्क्षयीकृतोऽसौ । पुनर्देवैः प्रसादितेन चानुग्रहादेकत्र पक्षे वृद्धिमान् इति ॥ नागाः पुनरेवं द्विजिह्वाः ॥ किल देवैः क्षीरसमुद्रमथनादमृतमुत्पादितम्। तस्य च कुण्डानि भृतानि दर्भैश्चाच्छादितानि । सर्पास्तद्रक्षणे नियुक्ताः । तत एकान्तमाकलय्य तैस्तत्पातुमारब्धं दर्भैश्च तज्जिह्वा द्विधा कृताः ॥ अन्ये त्वाहुः ॥ अमृतपानप्रवृत्तानां तेषामिन्द्रेण वज्रक्षेपात् जिह्वाभेदो विहित इति ॥ राहोः शिरोमात्रता पुनरेवम् ॥ देवैः किलामृतस्य कुण्डानि भृतानि विष्णुश्च तद्रक्षायां नियुक्तः । ततश्च कार्यान्तरव्याक्षिप्तस्य तद्राहुणा पातुमारब्धम् । विष्णुना च तं तथा वीक्ष्य चक्रक्षेपेण तच्छिरश्छेदः कृतः । पीतामृतत्वात्तच्छिरोऽजरामरं संवृत्तमिति ॥ व्याख्यातं ब्रह्मा लूनशिरा इत्यादि वृत्तद्वयमिति ॥ तथा ॥ " स एष भुवनत्रयप्रथितसंयमः शङ्करो, बिभर्ति वपुषाऽधुना विरहकातरः कामिनीम् ॥ अनेन किल निर्जिता वयमिति प्रियायाः करं, करेण परिताडयञ् जयति जातहासः स्मरः ॥१॥" तथा ॥"दिग्वासा यदि तत्किमस्य धनुषा सास्त्रस्य किं भस्मना, भस्माथास्य किमङ्गना यदि च सा कामं परिद्वेष्टि किम् ॥ इत्यन्योन्यविरुद्धचेष्टितमिदं पश्यन्निजस्वामिनो, भृङ्गी सान्द्रसिरावनद्धपरुषं धत्तेऽस्थिशेषं वपुः ॥ १ ॥ " इति ॥ १-२ ॥ एवमपायापगमातिशयद्वारेण महादेवत्वमुक्तम् ॥ अथ गुणातिशयप्रतिपादनतस्तदेवाह ॥

यो वीतरागः सर्वज्ञो, यः शाश्वतसुखेश्वरः । क्लिष्टकर्मकलातीतः, सर्वथा निष्कलस्तथा ॥ ३ ॥

यः पूज्यः सर्वदेवानां, यो ध्येयः सर्वयोगिनाम् । यः स्रष्टा सर्वनीतीनां, महादेवः स उच्यते ॥ ४ ॥



॥ ५ ॥

(वृत्तिः) 'यो वीतरागः स महादेव उच्यते' इति क्रिया सर्वत्र योज्या। तत्र 'य' इति अनिर्दिष्टनामा' वि इति' विशेषेण इतो नष्टो रागः प्रेम यस्य स 'वीतरागः', द्वेषक्षय एव सति रागक्षयो भवतीति वीतद्वेष इत्यपि द्रष्टव्यम् ॥ तथा सर्वं समस्तं द्रव्यप्रदेशपर्यायरूपं वस्तु जानाति विशेषग्रहणतः समस्तावरणक्षयाविर्भूतकेवलसंवेदनेनावबुध्यत इति 'सर्वज्ञः'॥ सर्वज्ञत्वाव्यभिचरितत्वात् सर्वदर्शित्वस्येति सर्वदर्शीत्यपि दृश्यम्। ननु रागद्वेषमोहाभावः प्राक् प्रतिपादित एव, तत्प्रतिपादने च वीतरागत्वसर्वज्ञत्वे अवगते एव तत्स्वरूपत्वादेतयोरिति किमिह वीतराग[त्व]सर्वज्ञत्वोपादानेन? इति। अत्रोच्यते। यत एव रागादयो न सन्त्यत एव वीतरागः सर्वज्ञश्चायं(श्च) इत्येवं हेतुफलभावेन "मलक्षयात्पीतवर्णप्रकर्षवत्कनकम्" इत्यादिन्यायेन गुणातिशयविवक्षणाददोषः एवंविधन्यायस्य वाक्येषु सद्भिस्तत्र तत्राश्रितस्य दर्शनाच्च इति॥ अथवा कैश्चिद्वैराग्य(ग्यं च) ज्ञानादयः प्राकृता इष्यन्ते, ते च कैवल्यावस्थायां प्रकृतेर्वियुक्तत्वाद्विनिवर्तन्ते इति तन्मतव्यपोहार्थत्वाददोषः। तथाहि ज्ञानवैराग्यादयश्चैतन्यस्वभावाश्चैतन्यं चात्मनो रूपं "चैतन्यं पुरुषस्य स्वरूपमिति वचनात्" इति कथं तन्निवृत्तिः॥ अन्ये पुनराचार्याः यस्य संक्लेशजनन इत्यादिश्लोकद्वयमर्हच्छद्मस्थावस्थामाश्रित्य व्याख्यान्ति। यतः संक्लेशजननानि रागादिविशेषणानि तस्यामेवावस्थायां व्यवच्छेदफलानि भवन्ति। तथाहि । यस्य संक्लेशजनन एव रागो नास्ति शमेन्धनदवानल एव च द्वेषः सज्ज्ञानच्छादनाशुद्धवृत्तकारक एव च मोहो नास्ति न पुनः सत्तागततत्कर्मदलिकरूपोऽपि, स महादेव इति। यो वीतराग इत्यादि तु भवस्थकेवलिनमाश्रित्येति। ननु महत्त्वं छद्मस्थावस्थायामनुचितं ततो महत्तरावस्थान्तरस्य सद्भावात्। नैवम्। एवं हि सिद्धत्वलक्षणस्य महत्तमावस्थान्तरस्य सद्भावात् केवलिनोऽप्यमहत्त्वप्रसङ्ग इति। अन्यथा वा कथंचिदपौनरुक्त्यं भावनीयम्। इह च वीतरागग्रहणेन सरागादीनां महादेवत्वप्रतिषेध उक्तः।

तत्र च भावना प्रागुपदर्शिता। सर्वज्ञ इत्यनेन च कपिलस्य महादेवत्वमपाकृतम्, तस्य च तन्मतेनैव सर्वज्ञत्वासम्भवात्। तथाहि "बुद्ध्यध्यवसितमर्थं पुरुषश्चेतयते" इति तन्मतम्। बुद्धेश्च प्रकृतिविकारतया कैवल्यावस्थायां प्रकृतिनिवृत्तौ निवृत्तत्वात् पदार्थमात्रचेतनापि तस्य न स्यात् किं पुनः सर्वज्ञत्वम्। न चैष पक्षो ज्यायान्, चेतनात्मकपुरुषाभ्युपगमे हि चेतनाव्याघातकारिप्रकृतिवियोगे पुरुषस्य सर्वज्ञत्वेनैवाभ्युपगन्तुं युक्तत्वादिति॥ तथा अनेनैव बुद्धस्यापि महादेवत्वं किञ्चिज्ज्ञत्वान्निवारितम्। यदाहुस्तच्छिष्यकाः॥ "सर्वं पश्यतु वा मा वा, इष्टमर्थं तु पश्यतु॥ कीटसङ्ख्यापरिज्ञानं, तस्य नः क्वोपयुज्यते॥१॥" इति। किञ्च किञ्चिज्ज्ञत्वमपि तस्य न घटते एकस्याप्यर्थस्य सकलस्वपरपर्यायविशेषितस्यासर्वज्ञत्वेन ज्ञातुमशक्यत्वात्। यत आह॥ "एको भावः सर्वथा येन दृष्टः, सर्वे भावाः सर्वथा तेन दृष्टाः॥ सर्वे भावाः सर्वथा येन दृष्टा, एको भावः सर्वथा तेन दृष्टः॥१॥" अथ सर्वज्ञो न संभवत्येव सत्तासाधकप्रमाणाग्राह्यत्वात्तस्य शशविषाणवत्॥ यदाह॥ "सर्वज्ञोऽसाविति ह्येतत्, तत्कालैरपि बोद्धृभिः॥ तज्ज्ञानज्ञेयविज्ञान–शून्यैर्ज्ञातुं न शक्यते॥१॥" इति। नैवम्। सत्तासाधकप्रमाणाग्राह्यत्वस्यासिद्धत्वात्। तथाहि॥ ये अपचयधर्माणस्ते अत्यन्तक्षयिणोऽपि संभवन्ति यथा सामग्रीविशेषाद्वस्त्र(हेम)रत्नमलादयः॥ अपचयधर्मकाश्च ज्ञानावरणादयः, अतः सर्वथाक्षयिणोऽपि संभवन्ति इति। तेषां चात्यन्तापचये सर्वज्ञत्वादयो भवन्त्येव। न च ज्ञानावरणादीनामपचयधर्मत्वमसिद्धम्। स्वसन्तानेऽपि ज्ञानादेरुपचयविशेषानुभूत्या तदावरणापचयविशेषस्य सिद्धेरिति। उक्तं च॥ "दोषावरणयोर्हानि–र्निःशेषास्त्यतिशायनात्॥ क्वचिद्यथा स्वहेतुभ्यो, बहिरन्तर्मलक्षयः॥१॥" तथा य एते बन्धमोक्षपरलोकादयोऽतीन्द्रिया भावास्ते कस्यापि प्रत्यक्षा अनुमानगोचरत्वात् यथा अग्न्यादय इति। उक्तं च॥ "सूक्ष्मान्तरितदूरार्थाः, प्रत्यक्षाः कस्यचिद्यथा॥ अनुमेयत्वतोऽग्न्यादि–रिति

सर्वज्ञसंस्थितिः ॥१॥" इति । एवं च तज्ज्ञानज्ञेयविज्ञानशून्यैरप्यनुमानेनावगम्यतेऽसौ, अचतुर्वेदिना चतुर्वेदीवेति ॥ तथा 'यः शाश्वतसुखेश्वरः'। क्रिया पूर्ववत् । पुनर्यच्छब्दोपादानमवस्थाविशेषोपदर्शकम् । अयमभिप्रायः । वीतरागत्वं सर्वज्ञत्वं च रागादिक्षयादाविर्भूतं भवस्थकैवल्याद्यवस्थायां महत्त्वकारणम्, शाश्वतसुखेश्वरत्वादि तु विशेषणत्रयं भवातीतावस्थायां महत्त्वकारणमिति । तत्र शश्वन्नित्यं भवतीति शाश्वतम् । तच्च तत्सुखं च निर्बीजजनितानन्दरूपम्, अपरस्य शाश्वतत्वानुपपत्तेरिति । शाश्वतसुखम् । तस्य ईश्वरः स्वामी स्वयं तत्प्राप्तत्वात् 'शाश्वतसुखेश्वरः'। ननु सर्वस्यापि वस्तुनः क्षणिकत्वात् कथं सुखस्य शाश्वतत्वम् । अत्रोच्यते । न हि सर्वथा वस्तुनः क्षणिकत्वमुत्पादविनाशध्रौव्यरूपत्वात् । इह च बहु वक्तव्यं तत्तु पञ्चदशाष्टकादवसेयमिति । न च तथाभूतसुखस्यासंभव एव सुखावरणस्यापचयदर्शनेनात्यन्तिकस्यापि तदपचयस्य सम्भाव्यमानत्वादिति च पूर्वमुक्तप्रायमिति । अनेन च विशेषणेन प्रतिक्षणक्षयाघ्रातवस्तुवादिपरिकल्पितदेवस्य महत्त्वव्युदासः । तन्मतेन एवंविधसुखाद्यभावात् तदभावे च महत्त्वस्य कल्पनामात्रत्वादिति ॥ तथा क्लिष्टाः क्लेशस्वरूपभवहेतुत्वेन क्लेशिका याः कर्मकला ज्ञानावरणाद्यष्टप्रकारकर्मांशास्तेभ्योऽतीतोऽपेतो यः स 'क्लिष्टकर्मकलातीतः'। अनेन च ये मन्यन्ते "ज्ञानिनो धर्मतीर्थस्य, कर्तारः परमं पदम् । गत्वा गच्छन्ति भूयोऽपि, भवं तीर्थनिकारतः ॥१॥" इति तत्सम्मतदेवस्य महत्त्वव्युदासः ॥ क्लिष्टकर्मकलाभावे हि भवावतारासम्भवात् आह च । "अज्ञानपांशुपिहितं, पुरातनं कर्मबीजमविनाशि । तृष्णाजलाभिषिक्तं, मुञ्चति जन्माङ्कु(न्त)रं जन्तोः॥१॥" अशुभस्वरूपभवावतारिणश्च स्वकीयतीर्थनिकारासहिष्णोः प्राकृतस्येव कीदृशं महत्त्वमिति ॥ तथा 'सर्वथा' सर्वैः प्रकारै'र्निष्कलः' सर्वशरीरावयवविरहितस्तदभावे हि सुखसम्भवः । यदाह "शरीरमनसोरभावे दुःखाभावः" । सशरीरत्वेन च दुःखसंभवे कीदृशं महत्त्वम् । अनेन च ये

शरीरतोऽस्य महत्त्व प्रतिपन्नाः “विश्वतश्चक्षुरुत [illegible] मुखो विश्वतो बाहुरुत विश्वतस्पात्” इत्येतस्य वाक्यस्य श्रूयमाणार्थाभ्युपगमात्तन्मतं व्युदस्तमेवंविधस्यासम्भवात्तदसम्भवश्च विश्वस्य सर्वतश्चक्षुषैव व्याप्तत्वात्तदन्येषामवयवानामनाधारत्वेनाभावप्रसङ्गात्तैरेव वाक्यान्तरेणान्यथाविधस्य महत्त्वाभिधानेन स्वमतविरोधाच्च। आह च। “अपाणिपादो ह्यमनो (जवनो) ग्रहीता, पश्यत्यचक्षुः स शृणोत्यकर्णः। स वेत्ति विश्वं न च तस्य वेत्ता, तमाहुरग्र्यं पुरुषं महान्तम्॥१॥” अन्ये तु व्याख्यान्ति। क्लिष्टकर्मकलातीतो घातितघातिकर्मा भवस्थकेवली, सर्वथा निष्कलः क्षीणभवोपग्राहिकर्मा सिद्धकेवलीति। ‘तथा’ इति विशेषणसमुच्चये॥ तथा ‘यः पूज्यो’ऽभ्यर्चनीयः ‘सर्वदेवानां’ निःशेषभवनपत्यादीनां वीतरागत्वादिगुणयुक्तो हि पूज्यत एव देवादिभिः, तत्पूज्यत्वेनैव च तत्प्रतिमानामपि पूजनीयत्वम्। अथवा सर्वेऽखिला हरिहरादयो देवाः स्तुत्या येषां तद्दर्शनप्रतिपन्नानां समूहापेक्षया ते सर्वदेवा बौद्धादयस्तेषां यः पूज्यः यतस्ते निजं निजं शास्तारं पूजयन्तोऽप्युक्तलक्षणं महादेवमेव पूजयन्ति। तथाहि। तदुपदेशात् स्वर्गापवर्गसंसर्गो भविष्यतीति मन्यमानास्तमर्चयन्ति। उपदेशश्चोपेयाविसंवादी(दि)तत्परिज्ञाने वीतरागद्वेषत्वे च सत्येव भवति नान्यथा, ततश्च सर्वज्ञत्वादिगुणमध्यारोप्य स्वशास्तरि तं पूजयन्ति इति। अतः परमार्थतः स एव पूजितो भवतीति, ततः सुष्ठूक्तं ‘यः पूज्यः सर्वदेवानामिति’॥ तथा ‘यो ध्येयः’ ध्यातव्यः, ‘सर्वयोगिनां’ निःशेषाध्यात्मचिन्तकानां, योगिनोऽपि हि वीतरागत्वादिगुणगौरवोपगतमेव ध्यायन्ति तथाविधश्चोक्तप्रकारेणार्हन्नेवेति॥ तथा ‘यः स्रष्टा’ उत्पादकः प्रकाशनद्वारेण ‘सर्वनीतीनां’ समस्तनैगमादिनयानां सामादिनीतीनां वा। न च ऋषभेणैव सामादयो लोकव्यवहारार्थं नीतयः सृष्टा इति स एव महादेवो न त्वजितादय इति वाच्यं, सर्वस्य वाग्विषयस्य पूर्वगतश्रुतेः तैरप्युपदर्शितत्वात्तेऽपि नीतिस्रष्टार एवेति॥ ‘महादेवः स उच्यते’ इति व्याख्या-

तमेव । अथैतत्पूर्वमुक्तमपि पुनः कस्मादभिहितम् । अत्रोच्यते । सर्वभावानां द्विविधं स्वरूपं व्यावहारिकं पारमार्थिकं चेति । तत्र पारमार्थिकमहादेवत्वख्यापनार्थमिदमुक्तमिति ॥ ३–४ ॥ अधिकृतमहादेवं लक्षणान्तरेण लक्षयितुमाह ॥

एवंसद्वृत्तयुक्तेन, येन शास्त्रमुदाहृतम् ॥ शिववर्त्म परं ज्योति–स्त्रिकोटीदोषवर्जितम् ॥ ५ ॥

(वृत्तिः) 'एवम्' इति अनन्तरोक्तप्रकारं यत्सद्वृत्तमनिन्दितवर्तनं रागद्वेषक्षयकारणादिकं भवावस्थोचितं न पुनः शाश्वतसुखेश्वरत्वादि सिद्धावस्थोचितं, सिद्धावस्थायां शास्त्रोदाहरणाभावात्, तेन युक्तः संगतो योऽसौ 'एवंसद्वृत्तयुक्तः' तेन देवताविशेषेण, 'येन' अनिर्दिष्टनाम्ना, शिष्यन्ते पदार्था अनेनेति 'शास्त्र'मागमः, 'उदाहृतं' प्रणीतम्। किम्भूतमित्याह । शिवस्य मोक्षस्य वर्त्मेव वर्त्म पन्थाः 'शिववर्त्म'। तथा 'पर'मनन्यसाधारणं, 'ज्योतिरिव' ज्योतिः प्रदीपो महामोहतमःपटलप्रतिहतिप्रत्यलत्वात्। तथा तिसृषु कोटीषु आदिमध्यान्तलक्षणशास्त्रविभागेषु ये दोषाः पूर्वापरविरोधादयः। अथवा तिसृषु कोटीषु शास्त्रहेम्नः कषच्छेदतापरूपपरीक्षालक्षणासु ये दोषास्तदशुद्धयः, तैर्वर्जितं विरहितं यत्तत्तथा। स महादेव उच्यते इति प्रक्रमः। इह च 'एवंसद्वृत्तयुक्तेन' इत्यनेन कामुकाचितासमञ्जसानुष्ठानवतां शास्तॄणां महादेवत्वस्य निषेध उक्तः रागादिजन्यासमञ्जसचेष्टावतामपि महत्त्वकल्पने सर्वस्यापि तत्प्रसङ्गात् । आह च । "कामानुषक्तस्य रिपुप्रहारिणः, प्रपञ्चिनोऽनुग्रहशापकारिणः । सामान्यपुंवर्गसमानधर्मिणो, महत्त्वक्लृप्तौ सकलस्य तद्भवेत् ॥१॥" 'शास्त्रमुदाहृतम्' अनेन त्वनुदाहृतमपि ये शास्त्रमभ्युपगच्छन्ति तन्मतमपास्तम्। वदन्ति च तद्वादिनः तथा, "तस्मिन् ध्यानसमापन्ने, चिन्तारत्नवदास्थिते । निःसरन्ति यथाकामं, कुड्यादिभ्योऽपि देशनाः ॥१॥" तन्निरासश्चैवम् । "कुड्यादिनिःसृतानां तु, न स्यादाप्तोपदिष्टता । विश्वासश्च न तासु स्या–त्केनेमाः कीर्तिता इति ॥१॥" किञ्च। यद्यपि तस्य भगवतोऽचिन्त्यपुण्यसम्भारतया अ-

तिशयाः सन्ति, तथापि वक्तृत्वविरोधो नास्तीति किं वक्तृत्वव्याघातकारिणा इत्यादिनिर्गतदेशनाकल्पनेनेति । उदाहृतं शास्त्रं शिववर्त्म इत्यनेन पुरुषानुदाहृतस्याप्रामाण्यमाविष्करोति तस्यासम्भवादेव । तदसम्भवश्चैवम् । या या वचनरचना सा सा पौरुषेयी दृष्टा यथा कुमारसम्भवादिः वचनरचना च वेद इति तस्मात्पौरुषेयोऽसाविति, विरुद्धं च विवक्षाताल्वादिव्यापारपुरुषधर्मजन्यवचनस्वरूपस्य वेदस्यापौरुषेयत्वम् । यदाह । " ताल्वादिजन्मा ननु वर्णवर्गो, वर्णात्मको वेद इति स्फुटं च । पुंसश्च ताल्वादिरतः कथं स्या-दपौरुषेयोऽयमिति प्रतीतिः ॥१॥" 'शास्त्रं शिववर्त्मे'त्यनेन तु ये शास्त्रस्याप्रामाण्यमाश्रितास्तन्मतमपास्तम् । ते हि मन्यन्ते, प्रत्यक्षगोचरेऽप्यर्थे वचनस्य व्यभिचारदर्शनान्न तत्प्रमाणम् । न चैतद्युक्तम् । सुनिश्चिताप्तप्रणीतस्यैव वचनस्य प्रमाणत्वाभ्युपगमात्, न चेतरवचनस्य व्यभिचारमुपलभ्य सर्ववचनानामप्रामाण्यं व्यवस्थापयितुं युक्तम्, इतरथा मरीचिकानिचयचुम्बिजलावभासिप्रत्यक्षमसत्यमवलोकितमिति सकलाध्यक्षाणामप्रामाण्यप्रसङ्गः, तदप्रामाण्ये चानुमानमपि न प्रमाणं स्यात् प्रत्यक्षपूर्वकत्वादनुमानस्य, तथा च द्वे एव प्रमाणे प्रत्यक्षमनुमानं चेति वचनं व्याहतिमापद्येतेति । उक्तं चागमप्रामाण्यवादिभिः । " स्वर्गाद्यतीन्द्रियगतौ वच एव मानं, येनान्यमानविषया न भवन्ति ते हि । किञ्चागमाभिहितमेव समर्थयन्ति, नापूर्वमर्थमनुशासति साधनज्ञाः ॥१॥" 'त्रिकोटीदोषवर्जितम्' अनेन तु यत्परीक्षाक्षमं न भवति न तच्छिववर्त्मेत्युक्तं भवति । अपरीक्षाक्षममपि धर्मशास्त्रं कैश्चिदभ्युपगतम् । यदाहुः । " पुराणं मानवो धर्मः, साङ्गो वेदश्चिकित्सितम् । आज्ञासिद्धानि चत्वारि, न हन्तव्यानि हेतुभिः ॥१॥" इति । इहार्थेऽन्ये वदन्ति । "अस्ति वक्तव्यता काचि-त्तेनेदं न विचार्यते । निर्दोषं काञ्चनं चेत्स्या-त्परीक्षाया बिभेति किम् ॥१॥" आप्तशास्तृकैः पुनराप्तवचनमेवमनूद्यते । "निकषच्छेदतापेभ्यः (पाभ्यां), सुवर्णमिव पण्डितैः । परीक्ष्य भिक्षवो

ग्राह्यं, मद्वचो न तु गौरवात् ॥१॥" शास्त्रगतकषादिपरीक्षाश्रयस्य च स्वरूपमिदम्। विधिप्रतिषेधौ कषः। आह च। "पाणिवहाईयाणं, पावट्ठाणाण जो उ पडिसेहो ॥ झाणज्झयणाईणं, जो य विही एस धम्मकसो[2] ॥१॥" विधिप्रतिषेधयो-+रबाधकस्य सम्यक्तत्पालनोपायभूतस्यानुष्ठानस्योक्तिः छेदः । यदाह । "बज्झाणुट्ठाणेणं, जेण न बाहिज्जए तयं नियमा ॥ संभवइ य परिसुद्धं, सो पुण धम्मम्मि छेओत्ति[3] ॥२॥" बन्धमोक्षादिसद्भावनिबन्धनात्मादिभाववादः तापः । उक्तं च। "जीवाइभाववाओ, बन्धाइपसाहगो इहं तावो ॥ एएहिं परिसुद्धो, धम्मो धम्मत्तणमुवेइ[4] ॥३॥" कषादिशुद्धयस्त्वेवम् । मनोवाक्कायकरणकारणानुमतिभिरर्थानर्थाश्रयेणाजन्म सूक्ष्मबादराणां प्राणातिपातादीनां प्रतिषेधो रागादिनिग्रहाप्रतिघहेतुभूतयोश्च ध्यानतपसोर्विधिर्यत्र शास्त्रे तत्कषशुद्धम्। आह च। "सुहुमो असेसविसओ, सावज्जे जत्थ अत्थि पडिसेहो ॥ रागाइविअ(उ)ट्टणसहं, झाणाइ य एस कसमुद्धो[5] ॥४॥" यत्र पुनरेवंविधौ प्रतिषेधविधी न भवतो न तत्कषशुद्धम्। यथा। "प्राणी प्राणिज्ञानं, घातकचित्तं च तद्गता चेष्टा। प्राणैश्च विप्रयोगः, पञ्चभिरापद्यते हिंसा ॥१॥" तथा। "अनस्थां(स्थि)जन्तूनां शकटभरवधे एका हिंसा ।" यत्रैव विसंवादस्तदेव चासत्यमित्यादि । अयं हि पापप्रतिषेधो नात्यन्तिकः। तथा। "अष्टवर्गान्तकं बीजं, कवर्गस्य च पूर्वकम् ॥ वह्निनोपरिसंयुक्तं, गगनेन विभूषितम् ॥१॥" अर्हमित्यर्थः।

---

२ प्राणिवधादिकानां पापस्थानानां यस्तु प्रतिषेधः । ध्यानाध्ययनादीनां यश्च विधिरेष धर्मकषः ॥ + विधिप्रतिषेधयोरबाधयोरबाधकस्य इति ॥ पाठान्तरे ॥

३ बाह्यानुष्ठानेन येन न बाध्यते तन्नियमात् । सम्भवति च परिशुद्धं स पुनर्धर्मे छेद इति ॥

४ जीवादिभाववादो बन्धादिप्रसाधक इह तापः । एतैः परिशुद्धो धर्मो धर्मत्वमुपैति ॥

५ सूक्ष्मोऽशेषविषयः सावद्ये यत्रास्ति प्रतिषेधः । रागादिविकुट्टनसहं ध्यानादि च एष कषशुद्धः ॥

"एतदेव परं तत्त्वं, योऽभिजानाति तत्त्वतः॥ संसारबन्धनं छित्त्वा, स गच्छेत्परमां गतिम्॥१॥" इत्यादिस्वरूपश्च ध्यानविधिः न रागादिविकुट्टनसहः, यतः सुचिरमप्येतद्ध्यानध्यायिनस्तदुत्तरकालं रागादयः स्वरूपस्था एव। रागादीनां पुनरैहिकामुष्मिकापायजनकत्वचिन्तयितुस्तदुत्तरकालमपि ते प्रतनवो भवन्तः सर्वथा न भवन्त्यपीति रागाद्यपायध्यानं श्रेष्ठो विधिः। अत एव ध्यानान्तरत्यागेन ध्यानविधिरेवं सद्भिरभिधीयते। "रागद्दोसकसाया-सवाइकिरियासु वट्टमाणाणं॥ इहपरलोगावाए, झाएज्जाऽवज्जपरिवज्जी[6] ॥१॥"तथा छेदशुद्धं शास्त्रं यत्र समितिगुप्त्यादिकमुक्तविधिप्रतिषेधोपायभूतमनुष्ठानमुपदर्श्यते। आह च। "एएण न बाहिज्जइ, संभवइ य तं दुगंपि नियमेण॥ एयवयणेण सुद्धो, जो सो छेएण सुद्धोत्ति[7] ॥८॥" तदशुद्धं प्राणिसंरक्षणशुभध्यानकरणविशुद्धपिण्डग्रहणेषूपायभूतवस्त्रपात्राद्युपकरणप्रतिषेधप्रवणं बोटिकशास्त्रमिव इति। अथवा देवताराधनाय साधूनां सङ्गीतककरणाद्युपदेशप्रवणम्। आह च। "जह देवाणं संगी-यइकज्जम्मि उज्जमो जइणो॥ कन्दप्पाईकरणं, असब्भवयणाभिहाणं च[8] ॥६॥" तापशुद्धं पुनः॥ "आत्मास्ति, स परिणामी, बद्धः स तु कर्मणा विचित्रेण॥ मुक्तश्च तद्वियोगात्, हिंसाहिंसादि तद्धेतुः ॥१॥" इत्यादिभाववादप्रधानम्। एवंविधे ह्यात्मादिवस्तुनि सति विधिप्रतिषेधादिकं सर्वमुक्तस्वरूपमुपपद्यते न पुनरन्यथाविध इति। तदन्यथाविधवस्तुप्रणयनप्रवणं तु शास्त्रं तापाशुद्धमिति। तदेवं येनैवंविधं 'शास्त्रमुदाहृतं महादेवः स उच्यत' इति। एतमर्थं

६ रागद्वेषकषायास्रवादिक्रियासु वर्तमानानाम्। इहपरलोकापायान् ध्यायेत् अवद्यपरिवर्जी॥
७ एतेन न बाध्यते सम्भवति च तद्द्वयमपि नियमेन। एतद्वचनेन शुद्धो यः स छेदेन शुद्ध इति॥
८ यथा देवानां संगीतकादिकार्ये उद्यमो यतेः। कन्दर्पादिकरणमसभ्यवचनाभिधानं च॥

मुख्यवृत्त्या वदतानेन श्लोकेन गौणवृत्त्या नानाविधोऽर्थ उक्त इति ॥ ५ ॥

ननु यो वीतरागः स कथमाराध्यते । न तावत्स्तुत्यादिभिः सरागत्वप्रसङ्गात्, नापि निन्दादिभिः स्तवादीनां वैयर्थ्यप्रसङ्गात्, उपेक्षयाप्याराधने स एव दोष इत्याशङ्कयाह ॥

**यस्य चाराधनोपायः, सदाज्ञाभ्यास एव हि ॥ यथाशक्ति विधानेन, नियमात्स फलप्रदः ॥ ६ ॥**

(वृत्तिः) न केवलं येन शास्त्रमुदाहृतं स महादेव उच्यते, 'यस्य च' देवविशेषस्य, 'आराधनोपाय आज्ञाभ्यास एव स महादेव उच्यते' इति चशब्दार्थः क्रियासम्बन्धश्चेति । 'आराधनं' प्रसादनं आराधनमिवाराधनं तत्फलप्रसाधकत्वात् न पुनराराधनमेव सरागत्वप्रसङ्गात् । प्रसादाभावेऽपि च प्रसादफलसिद्धिर्वस्तुस्वभावत्वात् । आह च । " वत्थुसभावो एसो, अचिन्तचिन्तामणी महाभागे ॥ थोऊणं तित्थयरे, पाविज्जइ वंछिओ अत्थो[९] ॥ १ ॥ " तथा । " उवगाराभावम्मि वि, पुज्जाणं पूयगरस उवयारो ॥ मन्ताइसरणजलणा-इसेवणे जह तहेहं पि[१०] ॥२॥" तत्र 'उपायो' हेतुः, 'आराधनोपायः', 'सदा' सर्वस्मिन्नपि दुःषमादिकालेऽपि । अनेन किल विशिष्टकाल एवाज्ञायाः कर्तुं शक्यत्वात्तदैव तदभ्यास आराधनोपायः, दुःषमायां त्वनागमिकप्रवृत्तिरप्युपायस्तत्राज्ञाया अभ्यसितुमशक्यत्वादिति यस्य मतिः स्यात्तन्मतं प्रत्यस्तम् । यत आह । " समइ(ति)पवित्ती सव्वा, आणाबज्झत्ति भवफला चेव ॥ तित्थयरुद्देसेणवि, न तत्तओ सा तदुद्देसा[११] ॥१॥" आज्ञायन्ते अधिगम्यन्ते मर्यादया अभिविधिना वा अर्था यया सा 'आज्ञा' आगमः, तस्या 'अभ्यासो'

---

९ वस्तुस्वभाव एषोऽचिन्त्यचिन्तामणीन्महाभागान् । स्तुत्वा तीर्थकरान् प्राप्यते वाञ्छितोऽर्थः ॥
१० उपकाराभावेऽपि पूज्यानां पूजकस्योपकारः । मन्त्रादिस्मरणज्वलनादिसेवने यथा तथेहापि ॥
११ स्वमतिप्रवृत्तिः सर्वा आज्ञाबाह्येति भवफलैव । तीर्थकरोद्देशेनापि न तत्त्वतः सा तदुद्देशा ॥

ग्रहणभावनापारतन्त्र्यलक्षण 'आज्ञाभ्यासः' स 'एव,' न पुनस्तद्भक्तितोऽपि तदाज्ञापेता प्रवृत्तिः ॥ पूजादिकं तु तदाज्ञाभ्यास एव तस्य द्रव्यस्तवभावस्तवरूपत्वात् । 'हि' शब्दो वाक्यालङ्कारार्थः । ननु यथोक्तस्याज्ञाभ्यासस्यातिदुष्करत्वात्कालसंहननादिदोषवतामनाराधनप्रसङ्ग इत्याशङ्कायामाह । 'यथाशक्ति' शक्तेः शरीरसामर्थ्यस्यानतिक्रमो यथाशक्ति, तेन शक्तेरनुल्लङ्घनेनागोपायनेन चेत्यर्थः । एवं हि वीर्याचारः कृतो भवति । आह च । "अणिगूहियबलविरिओ, परक्कमइ जो जहुत्तमाउत्तो ॥ जुंजइ य जहाथामं, नायव्वो वीरियायारो[12] ॥१॥" आज्ञाभ्यासस्यैव विशेषणार्थमाह । 'विधानेन' विधिना, द्रव्यक्षेत्रकालभावानुवर्तनलक्षणेनायव्ययतुलनारूपेणागमिकन्यायेनेति भावः । आह च । "तम्हा सव्वाणुन्ना, सव्वनिसेहो य पवयणे नत्थि ॥ आयं वयं तुलेज्जा, लाहाकंखिव्व वाणियओ[13] ॥ १ ॥" ननु आज्ञाभ्यासेनाराधितो यद्यसौ फलप्रदोऽनाराधितस्तर्हि न तथा स्यादित्येवं विषमवृत्तिरसौ स्यादित्यत आह । 'नियमात्' अवश्यम्भावेन, 'स' इति स एव आज्ञाभ्यासो यस्य सम्बन्धी, 'फलप्रदो'ऽभिप्रेतार्थसाधको, 'महादेवः स उच्यते' इति प्रकृतम् । अतस्तस्य फलाप्रदायित्वात् तदाज्ञाभ्यासस्यैव च फलसाधकत्वात् कुतो विषमवृत्तित्वदोष इति ॥ ६ ॥ एतदेव दृष्टान्तेन समर्थयन्नाह ।

सुवैद्यवचनाद्यद्वद्-व्याधेर्भवति संक्षयः । तद्वदेव हि तद्वाक्याद्-ध्रुवः संसारसंक्षयः ॥ ७ ॥

(वृत्तिः) 'सुवैद्यवचनात्' भिषग्वरोपदेशात्, 'यद्वत्' येन प्रकारेण, 'व्याधेः' कुष्ठादिरोगस्य, 'भवति' जायते, 'संक्षयः' सामस्त्येन अपुनर्भावितया विनाशः, 'तद्वदेव' तेनैव प्रकारेण तथैव इत्यर्थः, 'तस्य' देवविशेषस्य, 'वाक्यम्' उपदेशः, 'तद्वा-

12 अनिगूहितबलवीर्यः पराक्रमते यो यथोक्तमायुक्तः । युङ्क्ते च यथास्थाम ज्ञातव्यो वीर्याचारः ॥

13 तस्मात् सर्वानुज्ञा सर्वनिषेधश्च प्रवचने नास्ति । आयं व्ययं तोलयेत् लाभाकांक्षीव वाणिजकः ॥

क्यम्' तस्मात्, 'भुवो'ऽवश्यम्भावी,संसरणं संसारः तस्य संक्षयोऽत्यन्तविनाशः 'संसारसंक्षयो' भवति। इह संसारश-ब्देन भवाद्भवान्तरसंचरणमुच्यते; तेन च परलोकसत्ताऽऽवेदिता। तत्र चेदं प्रमाणम्। "कार्यं कार्यान्तराज्जातं, कार्यत्वा-दन्यकार्यवत्॥ जन्मेदमपि कार्यत्वं, न व्यतिक्रम्य वर्तते॥१॥" जन्म च ज्ञानसन्तानविशेषलक्षणमतस्तद्रूपमेव तदुपादान-कारणभूतं जन्मान्तरमनुमीयते न पित्रादिरूपं, तस्योपादानकारणत्वे हि तद्धर्मानुगमप्रसङ्ग इति॥७॥

प्रकरणार्थमुपसंहरन् विवेचितगुणमहादेवनमस्करणाय आह।

एवम्भूताय शान्ताय, कृतकृत्याय धीमते॥ महादेवाय सततं, सम्यग्भक्त्या नमोनमः॥८॥

(वृत्तिः) 'एवम्भूताय' अनन्तरोक्तरूपां गुणसम्पदं प्राप्ताय न परपरिकल्पिताय, 'शान्ताय' रागद्वेषोपशमवते, अ-नुवादरूपं चेदं विशेषणमिति न पुनरुक्तता शङ्कनीया, तथा 'कृतानि' विहितानि न तु विधेयानि समाप्तप्रयोजनत्वात्, 'कृत्यानि' कार्याणि येन स 'कृतकृत्यः' तस्मै,तथा धीः केवलज्ञानलक्षणा बुद्धिर्यस्यास्ति स धीमान् तस्मै'धीमते,'एतदप्य-नुवादपरमेव। अन्यैस्तु 'धीमते' सत्त्ववत इति व्याख्यातम्, 'महादेवाय'अनन्तरनिर्णीतस्वरूपाय,'सततम्' अनवरतम्, 'सम्यगिति'प्रशंसार्थो निपातः, 'सम्यक्' चासौ 'भक्ति'श्च प्रीतिविशेषः सम्यग्भक्तिस्तया 'सम्यग्भक्त्या,''नमोनम' इति नमस्कारोऽस्तु। द्विर्वचनेन तु भक्तिकृतं सम्भ्रममुपदर्शितवानिति॥८॥

॥ प्रथमाष्टकविवरणं समाप्तम्॥१॥

## ॥ अथ द्वितीयं स्नानाष्टकम् ॥

उक्तक्रमेण निर्णीतमहत्त्वस्य देवस्य पूजादिकं विधेयम् । तच्च स्नानपूर्वकमिति स्नाननिरूपणायाह ॥

**द्रव्यतो भावतश्चैव, द्विधा स्नानमुदाहृतम् ॥ बाह्यमाध्यात्मिकं चेति, तदन्यैः परिकीर्त्यते ॥ १ ॥**

(वृत्तिः) द्रवति गच्छति तांस्तान् पर्यायानिति द्रव्यं पुद्गलादि, तस्मात् द्रव्यात् 'द्रव्यतो' जललक्षणं कारणभूतम्१ देहदेशलक्षणं वा शोधनीयं २ मललक्षणं वाऽपनेयं द्रव्यमाश्रित्येत्यर्थः३। अथवा द्रव्यतोऽपरमार्थतो द्रव्यशब्दस्याप्राधान्यार्थत्वात् ४,अथवा द्रव्यतो भावस्नानकारणत्वेन कारणार्थत्वात् द्रव्यशब्दस्य ५॥ तथा भवनं भावः परिणामस्तस्माद्'भावतः' शुभध्यानलक्षणं कारणभूतम् १ उपयोगभावात्मकजीवलक्षणं वा शोधनीयम् २ अथवौदयिकभावकारणभूतकर्ममललक्षणमपनेतव्यं भावमाश्रित्येत्यर्थः३। भावतः परमार्थतो वेति ४॥ 'चशब्दः' समुच्चये,'एवकारो'ऽवधारणे। एवं च अनयोः प्रयोगः,'द्रव्यतो भावत एव च'। ततश्च द्रव्यभावभेदेनैव, 'द्विधा' द्विप्रकारम् नामादिभेदेन तु चतुर्धापि,केवलमिह चतुष्प्रकारत्वं स्नानस्य नाश्रितं नामस्थापनयोः प्ररूपणामात्रोपयोगित्वात्, नहि स्नानस्य नामस्थापने जिननामस्थापने इव प्रमोदहेतुत्वेन पूजागोचरत्वेन च सोपयोगे इति ।अथवा एवकारो द्विधा इत्यनेन सम्बध्यते। तथा च,'द्रव्यतो भावतश्चेति' एवं 'द्विधैव स्नानमुदाहृतं,' न तु सप्तधा, यथाहुरेके। "सप्त स्नानानि प्रोक्तानि,स्वयमेव स्वयम्भुवा॥ द्रव्यभावविशुद्ध्यर्थ–मृषीणां ब्रह्मचारिणाम्॥१॥ आग्नेयं वारुणं ब्राह्मं, वायव्यं दिव्यमेव च॥ पार्थिवं मानसं चैव,स्नानं सप्तविधं स्मृतम् ॥२॥ आग्नेयं भस्मना स्नान–मवगाह्यं तु वारुणम् ॥आपो हिष्ठामयं ब्राह्मं (मंत्रस्नानमित्यर्थः)। वायव्यं तु गवां-

रजः॥१॥सूर्यदृष्टं तु यद्वृष्टं,तद्दिव्यं ऋषयो विदुः। पार्थिवं तु मृदा स्नानं,मनःशुद्धिस्तु मानसम्॥३॥" इति सप्तविधस्नानकथनं ह्यनर्थकम्। यतो यद्बाह्यमलक्षालनप्रत्यलं तत्सर्वं द्रव्यस्नानमेव,यच्चान्तरमलोन्मूलनायालं तद्भावस्नानम्, यत्पुनरन्यथाविधं तदस्नानमेव। न च गोरजसा मन्त्रेण वा मलापनयनमुपलभ्यते इति,अतःसुष्ठूच्यते द्विधैव,अथवा द्रव्यतो द्विधैव भावतश्च द्विधैव इत्येवं द्विधाशब्दप्रयोगो,द्वैविध्यं च प्रधानाप्रधानभेदात्, तच्च दर्शयिष्यत इति। 'द्रव्यतो भावतश्चैवमिति' पाठान्तरे तु 'एवंकार' उपदर्शनार्थः। तेन 'एव'मनेन प्रकारेण,'द्विधा स्नानं'शुचीकरणम्,'उदाहृतं'तत्त्ववेदिभिरभिहितम्॥ अत्रार्थे परेषामप्यविप्रतिपत्तिमुपदर्शयन्नाह। बहिर्भवं 'बाह्यं' शारीरं, अध्यात्मे मनसि भवं'आध्यात्मिकं' मानसमित्यर्थः। 'चशब्दः' समुच्चयार्थः। 'इति' रूपप्रदर्शने। एवं चानयोः प्रयोगः बाह्यमिति १ आध्यात्मिकमिति च २। 'तदिति' क्रमेण द्रव्यस्नानं भावस्नानं च। 'अन्यैरिति' जैनव्यतिरिक्ततीर्थिकविशेषैः, 'परिकीर्त्यते' संशब्द्यते इति ॥ १ ॥

तत्र द्रव्यस्नानप्रतिपादनायाह ॥

जलेन देहदेशस्य, क्षणं यच्छुद्धिकारणम् ॥ प्रायोऽन्यानुपरोधेन, द्रव्यस्नानं तदुच्यते ॥ २ ॥

(वृत्तिः) 'जलेनाऽ'म्भसा न भस्मादिभिस्तैर्हि द्रव्यस्नानं न भवति मलाद्यपनयनासमर्थत्वात्तेषाम्, "गन्धलेपापहं शौचम्" इति स्नानलक्षणाच्च। 'देहदेशस्येति'शरीरत्वग्लक्षणावयवस्य,इह च देहग्रहणेन "सचेलस्नानेन देवार्चनं कार्यमिति"मतमपाकृतं जलार्द्रवस्त्राणां स्नानतया अप्रतीतेः। देशस्येत्यनेन तु ये मन्यन्ते। "एका लिङ्गे गुदे तिस्र–स्तथैकत्र करे दश॥ उभयोः सप्त विज्ञेया,मृदः शुद्धौ मनीषिभिः ॥१॥ एतच्छौचं गृहस्थानां,द्विगुणं ब्रह्मचारिणाम्॥ त्रिगुणं वानप्रस्थानां, यतीनां च चतुर्गुणम् ॥२॥" इति, ते उपहसिता भवन्ति। न हि तैरेवं शौचं प्रति प्रयत्नवद्भिरपि लिङ्गगुदाद्य-

त्ताभोगस्य शौचं कर्तुं शक्यं किन्तु त्वङ्मात्रस्यैव, न च कर्णनासादीनामेवं शौचं तैर्विधीयते, न चैतान्यशुचीनि न भवन्तीति । 'क्षणं'मुहूर्तं यावन्न तु प्रभूतकालम् । 'यदिति' स्नानम् । 'शुद्धिकारणं'मलविलयहेतुः,'प्रायो' बाहुल्येन, प्रायोग्रहणात्तथाविधरोगग्रस्तस्य क्षणमपि शुद्धिकारणं न भवतीति दर्शितम् । कुतः पुनः क्षणमेव शुद्धिकारणमित्यत आह । 'अन्यस्य'प्रक्षालितमलापेक्षयापरस्य मलस्याऽ'नुपरोधो'ऽनिरोधोऽप्रतिषेधोऽन्यानुपरोधस्तेन 'अन्यानुपरोधेन'हेतुना,न हि स्नानं मलाश्रयस्वभावत्वाच्छरीरस्य मलान्तरमुपरोद्धुं शक्नोतीति। 'त'दित्येवंविधं स्नानं,किमित्यत आह 'द्रव्या'ण्युक्तलक्षणानि नीरादीन्याश्रित्य'स्नानं' द्रव्यभूतं वा 'स्नानमुच्यते'अभिधीयते स्नानलक्षणविद्भिः अन्ये तु 'प्रायोऽन्यानुपरोधेने' त्येतदित्थं व्याचक्षते । प्रायो बाहुल्येनान्येषां जलस्वरूपातिरिक्तानामनुपरोधोऽव्यापादनं प्रायोऽन्यानुपरोधस्तेनेति ॥२॥

अथैतस्यैव कर्तृवशात्प्रधानाप्रधानतां दर्शयन्नाह ।

कृत्वेदं यो विधानेन, देवतातिथिपूजनम् ॥ करोति मलिनारम्भी, तस्यैतदपि शोभनम् ॥ ३ ॥

(वृत्तिः) 'कृत्वा' विधाय, 'इदम्'अनन्तरोदितं द्रव्यस्नानम्, 'य'इति तदधिकारवान् धार्मिकः, 'विधानेन' धार्मिकजनोचितस्नानविधिना॥ " भूमीपेहणजलछाण–णाइ जयणा उ होइ ण्हाणाओ[14]॥" इत्येवंरूपेण, ततः किमित्याह। 'देवता'ऽनन्तरविवेचितस्वरूपमहादेवलक्षणा, अतति सततमप्रतिबद्धविहारितया गच्छतीति 'अतिथिः'अविद्यमाना वा तिथिरुपलक्षणत्वादुत्सवादयश्च यस्येति अतिथिः सन्मार्गनिरतो यतिः । उक्तं च। " तिथिपर्वोत्सवाः सर्वे, त्यक्ता येन

१४ भूमिप्रेक्षणजलच्छाननादियतना तु भवति स्नानादौ ॥ एसो विसुद्धभावो अणुहवसिद्धो च्चिय बुहाणं ॥१॥ इति गाथापूर्तिः॥

महात्मना ॥ अतिथिं तं विजानीया—च्छेषमभ्यागतं विदुः॥१॥" इति॥ तयोः पूजनमुचितसत्कारकरणं 'देवतातिथिपूजनं' त'त्करोति' विधत्ते। द्वितीयव्याख्यानपक्षे तु 'विधानेन देवतातिथिपूजनं करोती'त्येवं सम्बन्धः,। कोऽसावित्याह। मलिनो अवद्यमलयुक्त आरम्भो व्यापारो मलिनारम्भः सोऽस्यास्तीति 'मलिनारम्भी' सावद्ययोगादनिवृत्तो गृहस्थ इत्यर्थः। कुतीर्थिकशिक्षणाभिप्रायप्रवणं चेदं विशेषणं। तच्छिक्षणं चैवम्। हे कुतीर्थिका यदि यूयं मलिनारम्भिणस्तदा युष्माकमिदं द्रव्यस्नानं कर्तुमुचितं नान्यथा, तथाहि अस्य विशुद्धभावहेतुत्वेन प्रशस्यता, स च विशुद्धो भावो निर्मलारम्भाणां सदैवास्तीति किमेतेनेति॥ 'तस्य'इति देवतातिथिपूजनकर्तुर्मलिनारम्भिणः, 'एतदपीति' न केवलं वक्ष्यमाणस्वरूपं भावस्नानं शुभपरिणामरूपत्वाच्छोभन'मेतदपि' द्रव्यस्नानमपि,'शोभनं' साधु,सत्यपि सावद्यत्वे प्रायो मददर्पादिहेतुत्वे च शुभभावाहेतुत्वात् , तस्येतिविशेषणात्तदन्यस्य त्वशोभनमेव तदिति सिद्धं भावशुद्ध्यर्थनिमित्तत्वादिति ॥ ३ ॥

शोभनमिदमित्युक्तं तत्समर्थनार्थमाह।

भावशुद्धिनिमित्तत्वा—त्तथानुभवसिद्धितः ॥ कथञ्चिद्दोषभावेऽपि, तदन्यगुणभावतः ॥ ४ ॥

(वृत्तिः) भावोऽध्यवसायस्तच्छुद्धिर्निर्मलता तस्या निमित्तं कारणं तस्य भावो 'भावशुद्धिनिमित्तत्वं' तस्मादेतदपि शोभनमिति प्रकृतम्। न चास्य भावशुद्धिहेतुत्वमप्रसिद्धमित्याह। 'तथा' तेनैव प्रकारेण भावशुद्धिनिमित्ततयैव, यो'ऽनुभवः' संवेदनं तस्य या 'सिद्धिः' प्रतीतिः सा तथाऽनुभवसिद्धिस्तस्या'स्तथाऽनुभवसिद्धितः'। अथ द्रव्यस्नानं भावशुद्धिनिमित्तमपि सदप्कायिकादिजीवहिंसादोषदूषितत्वादशोभनमेवेत्याशङ्क्याह। 'कथञ्चित्' केनापि प्रकारेणाप्कायि-

कादिविराधनालक्षणेन, 'दोषभावेऽपि' हिंसालक्षणावद्यसद्भावेऽपि न केवलं दोषाभावे इति अपिशब्दार्थः । तस्माद्धिंसादोषाद् योऽन्यो गुणः सम्यग्दर्शनशुद्धिलक्षणः स तदन्यगुणस्तस्य भावो लाभस्तदन्यगुणभावस्तस्मा'त्तदन्यगुणभावतः' । आह च ॥ "पूयाए कायवहो, पडिकुट्ठो सो उ, किंतु जिणपूया ॥ सम्मत्तसुद्धिहेउत्ति, भावणीया उ निरवज्जा[15] ॥१॥" यत् स्नानं पूजार्थं तत्पूजाङ्गत्वात्तद्व्यपदेशमर्हतीति । इह च हेतुप्रयोग एवम् । द्रव्यस्नानमपि शोभनं भावशुद्धिनिमित्तत्वात्, यद्यद्भावशुद्धिनिमित्तं तत्तच्छोभनं यथा चैत्यवन्दनम्, भावशुद्धिनिमित्तं च द्रव्यस्नानं तस्माच्छोभनमिति । अथायमसिद्धो हेतुरित्यत्रोच्यते । यद्यथानुभूयते तत्तथा प्रतिपत्तव्यं यथा विचित्रं सुखादिसंवेदनम्, अनुभूयते च भावशुद्धिनिमित्ततया द्रव्यस्नानम्, तस्माद्भावशुद्धिनिमित्तं तदिति । अथ कथञ्चित्सदोषत्वात्कथं शोभनत्वमस्येत्यत्रोच्यते । यद्यद्विशिष्टतरगुणान्तरोत्पत्तिहेतुस्तत्तद्दोषसद्भावेऽपि शोभनं, यथा श्रमपङ्कादिदोषोपेतमपि तृड्विच्छेदादिविशिष्टतरगुणहेतुः कूपखननं, विशिष्टसम्यग्दर्शनशुद्ध्यादिगुणहेतुश्च द्रव्यस्नानमिति ॥४॥ यदि भावशुद्धिनिमित्तत्वात् शोभनं द्रव्यस्नानं तर्हि करोति मलिनारम्भीति कस्माद्भिहितममलिनारम्भिणोऽपि तथैव तस्य शोभनत्वादित्याशङ्क्याह ॥

अधिकारिवशात् शास्त्रे, धर्मसाधनसंस्थितिः ॥ व्याधिप्रतिक्रियातुल्या, विज्ञेया गुणदोषयोः ॥ ५ ॥ ९ श्लो०

(वृत्तिः) अधिकारोऽस्यास्तीति अधिकारी योग्याऽनुष्ठाता (नी) तस्य वशोऽपेक्षा 'अधिकारिवशस्तस्मा'न्न यथाकथञ्चिदित्यर्थः। 'शास्त्रे' सुनिश्चितासागमे, 'धर्मसाधनयोः' प्रस्तुतयोर्द्रव्यस्नानभावस्नानलक्षणयोः, 'संस्थितिः' सम्यग्व्यवस्था, 'धर्म-

१५ पूजायां कायवधः, प्रतिकुष्टः स तु, किंतु जिनपूजा ॥ सम्यक्त्वशुद्धिहेतुरिति भावनीया तु निरवद्या ॥ १ ॥

साधनसंस्थितिः,' किंरूपेयमित्याह।'व्याधिप्रतिक्रियातुल्या' रोगचिकित्साव्यवस्थासमाना,'विज्ञेया' सद्गुरूपदेशादर्थिभिरवसेया। कयोर्विषय इत्याह। 'गुणदोषयोः' गुणदोषावाश्रित्येत्यर्थः। इयमत्र भावना। यथातुरवशाद्व्याधिचिकित्सा गुणकरी दोषकरी च तथा मलिनारम्भीतरलक्षणानुष्ठातृवशाद् द्रव्येतरस्नानरूपे धर्मसाधने गुणदोषकरे, द्रव्यस्नानं मलिनारम्भिण एव गुणकरं नेतरस्येति हृदयम्, यतो मलिनारम्भी देवतोद्देशेन स्नानादावधिकारी न त्वितरः। केचित्पुनर्वदन्ति मलिनारम्भ्यपि नेहाधिकारी यस्माद्वक्ष्यति अयमेव ग्रन्थकारः। "+धर्मार्थं यस्य वित्तेहा, तस्यानीहा गरीयसी॥ प्रक्षालनाद्धि पङ्कस्य, दूरादस्पर्शनं वरम्॥ १॥" इति। अनेन धर्मार्थं सावद्यप्रवृत्तिर्निषिद्धा, तथा "*शुद्धागमैर्यथालाभम्" इति वक्ष्यत्यनेन च पुष्पत्रोटनाभावो देवसम्बन्ध्यारामाभावश्च दर्शित इति। न चायं सम्यगुल्लापः। यतः स्नानं विधेयतया देवार्चनार्थमुपदिष्टमेव। यदाह। "तत्थ सुइणा दुहा वि हु, दव्वे ण्हाएण सुद्धवत्थेण" इति[१६]। अथ प्रासङ्गिक(कः)स्नानापेक्षोऽयमुपदेशो न तु देवतोद्देशिकः। एतदपि न सङ्गतम्। एवं हि यदा कदाचित् स्नातो भवेत् तदा दैवतार्चनं कुर्यादित्युपदिष्टं स्यान्न नित्यकृत्यतया, नित्यकृत्यं चतत्। आह च। "वंदंति चेइयाइं, तिक्कालं पूइऊण विहिणा उ[१७] इति"। यच्चोक्तं धर्मार्थमित्यादिना धर्मार्थं सावद्यप्रवृत्तिर्निषिद्धा तत् सत्यम्, केवलं स निषेधः सर्वविरता(त्य)पेक्षया तदधिकारेऽस्य श्लोकस्याधीतत्वात्, गृहस्थापेक्षया तु सावद्यप्रवृत्तिविशेषोऽनुज्ञात एव। यदाह। " दव्वत्थए

---

१६ तत्र शुचिना द्विधापि हु द्रव्ये स्नातेन शुद्धवस्त्रेण इति॥ भावे उ अवत्थोचियविसुद्धवित्तिप्पहाणेण॥ इति गाथापूर्तिः।

१७ वन्दन्ते चैत्यानि त्रिकालं पूजयित्वा विधिना तु॥ + अष्टक ४ श्लोक ६ * अष्टक ३ श्लोक २

कूवदिट्ठंतोत्ति[१८] ॥ ” तथा वाणिज्यादिसावद्यप्रवृत्तिरपि काचित्कस्यचिन्न दुष्टा विषयविशेषपक्षपातरूपत्वेन पापक्षयगुणबीजलाभहेतुत्वात्, यथा संकाशस्य । “संकाशश्रावको हि प्रमादाद्भक्षितचैत्यद्रव्यो निबद्धलाभान्तरायादिक्लिष्टकर्मा चिरपर्यटितदुरन्तसंसारकान्तारोऽनन्तकालाल्लब्धमनुष्यभावो दुर्गतनरशिरःशेखररूपः पारगतसमीपोपलब्धस्वकीयपूर्वभव वृत्तान्तः पारगतोपदेशतो दुर्गतत्वनिबन्धनकर्मक्षपणाय यदहमुपार्जयिष्यामि द्रव्यं तद् ग्रासाच्छादनवर्जं जिनायतनादिषु नियोक्ष्ये इत्यभिग्रहं गृहीतवान्,कालेन च निर्वाणमवाप्तवानिति।” अथ युक्तं संकाशस्यैतत्तथैव तत्कर्मक्षयोपपत्तेर्न पुनरन्यस्य । नैवम् । सर्वथैवाशुभस्वरूपव्यापारस्य विशिष्टनिर्जराकारणत्वायोगादिति। यत्तु “शुद्धागमैर्यथालाभमित्यादि” तन्न स्वयं पुष्पत्रोटननिषेधपरम्, किन्तु पूजाकालोपस्थिते मालिके दर्शनप्रभावनाहेतोर्वणिक्कला न प्रयोक्तव्येत्यस्यार्थस्य ख्यापनपरम्। इतरथा श्रूयते ॥ “सुव्वइ दुग्गइनारी, जगगुरुणो सिन्दुवारकुसुमेहिं । पूयापणिहाणेणं,उववन्ना तियसलोगम्मि[१९] ॥ १ ॥ ” इति वचनं व्याहन्येत । न हि तया यथालाभं न्यायोपात्तवित्तेन वा तानि गृहीतानि, इति । तथा चैत्यसम्बन्धितया ग्रामादीनां प्रतिपादनान्नारामाद्यभावः प्रोक्तः॥ यदाह ॥ “चोएइ चेइयाणं, रुप्पसुवण्णाइ गामगावाइं। ल(म?)ग्गंतस्स हु मुणिणो,तिगरणसुद्धी कहं णु भवे? [२०] ॥१॥ भण्णइ एत्थ विभासा,जो एयाइं सयं विमग्गेजा॥ न हु तस्स

१८ द्रव्यस्तवे कूपदृष्टान्त इति । १९ श्रूयते दुर्गतिनारी, जगद्गुरोः सिन्दुवारकुसुमैः। पूजाप्रणिधानेन, उपपन्ना त्रिदशलोके ॥१॥
२० चोदयति चैत्येभ्यो, रूप्यसुवर्णादि ग्रामगवादि । लग (मार्गय)तो मुनेः, त्रिकरणशुद्धिः कथं नु भवेत् ? ॥१॥

हुज्ज सुद्धी, अह कोइ हरेज्ज एयाइं २१ ॥ २ ॥ सव्वत्थामेण तहिं, संघेणं होइ लग्गियव्वं तु । सचरित्तचरित्तीणं, एयं सव्वेसिं कज्जं तु २२ ॥३॥" तदेवं मलिनारम्भिणो धर्मार्थं स्नानादिकमविरुद्धमिति स्थितम् । ननु यतिरत्र कस्मान्नाधिकारी, यतः कर्मलक्षणो व्याधिरेको द्वयोरपि यतिगृहस्थयोरतस्तच्चिकित्सापि पूजादिलक्षणा समैव भवति, ततो यद्येकस्याधिकारः कथं नापरस्य । अथ "स्नानमुद्वर्तनाभ्यङ्गं, नखकेशादिसंस्क्रियाम् ॥ गन्धमाल्यं च धूपं च, त्यजन्ति ब्रह्मचारिणः ॥१॥" इति वचनात् यतेः स्नाने तत्पूर्वकत्वाद्देवार्चनस्य तस्मिंश्च नाधिकारः । नैवम्, भूषार्थस्यैव तस्य निषेधात् । अथ सावद्यनिवृत्तोऽसाविति तत्र नाधिकारी । ननु यदि यतिः सावद्यान्निवृत्तस्ततः को दोषो यत्स्नानं कृत्वा देवतार्चनं न करोति, यदि हि स्नानपूर्वकदेवतार्चने सावद्ययोगः स्यात्तदासौ गृहस्थस्यापि तुल्य इति तेनापि न कर्तव्यं स्यात् । अथ गृहस्थः कुटुम्बाद्यर्थेऽपि सावद्ये प्रवृत्तस्तेन तत्रापि प्रवर्ततताम्, यतिस्तु तत्राप्रवृत्तत्वात्कथं स्नानादौ प्रवर्तते इति । ननु यद्यपि कुटुम्बाद्यर्थं गृही सावद्ये प्रवर्तते तथापि तेन धर्मार्थं तत्र न प्रवर्तितव्यं स्यात्, यतो "नैकं पापमाचरितमित्यन्यदप्याचरितव्यं स्यात्"। अथ कूपोदाहरणात् पूजादिजनितमारम्भदोषं विशोध्य गृही गुणान्तरमासादयतीति युक्तं गृहिणः स्नानपूजादि । ननु यथा गृहिणां कूपोदाहरणात् स्नानादि युक्तमेवं यतेरपि तद्युक्तमेव, एवं च कथं स्नानादौ यतिर्नाधिकारी॥इति पूर्वपक्षः ॥ अत्रोच्यते, यतयो हि सर्वथा सावद्यव्यापारान्निवृत्ताः, ततश्च कूपोदाहरणेनापि

२१ भण्यतेऽत्र विभाषा, य एतानि स्वयं विमार्गयेत् ॥ नैव तस्य भवेच्छुद्धिरथ कश्चिद्धरेदेतानि ॥१॥
२२ सर्वस्थाम्ना तत्र, सङ्घेन भवति लगितव्यं तु ॥ सचारित्राचारित्रिणां एतत् सर्वेषां कार्यं तु ॥२॥

तत्र प्रवर्तमानानां तेषामवद्यमेव चित्ते स्फुरति न धर्मः, तत्र सदैव शुभध्यानादिभिः प्रवृत्तत्वात्, गृहस्थास्तु सावद्ये स्वभावतः सततमेव प्रवृत्ता न पुनर्जिनार्चनादिद्वारेण स्वपरोपकारात्मके धर्मे, तेन तेषां तत्र प्रवर्तमानानां स एव चित्ते लगति न पुनरवद्यमिति कर्तृपरिणामवशादधिकारी(रे)तरौ मन्तव्याविति स्नानादौ गृहस्थ एवाधिकारी न यतिरिति। आगमोऽप्येवं व्यवस्थितः। यदाह ॥ "छज्जीवकायसंजमो, दव्वत्थए सो विरुज्झए कसिणो। तो कसिणसंजमविऊ, पुप्फाईयं न इच्छन्ति[२३] ॥१॥ अकसिणपवत्तगाणं, विरयाविरयाण एस खलु जुत्तो॥ संसारपयणुकरणे, दव्वत्थए कूवदिट्ठंतो[२४]॥२॥ तथा द्रव्यस्तवरूपत्वात् पूजायाः, तस्य च भावस्तवहेतुत्वात्प्रधानत्वाच्च यतीनां न द्रव्यस्तवेऽधिकारः। अत एव सामायिकस्थः श्रावकोऽप्यनधिकारी, तस्यापि सावद्यनिवृत्ततया भावस्तवारूढत्वेन श्रमणकल्पत्वात्। अत एव गृहिणोऽपि प्रकृत्या पृथिव्याद्युपमर्दनभीरोर्यतनावतः सावद्ये संक्षेपरुचेर्यतिक्रियानुरागिणो न धर्मार्थं सावद्यारम्भप्रवृत्तिर्युक्ता। यदाह॥ "असदारम्भपवत्तो, जं च गिही तेण तेसि विन्नेया॥ तन्निव्वित्तिफलच्चिय, एसा परिभावणीयमिणम्[२५] ॥१॥" न चायमनन्तरोदितोऽसदारम्भप्रवृत्तस्तत्कथं तस्य तन्निवृत्तिफलत्वेन स्नानादौ सावद्यारम्भे प्रवृत्तिर्युक्ता। अतः स्थितमिदं न सर्व एव सर्वस्याधिकारी, किन्तु य एवैकत्राधिकारी स एवान्यत्रानधिकारीति ॥ ९ ॥

२३ षड्जीवकायसंयमो द्रव्यस्तवे स विरुध्यते कृत्स्नः। तस्मात् कृत्स्नसंयमविदः पुष्पादिकं नेच्छन्ति ॥१॥

२४ अकृत्स्नप्रवर्तकानां विरताविरतानामेष खलु युक्तः। संसारप्रतनुकरणो द्रव्यस्तवे कूपदृष्टान्तः ॥१॥

२५ असदारम्भप्रवृत्ता यच्च गृहिणस्तेन तेषां विज्ञेया। तन्निवृत्तिफलैवैषा परिभावनीयमिदम् ॥१॥

अथ भावस्नानप्रतिपादनायाह ।

ध्यानाम्भसा तु जीवस्य, सदा यच्छुद्धिकारणं ॥ मलं कर्म समाश्रित्य, भावस्नानं तदुच्यते ॥६॥

(वृत्तिः)'ध्यानं' शुभचित्तैकाग्रतालक्षणं धर्मादि, तदेव 'अम्भो' जलं 'ध्यानाम्भः' तेन, 'तु' शब्दः पुनरर्थः स च द्रव्यस्नानभावस्नानयोर्विपर्ययलक्षणविशेषाभिधानार्थः, 'जीवस्य' आत्मनः, 'सदा' सर्वकालम्, 'यदि'ति स्नानम्, 'शुद्धिकारणं' निर्मलत्वहेतुः, 'तद्भावस्नानमुच्यते' इति सम्बन्धः। प्रक्षालनीयप्रदर्शनायाह। 'मलं' मालिन्यनिबन्धनम्, 'कर्म' ज्ञानावरणादिलक्षणम्, 'समाश्रित्य' अङ्गीकृत्य, 'भावान्' ध्यानादीनाश्रित्य 'भावतो' वा परमार्थतः स्नानं 'भाव स्नानं,' 'तदि'त्येवम्भूतम्, 'उच्यते' तत्स्वरूपविद्भिरभिधीयत इति ॥६॥ अस्यैव कारकभेदेनोत्तमानुत्तमस्वरूपतामाह ॥

ऋषीणामुत्तमं ह्येत-न्निर्दिष्टं परमर्षिभिः ॥ हिंसादोषनिवृत्तानां, व्रतशीलविवर्धनम् ॥ ७ ॥

(वृत्तिः) पश्यन्ति यथावद्वस्त्विति 'ऋषयो' मुनयस्तेषाम्, 'हि' शब्दोऽवधारणार्थस्तेन ऋषीणामेव, 'उत्तमं' प्रधानम्, 'एतत्' भावस्नानम्, 'निर्दिष्टं' प्रतिपादितम्, 'परमर्षिभिः' मुनिपुङ्गवैः सर्वज्ञैरित्यर्थः। ऋषीणामुत्तममिति विशेषणसामर्थ्यादन्येषां त्वनुत्तममेव तदिति सिद्धम्, तेषां विशिष्टधर्मध्यानाभावादिति । अथवा 'ऋषीणामुत्तममेतदेवे'त्येवमवधारणं दृश्यम्, ततश्चोत्तमत्वात्तदेव तेषां विधेयं न तु देवार्चनार्थं द्रव्यस्नानमपि । किम्भूतानामृषीणामित्याह । 'हिंसा' प्रमत्तयोगात्प्राणव्यपरोपणं, स एव 'दोषो' दूषणं, हिंसादोषस्तस्मो 'निवृत्ता' उपरता ये ते तथा तेषां 'हिंसादोषनिवृत्तानाम्। ननु ऋषय एवंविधा एव भवन्तीति विशेषणमिदमनर्थकम्। नैवं हेतुतयास्योपन्यासात्। ततश्च ऋ-

पीनामुत्तममिदं हिंसादोषनिवृत्तत्वादिति वाक्यार्थः स्यात् । किम्भूतमिदमित्याह । 'व्रतानि' महाव्रतानि, 'शीलं' च समाधिः, अथवा व्रतानि मूलगुणाः, शीलमुत्तरगुणास्तेषां विशेषेण 'वर्धनं' वृद्धिकारणं 'व्रतशीलविवर्धनम्,' भावस्नानं हि धर्मशुक्लध्यानरूपं तच्चैतद्विवर्धनं भवत्येवेति ॥ ७ ॥ उपसंहरन्नाह ।

स्नात्वानेन यथायोगं, निःशेषमलवर्जितः ॥ भूयो न लिप्यते तेन, स्नातकः परमार्थतः ॥ ८ ॥ ८ श्लो०

(वृत्तिः) 'स्नात्वा' शौचं विधाय, 'अनेन' भावहेतुद्रव्यस्नानेन भावस्नानेन च, 'यथायोगं' यथासम्बन्धं द्रव्यस्नानेन मलिनारम्भी भावस्नानेन चेतरः, 'निःशेषमलवर्जितः' पारम्पर्येण साक्षाच्च सकलकर्ममलमुक्तो भवतीतिशेषः, शेषकरणं विना एककर्तृकत्वाभावात् क्त्वाप्रत्ययो न स्यादिति शेषः कृत इति । एवम्भूतश्च सन् 'भूयः' पुनरपि, 'न लिप्यते' नोपदिह्यते, 'तेन' कर्ममलेन, एवं च 'स्नातकः' स्नातः, 'परमार्थतो' वस्तुवृत्त्या भवति । स्नानान्तरस्नातस्तु परमार्थतः स्नातो न भवति विवक्षितमलविगमाभावात् पुनर्मलोपलेपनाच्चेति । ततो हे कुतीर्थिका यदि यूयमक्षेपेण पारमार्थिक (परमार्थतः) स्नातका भवितुमिच्छथ तदा भावस्नानेनैव स्नात, मा द्रव्यस्नानेन, मलिनारम्भिणामेव तस्योक्तत्वादिति हृदयम् । अथवा एवं व्याख्या । 'स्नात्वा अनेने' त्यनन्तरोक्तभावस्नानेन 'यथायोगं' यथायुक्ति, 'निःशेषमलवर्जितः' सन्, 'भूयो न लिप्यते तेन' कोऽसावित्याह, 'स्नातकः परमार्थतः' पारमार्थिकस्नातक इत्यर्थः । इह च क्त्वाप्रत्ययो रूढिवशादिति ॥ ८ ॥

॥ द्वितीयाष्टकविवरणं समाप्तम् ॥ २ ॥

## ॥ अथ तृतीयं पूजाष्टकम् ॥

:*:

स्नानान्तरं देवता पूजनीयेति पूजास्वरूपाभिधानायाह । तथा ये मन्यन्ते श्वेतभिक्षवो देवतामभ्युपगम्यापि न तां पूजयन्तीति तेषामनर्थकस्तदभ्युपगम इति तन्मतनिरासाय च पूजाष्टकमाह ॥

**अष्टपुष्पी समाख्याता, स्वर्गमोक्षप्रसाधनी ॥ अशुद्धेतरभेदेन, द्विधा तत्त्वार्थदर्शिभिः ॥ १ ॥**

(वृत्तिः) 'अष्टौ पुष्पाणि' पूजात्वेन समाहृतानि 'अष्टपुष्पी,' अथवा 'अष्टौ पुष्पाणि' कुसुमानि यस्यां पूजायां सा 'अष्टपुष्पी' च। नदादिदर्शनाच्च ईप्रत्ययः। इयं च जघन्यपदमाश्रित्योच्यते न पुनरष्टावेव पुष्पाण्यारोपणीयानि। यद्वक्ष्यति "+स्तोकैर्वा बहुभिर्वापि" इति। अष्टपुष्प्या च देवपूजने कारणं वक्ष्यति। द्विधेत्यस्येह सम्बन्धात् द्वाभ्यां प्रकाराभ्यां 'द्विधा' द्विप्रकारा। 'समाख्याता' सम्यगभिहिता। 'तत्त्वार्थदर्शिभिः' इतीह सम्बध्यते। तत्त्वभूता अर्था जीवादयस्तान्, तत्त्वेन वा परमार्थवृत्त्या अर्थान्पश्यन्तीत्येवंशीलास्तत्त्वार्थदर्शिनस्तैः। कथं द्विधेत्याह। 'अशुद्धेतरभेदेन' अशुद्धा च सावद्यतया इतरा च निरवद्यतया अशुद्धेतरे ताभ्यां कृत्वा तयोर्वा भेदो विलक्षणता 'अशुद्धेतरभेद'स्तेन। इह चेतराशब्दस्य पुंवद्भावो, "वृत्तिमात्रे सर्वादीनां पुंवद्भाव" इति वचनात्। फलतस्तां निरूपयन्नाह। 'स्वर्गमोक्षप्रसाधनी' आद्या देवलोकसाधनी, द्वितीया तु निर्वाणसाधनीत्यर्थः। पाठान्तरे तु स्वर्गमोक्षप्रसाधनाद्धेतोर्द्विधा, एतदेव कथम्, अशुद्धेतरभेदेन इत्येवं पदयोजना कार्येति ॥ १ ॥ अशुद्धां श्लोकद्वयेन तावदाह ॥

---

+ अष्टक ३ श्लोक. २ ॥

शुद्धागमैर्यथालाभं, प्रत्यग्रैः शुचिभाजनैः ॥ स्तोकैर्वा बहुभिर्वापि, पुष्पैर्जात्यादिसम्भवैः ॥ २ ॥
अष्टापायविनिर्मुक्त–तदुत्थगुणभूतये ॥ दीयते देवदेवाय, या साऽशुद्धेत्युदाहृता ॥ ३ ॥

(वृत्तिः) 'शुद्धो' निर्दोष 'आगमः' प्राप्त्युपायो येषां तानि 'शुद्धागमानि,' न्यायोपात्तवित्तेनाचौर्येण वा गृहीतानीत्यर्थः, तैः 'पुष्पैः,' 'दीयते देवदेवाय या साऽशुद्धेत्युदाहृता' इति सम्बन्धः । कथं दीयते इत्याह । लाभस्यानतिक्रमेण 'यथालाभं' प्रवचनप्रभावनार्थमुदारभावेन मालिकाद्यथालाभगृहीतैर्देशकालापेक्षया चोत्तममध्यमजघन्येषु यानि लब्धानि तैः पुष्पैरिति भावना । 'प्रत्यग्रैः' अपरिम्लानैः, 'शुचिभाजनैः' पवित्रपटलकाद्याधारैः, इतरथा स्नानादिशौचमपि न मनोनिर्वृत्तिमापादयेदिति । 'स्तोकै'रल्पैः प्रत्यपायापगमं पुष्पदानादष्टभिरित्यर्थः । 'बहुभि'र्भूरिभिस्तदुद्देशेन बहूनां दानात् वाशब्दौ स्तोकबहुपुष्पपुञ्जयोर्बहुमानप्रधानस्य फलम्प्रत्यविशेषप्रतिपादनार्थौ । अपिशब्दश्च समुच्चयार्थ इति । 'पुष्पैः' कुसुमैः, 'जात्यादिसम्भवै'र्मालतीप्रभृतिप्रस(भ)वैरादिशब्दाद्विचकिलादिपरिग्रहः । इह कश्चिदाह । जात्यादिग्रहणं सुवर्णादिसुमनसां निषेधार्थं जात्यादिकुसुमानि हि सकृदारोपितानि निर्माल्यमिति कृत्वा न पुनः पुनरारोप्यन्ते, सौवर्णादीनि तु पुनः पुनरारोपणीयानि भवन्ति, निर्माल्यारोपणदोषश्चैवं प्रसज्यत इति । एतच्चायुक्तम् ॥ "कंचणमोत्तियरयणा–इदामएहिं च विविहेहिं॥[२६]" इत्यनेन तेषामनुज्ञातत्वात्, पुनरारोपणनिषेधे तु कः किमाह किन्तु यदा नोत्तार्यन्ते तदा निर्माल्यारोपणदोषोऽपि न स्याज्जात्यादिकुसुमानि हि कालातिक्रमेण विगन्धीनि भवन्त्यवश्यमुत्तारणीयानि स्युः, सौवर्णादीनि तु न

---

२६ काञ्चनमौक्तिकरत्नादिदामकैश्च विविधैः ॥

तथेति नावश्यमुत्तारणीयानि तथाविगन्धत्वाभावादेव तेषां पुनरारोपणेऽपि न तथाविधो दोष इति मन्यते ॥ यदपि कैश्चिदुच्यते अलङ्कारारोपणमयुक्तं वीतरागाकारस्याभावप्राप्तेस्तदपि न युक्तम् ॥ पुष्पारोपणेऽपि तथाप्रसङ्गात्, यथा हि आभरणानि वीतरागस्य नोपपद्यन्ते एवं पुष्पाण्यपि, उभयेषामपि सरागैराचरितत्वादिति। अष्टपुष्पीविधाने कारणमाह। अपायोऽनर्थस्तद्धेतुत्वादपाया ज्ञानावरणादयः, 'अष्टावपायाः' समाहृता 'अष्टापायं' तस्माद्विशेषेण प्रकारान्तरेणैव दग्धरज्जुकल्पकरणतः भवोपग्राहिभ्यश्चतुर्भ्य इत्यर्थः, नितरां निःसत्ताकतया चतुर्भ्य एव घातिकर्मभ्यो मुक्तोऽपेतो धात्वर्थमात्रवृत्ती वा विशब्दनिर्शब्दाविति विनिर्मुक्त इव विनिर्मुक्तोऽ'ष्टापायविनिर्मुक्त'स्तथा तस्मादष्टापायविनिर्मोक्षणा-'दुत्था' उत्थानं यस्याः सा तदुत्था गुणा अनन्तज्ञानदर्शनादयस्तेषां भूतिः प्रादुर्भावः त एव वा भूतिर्लक्ष्मीर्गुणभूतिस्तदुत्था गुणभूतिर्यस्य स तथा, 'अष्टापायविनिर्मुक्तस्तदुत्थगुणभूति'श्च यः स तथा तस्मै, यद्यपीह गुणीभूतं विनिर्मोचनं क्त-प्रत्ययार्थस्यैव प्रधानत्वात्तथापि तच्छब्देन तदेव परामृश्यते वक्त्रा तथैव विवक्षितत्वात्, दृष्टश्चायं न्यायो यथा "सम्यग्ज्ञानपूर्विका सर्वपुरुषार्थसिद्धि रिति तद्व्युत्पाद्यते" इत्यादाविति। 'दीयते' वितीर्यते,'देवदेवाय'स्तुत्यस्तुत्याय,'या'ऽष्टपुष्पी, साऽ'शुद्धा' सावद्या. 'उदाहृता' सर्वज्ञैरभिहितेति। ननु अष्टापायविनिर्मुक्तोत्था एतद्विनिर्मोक्षणोत्था गुणभूतिर्यस्येत्यनेनैवाष्टपुष्पीनिबन्धनस्यावसीयमानत्वात्किं नु तच्छब्दोपादानेनेति? । नैवम्। अष्टापायविनिर्मुक्ताय दीयते इत्यनेनाष्टपुष्पीनिबन्धनमाह, तदुत्थगुणभूतये इत्यनेन (त) चतुष्पुष्पिकाया अनन्तज्ञानदर्शनसुखवीर्यचतुष्टयरूपत्वादष्टकर्मविनिर्मुक्तिप्रभवगुणानाम्। अष्टापायविनिर्मुक्तायेत्यनेनैवावसितमिदमिति चेन्न, सिद्धानां हि कैश्चित्प्रकृतिवियोगात् ज्ञानाभावः

शरीरमनसोरभावाद्वीर्याभावो विषयाभावाच्च सुखाभावो भाष्यते तन्मतव्युदासार्थत्वादित्थमुपन्यासः, तदावारकक्षये हि तेषां न्यायप्राप्तत्वात् । यद्येवं ज्ञानावरणपञ्चकक्षये केवलिनो ज्ञानपञ्चकप्रसङ्गो न चेष्यते "नट्ठम्मि उ(य) छाउमत्थिए नाणे[27]" इति वचनात् इति । नैवम्, केवलज्ञानेनैव शेषज्ञानज्ञेयस्य प्रकाशितत्वेन तेषामनर्थकत्वान्नष्टत्वमुपदिश्यत इति। एतेन तु पूर्वार्धेन ये मन्यन्ते जिनबिम्बप्रतिष्ठायामवस्थात्रयं कल्प्यते तेन बालावस्थाश्रयं स्नानं निष्क्रमणावस्थोचितं रथारोपणपुष्पपूजादिकं कैवल्यावस्थाश्रयं च वन्दनं प्रवर्तत इति तन्मतमपाकरोति । नह्यष्टापायविनिर्मुक्तिद्वारेण पूजा क्रियमाणा गृहस्थावस्थां विषयीकरोति किन्तु कैवल्यावस्थामेव । ननु चिन्तनीयमिदं यदष्टापायविनिर्मुक्तिमालम्ब्य कैवल्यावस्थायां पूजा कार्येति, यतो न चारित्रिणः स्नानादयो घटन्ते, तद्वत्साधूनामपि तत्प्रसक्तेः, न च तच्चरितमनालम्बनीयमन्यथा परिणताप्कायादिपरिहार आचरणनिषेधार्थः कथं स्यात्, श्रूयते हि "एकदा स्वभावतः परिणतं तडागोदरस्थाप्कायं तिलराशिं स्थण्डिलदेशं च दृष्ट्वापि भगवान्महावीरस्तत्प्रयोजनवतोऽपि साधूंस्तत्सेवनार्थं न प्रवर्तितवान् मा एतदेवास्मच्चरितमालम्ब्य सूरयोऽन्यांस्तेषु प्रवर्तयन्तु साधवश्च मा तथैव प्रवर्तन्तामिति" । सत्यं । किन्तु बिम्बकल्पोऽन्य इति मन्यते, यथैव भावार्हति वर्तितव्यं न तथैव स्थापनार्हत्यपीति भावः । अत एव भगवत्समीपे गौतमादयः साधवस्तिष्ठन्तिस्म तस्माद् तद्बिम्बसमीपावस्थाने तु तेषां निषेध उक्तः॥ यदाह॥ "जइवि न आहाकम्मं, भत्तिकयं तहवि वज्जयंतेहिं॥ भत्ती खलु होइ कया, इहरा आसायणा परमा[28] ॥१॥ तथा॥ दुब्भिगन्धमलस्सावि, तणुरप्पेसण्हाणिया॥ उभओ वाउवहो चेव,

---

२७ नष्टे तु छाद्मस्थिके ज्ञाने ॥ २८ यद्यपि न आधाकर्म, भक्तिकृतं तथापि वर्जयद्भिः ॥ भक्तिः खलु भवति कृता, इतरथा आशातना परमा ॥१॥

तेण ठन्ति न चेइए[२९] ॥ २ ॥" तेनैवार्यिका दण्डकं स्थापनाचार्यं स्थापयन्ति, अन्यथा यथा भावाचार्यसमीपे नावश्यकं कुर्वन्ति तथा स्थापनाचार्यसमीपेऽपि न कुर्युः, न च ताः प्रवर्तिनीं स्थापयन्तीति वाच्यम्, प्रतिक्रमणकाल एव चैत्यवन्दनावसरे महावीरादेरवश्यं कल्पनीयत्वेन तद्दोषस्य समानत्वात्, नह्याचार्य एव पुरुषो न भगवान्, न च वीतरागत्वेऽपि भगवत्समीपे आर्यचन्दनाद्यार्यिका रात्रौ तस्थुः । ननु प्रतिक्रमणादिकाले अर्हत्स्थापनां कृत्वा चैत्यवन्दने क्रियमाणे आशातनादोषप्रसङ्ग इति । नैवं, जिनायतनेऽपि चैत्यवन्दनस्यानुज्ञातत्वात् । यदाह ॥ "निस्सकडमनिस्सकडे, वावि चेइए सव्वहिं थुई तिन्नि । वेलं च चेइयाणि य, नाउं इक्किक्कया वावि[३०] ॥ १ ॥" इत्यलं प्रसङ्गेनेति ॥ ३ ॥ अशुद्धाष्टपुष्पी स्वरूपत उक्ता, सैव स्वर्गप्रसाधनीति यदुक्तं तदधुना प्रदर्शयन्नाह ॥

संकीर्णैषा स्वरूपेण, द्रव्याद्भावप्रसक्ति(सूति)तः ॥ पुण्यबन्धनिमित्तत्वाद्, विज्ञेया स्वर्गसाधनी ॥४॥

(वृत्तिः) 'सङ्कीर्णा' अवद्येन व्यामिश्रा, 'एषा' अनन्तरोक्ताष्टपुष्पी, 'स्वरूपेण' स्वभावेन, कथमित्याह, 'द्रव्यात्' पुष्पादेः'सकाशात्, 'भावप्रसक्ति(सूति)तो' भगवति चित्तप्रसादोत्पत्तेः ॥ इदमुक्तं भवति ॥ पुष्पादिद्रव्योपयोगादवद्यं शुभभावश्च स्यातामिति सङ्कीर्णत्वम् । इदं च न कर्मक्षपणनिमित्तम्, अपि तु पुण्यबन्धनिमित्तमेवेत्यत आह, 'पुण्यस्य' शुभकर्मणो 'बन्धो' बन्धनं तस्य निमित्तं कारणं पुण्यबन्धनिमित्तम्, तद्भावस्तत्त्वं तस्मात् 'पुण्यबन्धनिमित्तत्वात्', हेतोः,

---

२९ दुरभिगन्धमलस्राविणी तनुरप्येषा स्नापिता । द्विधा वायुपथो(वहो)वापि तेन तिष्ठन्ति न चैत्ये ॥ २ ॥
३० निश्राकृतेऽनिश्राकृते वापि चैत्ये सर्वत्र स्तुतयस्तिस्रः । वेलां च चैत्यानि च ज्ञात्वैकैका वापि ॥ १ ॥

'विज्ञेया' अवसेया, 'स्वर्गसाधनी' देवलोकप्राप्तिहेतुः। उपलक्षणत्वात् सुमानुषत्वसाधनी पारम्पर्येण भावपूजानिबन्धनतां प्रतिपद्य मोक्षसाधनी चेति द्रष्टव्यमिति ॥ ४ ॥ अथ शुद्धामष्टपुष्पीमभिधातुमाह ॥

या पुनर्भावजैः पुष्पैः, शास्त्रोक्तिगुणसङ्गतैः ॥ परिपूर्णत्वतोऽम्लानै-रत एव सुगन्धिभिः ॥ ५ ॥

(वृत्तिः) 'या' अष्टपुष्पी 'पुनः' शब्द उक्तवक्ष्यमाणार्थयोर्विशेषद्योतनार्थः, 'भावजैः' आत्मपरिणतिसम्भवैः, पुष्पैरिव 'पुष्पै'र्वक्ष्यमाणलक्षणैरात्मधर्मविशेषैः, किम्भूतैः 'शास्त्रोक्तिगुणसङ्गतैः' शास्त्रमागमस्तस्योक्तिर्भणितिराज्ञा इत्यर्थः सैव गुणो धर्मविशेषः तेन सङ्गतानि युक्तानि यानि तानि तथा तैः, कषादिशुद्धागमपारतन्त्र्यानुगतैरित्यर्थः। अथवा, शास्त्रोक्तिरेव गुणो दवरकस्तत्सङ्गतैः, एतेनैषां मालारूपतोक्ता, तथा च द्रव्यपुष्पाण्यपि यदा मालां कृत्वाऽऽरोप्यन्ते तदाष्टावपायापगमान् स्मृत्वाऽऽरोपणीयानीति दर्शितम्। पाठान्तरे तु 'शास्त्रोक्तगुणसङ्गतैरिति' तथा (त्र) शास्त्रोक्त (शास्त्रीय) समि(शमे)त्यादिगुणोपेतैरित्यर्थः। पुनः किम्भूतैस्तैरित्याह, 'परिपूर्णत्वतोऽम्लानैः' परिपूर्णतया सकलजीवमृषावादादिविषयत्वेन निरतिचारतया वा अम्लानैः म्लानिमनुपगतैः, 'अत एव' परिपूर्णत्वादेव, 'सुगन्धिभिः' सद्गन्धोपेतैः, परिपूर्णताधर्म एवैषामम्लानिसुगन्धितालक्षणौ पुष्पधर्मौ द्रष्टव्यावित्यर्थः, 'विधीयते सा शुद्धे'त्येवंरूपः श्लोकावसाने वाक्यशेषो द्रष्टव्य इति ॥ ५ ॥ नामतस्तान्येवाह ॥

अहिंसा सत्यमस्तेयं, ब्रह्मचर्यमसङ्गता ॥ गुरुभक्तिस्तपो ज्ञानं, सत्पुष्पाणि प्रचक्षते ॥ ६ ॥

(वृत्तिः) प्रमत्तयोगात्प्राणव्यपरोपणं हिंसा तदभावोऽहिंसा सैकं पुष्पम्[१]। तथा सद्भ्यो हितं 'सत्य'मनुतापाभावो

द्वितीयम्'[२]। तथा स्तेनस्य चौरस्य कर्म भावो वा स्तेयं चौर्यं तदभावो'ऽस्तेय'मिति तृतीयम्[३]। तथा 'ब्रह्म' कुशलं कर्म तदेव चर्यते सेव्यत इति 'चर्यं' 'ब्रह्मचर्य्यम्,'मनोवाक्कायैः कामसेवनवर्जनमित्यर्थः तच्चतुर्थम्[४]। तथा नास्ति सङ्गोऽभिष्वङ्गो यस्यासावसङ्गस्तद्भावो'ऽसङ्गता' धर्मोपकरणातिरिक्तपरिग्रहपरिवर्जनं धर्मोपकरणस्यापरिग्रहत्वात् ॥ यदाह ॥ "जंपि वत्थं व पायं वा, कम्बलं पायपुंछणं ॥ तंपि संजमलज्जट्ठा, धारन्ति परिहरन्ति य[३१] ॥ १ ॥ न सो परिग्गहो वुत्तो, नायपुत्तेण ताइणा ॥ मुच्छा परिग्गहो वुत्तो, इइ वुत्तं महेसिणा[३२] ॥ २ ॥" इतरथा शरीराहाराद्यपि परिग्रहः स्यादिति पञ्चमम्[५]। तथा गृणाति शास्त्रार्थमिति गुरुः। आह च ॥ "धर्मज्ञो धर्मकर्ता च, सदा धर्मपरायणः॥ सत्त्वेभ्यो धर्म्मशास्त्रार्थ-देशको गुरुरुच्यते ॥ १ ॥" तस्य भक्तिः सेवा बहुमानश्च 'गुरुभक्तिरिति' षष्ठम्[६]। तथा तापयतीति 'तपो'ऽनशनादि। आह च ॥ "रसरुधिरमांसमेदो-ऽस्थिमज्जशुक्राण्यनेन तप्यन्ते ॥ कर्माणि वाऽशुभानी-त्यतस्तपो नाम नैरुक्तम् ॥१॥" इति सप्तमम्[७]। तथा ज्ञायन्तेऽर्था अनेनेति 'ज्ञानं' सम्यक्प्रवृत्तिनिवृत्तिहेतुभूतो बोध इत्यष्टमम्[८]। इह समुच्चयाभिधायी च शब्दो द्रष्टव्यः, 'सत्पुष्पाणि' अत्यन्तमेकान्तेन च विवक्षितार्थसाधकतया द्रव्यपुष्पापेक्षया सन्ति शोभनानि पुष्पाणीव पुष्पाणि भावपुष्पाणीत्यर्थः, 'प्रचक्षते' शुद्धाष्टपुष्पीस्वरूपज्ञाः प्रतिपादयन्तीति ॥ ६ ॥ उक्तमेवार्थं वाक्यान्तरेणाह ॥

एभिर्देवाधिदेवाय, बहुमानपुरस्सरा ॥ दीयते पालनाद्या तु, सा वै शुद्धेत्युदाहृता ॥ ७ ॥

---

३१ यदपि वस्त्रं वा पात्रं वा कम्बलं पादपु(प्रो)ञ्छनं। तदपि संयमलज्जार्थं धारयन्ति परिहरन्ति (परिभुञ्जते इत्यर्थः) च ॥१॥

३२ नासौ परिग्रह उक्तो ज्ञातपुत्रेण त्रात्रा। मूर्छा परिग्रह उक्त इत्युक्तं महर्षिणा ॥ २ ॥

(वृत्तिः) 'एभि' रनन्तरोदितैर्भावपुष्पैः, 'देवानां' पुरन्दरादीनामधिको देवः पूज्यत्वात् 'देवाधिदेवः' प्रागुक्तो महादेवस्तस्मै, 'बहुमानः' प्रीतियोगः 'पुरस्सरः' प्रधानो यत्र सा 'बहुमानपुरस्सरा,' 'दीयते' वितीर्यते, कथमित्याह, 'पालनात्' अहिंसादिपुष्पाणां परिरक्षणद्वारेण, तत्पालने हि देवाधिदेवाज्ञा कृता भवति, आज्ञाकरणमेव च सर्वथा कृतकृत्यस्य तस्य पूजाकरणं, न ह्याज्ञां विराधयता शेषपूजोद्यतेनाप्यसावाराधितो भवति, आज्ञेश्वरमहाराजवदिति, 'या तु' यैवाष्टपुष्पी, 'सा वै' सैव, 'शुद्धा' निरवद्या, 'इतिः' एवम्प्रकारार्थः, 'उदाहृता' तत्त्ववेदिभिरभिहितेति ॥ ७ ॥ अथ शुद्धाया एव मोक्षसाधनीत्वं दर्शयन् विशेषेण सत्सम्मतत्वं प्रतिपादयन्नाह ॥

प्रशस्तो ह्यनया भाव–स्ततः कर्मक्षयो ध्रुवः ॥ कर्मक्षयाच्च निर्वाण–मत एषा सतां मता ॥ ८ ॥

(वृत्तिः) 'प्रशस्तः' प्रशस्यः शुद्धो, 'हिशब्दो' यस्मादर्थे । ततश्च यस्मात्प्रशस्तः, 'अनया' अनन्तरोदितत्वेन प्रत्यक्षासन्नया शुद्धाष्टपुष्प्या, 'भावः' आत्मपरिणामो, भवतीति गम्यते, न पुनर्द्रव्याष्टपुष्प्या जीवोपमर्दव्यामिश्रत्वात्तस्याः, 'ततः' प्रशस्तभावा'त्कर्मक्षयो' ज्ञानावरणादिकर्मविलयो, भवति, 'ध्रुवो'ऽवश्यम्भावि, 'कर्मक्षयात्' चोक्तस्वरूपात्, 'चशब्दः' पुनरर्थः, 'निर्वाणं' मोक्षो भवतीति मोक्षसाधनी इयम् । 'अतः' प्रशस्तभावजन्यकर्मक्षयसाध्यनिर्वाणसाधनत्वाद्, 'एषा' शुद्धाष्टपुष्पी, 'सतां' विदुषां यतीनामित्यर्थः, 'मता' विधेयत्वेनेष्टा, न पुनर्द्रव्याष्टपुष्पी । ततो हे कुतीर्थिका यदि यूयं यतयस्तदा भावपूजामेव कुरुत इत्युक्तं भवति, अथवा यतोऽनया निर्वाणमतः सतां विदुषामेषा सम्मतेति ॥८॥

॥ तृतीयाष्टकविवरणं समाप्तम् ॥ ३ ॥

## ॥ अथ चतुर्थमग्निकारिकाष्टकम् ॥

पूजानन्तरमग्निकारिकां लोकाः कुर्वन्तीत्यतस्तन्निरूपणायाह ॥

**कर्मेन्धनं समाश्रित्य, दृढा सद्भावनाहुतिः ॥ धर्मध्यानाग्निना कार्या, दीक्षितेनाग्निकारिका ॥ १ ॥**

(वृत्तिः) 'कर्म' ज्ञानावरणादिकं मूलप्रकृत्यपेक्षयाष्टप्रकारं तदेव दाह्यत्वादपनेयत्वादिन्धनमिवेन्धनं 'कर्मेन्धनं,' तत् 'समाश्रित्य' अङ्गीकृत्य, अग्निकारिका कार्येति योगः। किंविधा 'दृढा' कर्मेन्धनदाहं प्रति प्रत्यला, तथा 'सद्भावना' शुभरूपा या जीवस्य वासना, सैव 'आहुति' र्घृतादिप्रक्षेपलक्षणा यस्यां सा तथा, केन करणभूतेनेत्याह 'धर्मध्यानाग्निना' धर्मध्यानमुपलक्षणत्वाच्छुक्लध्यानं चाग्निरिवाग्निर्धर्मध्यानं चासावग्निश्च धर्मध्यानाग्निस्तेन। 'कार्या' विधेया। केनेत्याह, 'दीक्षितेन' प्रव्रजितेन, कासौ 'अग्निकारिका' अग्निकर्मेति। इत्थं चैतदङ्गीकर्तव्यं यतो दीक्षितस्य द्रव्याग्निकारिका अनुचिता तस्या भूतोपमर्दरूपत्वात्तस्य च तन्निवृत्तत्वेन तत्रानधिकारित्वात्, "अधिकारिवशाच्च धर्मसाधनसंस्थितिः" (अ.२ श्लो.६) इति प्रागुक्तम्, गृहस्थस्तु सर्वथा भूतोपमर्दानिवृत्तत्वेनाधिकारित्वात्तां करोत्यपि। अत एव धूपदहनदीपप्रबोधादिना प्रकारेण द्रव्याग्निकारिकामपि कुर्वन्त्यार्हतगृहस्था इति॥ अनेन श्लोकेनेदमुक्तं भवति॥ यदि हे कुतीर्थिका यूयं दीक्षितास्तदा कर्मलक्षणाः समिधः कृत्वा धर्मध्यानलक्षणमग्निं प्रज्वाल्य सद्भावनाहुतिप्रक्षेपतोऽग्निकारिका कार्या, न त्वन्यथा, तस्या दीक्षितानामनुचितत्वात्। यदि तु हन्त गृहस्थास्तत्तुल्या वा, ततः कुरुध्वं

द्रव्याग्निकारिकामिति ॥ १ ॥ अथ ध्यानाग्निकारिकैव कार्या दीक्षितेनेति परसिद्धान्तेनैव प्रसाधयन्नाह ॥

**दीक्षा मोक्षार्थमाख्याता, ज्ञानध्यानफलं स च ॥ शास्त्र उक्तो यतः सूत्रं, शिवधर्मोत्तरे ह्यदः ॥२॥**

(वृत्तिः) 'दीक्षा' प्रव्रज्या, 'मोक्षार्थं' सकलकर्मनिर्मुक्तिनिमित्तं 'आख्याता' तत्स्वरूपज्ञैर्निगदिता, यत एवं ततस्तां प्रतिपन्नेन मोक्षसाधकमेवानुष्ठानमाश्रयणीयम्, न पुनर्द्रव्याग्निकारिकेति हृदयम्। द्रव्याग्निकारिकैव साधनं मोक्षस्येत्याशङ्कानिराकरणायाह, 'ज्ञानध्यानफलं स चेति,' स पुनर्मोक्षो विज्ञप्तिशुभैकाग्रत्वयोः साध्यं वर्तते, न पुनर्द्रव्याग्निकारिकाया इति भावना। कथमिदमवसितं प्रत्यक्षाद्यगोचरत्वात्तस्येति चेदत आह, 'शास्त्र उक्तः' आगमे ज्ञानध्यानफलतयाभिहित इत्यर्थः, यद्यपि हि प्रत्यक्षानुमानयोरसावतीन्द्रियत्वेनागोचरस्तथाप्यागमाभिहितत्वात् ज्ञान ध्यानफलतयाऽसौ प्रतिपत्तव्यः, आगमश्च प्रमाणतया सर्वमोक्षवादिभिरभ्युपगत एव, यद्यपि च बौद्धैः स तथा नेष्यते, तथापि संशयविशेषनिबन्धनतया प्रवृत्तिनिवृत्तिहेतुत्वात्तैः कथञ्चिदभ्युपगत एवेति। अथ कथमवसितमिदं यदुत शास्त्रेऽसौ तत्फलतयाभिहित इत्याशङ्क्याह, 'यतो' यस्मात्कारणात्, 'सूत्र'मर्थसूचकं वाक्यं, 'शिवधर्मोत्तरे' शिवधर्माभिधाने पराभिमते शैवागमविशेषे, 'हि' रिति वाक्यालङ्कारे, 'अदः' एतद्वक्ष्यमाणलक्षणमिति, अतो भवदभ्युपगतशास्त्रे मोक्षस्य ज्ञानादिफलतयोक्तत्वान्न मोक्षार्थिना दीक्षितेनाधिकृताया अन्याग्निकारिका कार्येति गर्भार्थ इति ॥२॥
तदेव सूत्रं दर्शयन्नाह।

**पूजया विपुलं राज्य–मग्निकार्येण सम्पदः ॥ तपः पापविशुद्ध्यर्थं, ज्ञानं ध्यानं च मुक्तिदम् ॥३॥**

(वृत्तिः) 'पूजया' देवतायाः पुष्पाद्यर्चनलक्षणया, न तु तदन्यया तदन्यस्यास्तपोज्ञानरूपत्वेन पापविशुद्धिमोक्षयोरेव सम्पादकत्वात्, 'विपुलं' विस्तीर्णं, 'राज्यं' राजभावो भवति, तत्कारकस्येति गम्यते, तथा 'अग्निकार्येण' अग्नावग्निना वा कार्यं कृत्यमग्निकार्यं तेन द्रव्याग्निकारिकयेत्यर्थः,न तु भावाग्निकारिकया तस्या ध्यानरूपत्वेन मुक्तिसाधकत्वात्, 'सम्पदः' समृद्धयः, भवन्तीति गम्यम्, तथा 'तपो'ऽनशनादि, 'पापविशुद्ध्यर्थं' अशुभकर्मक्षयाय, भवति, तथा 'ज्ञान'मवबोधविशेषो, 'ध्यानं च' शुभचित्तैकाग्रतालक्षणम्, 'च'शब्दः समुच्चये, 'मुक्तिदं' मोक्षप्रदं भवतीति शिवधर्मोत्तरग्रन्थसूत्रार्थ इति ॥३॥ एवं तावत्पराभ्युपगमेनैव द्रव्याग्निकारिकाकरणं दीक्षितस्य दूषितम्। अथ तस्यैव पूजां पुनरग्निकारिकां च प्रकारान्तरेण दूषयन्नाह ॥

पापं च राज्यसम्पत्सु, सम्भवत्यनघं ततः॥ न तद्धेत्वोरुपादान–मिति सम्यग्विचिन्त्यताम् ॥४॥

(वृत्तिः) न केवलं मुमुक्षोरग्निकारिकाकरणमपार्थकं, 'पापं चाऽ'शुभकर्म च 'राज्यसम्पत्सु' नरपतित्वसमृद्धिषु पूजाग्निकारिकाकरणानन्तरफलभूतासु सतीषु, 'सम्भवति' संजायते, यत एवं 'तत'स्तस्माद्, 'अनघं' निरवद्यं, 'न' नैव भवति, 'तद्धेत्वोः' राज्यसम्पत्कारणयोः पूजाग्निकारिकारूपयोः, 'उपादान'माश्रयणम्, 'इति' एतदनन्तरोक्तं पूजाग्निकारिकयोरुपादानस्य सपापत्वं, 'सम्यक्' स्वसिद्धान्ताविरोधेन, 'विचिन्त्यतां' पर्यालोच्यतामिति, सुपर्यालोचितकारिणो हि भवन्ति मुमुक्षव इति ॥४॥ राज्यसम्पत्सु पापं भवतीत्युक्तम्, तदेवाश्रित्याक्षेपः क्रियते, ननु राज्यसम्पद्भावे भवतु नाम पापं दानादिना तु तस्य शुद्धिर्भविष्यतीत्याशङ्क्याह ॥

विशुद्धिश्चास्यतपसा, न तु दानादिनैव यत् ॥ तदियं नान्यथा युक्ता, तथा चोक्तं महात्मना ॥५॥

(वृत्तिः) विशोधनं 'विशुद्धिः,' सा 'च' पुनः, 'अस्य' राज्यादिजन्यपापस्य 'तपसा' अवधारणस्येह सम्बन्धात् 'तपसैव' अनशनादिनैव "तपः पापविशुद्ध्यर्थमिति" वचनात्, 'न तु दानादिना' न पुनर्दानहोमादिना, "दानेन भोगानाप्नोतीति वचनात्," तत्कथं दीक्षितस्य पूजाग्निकारिके युक्ते इति, इह च द्रव्याग्निकारिकाया एव मुख्यं दूषणं पूजायास्तु प्रासङ्गिकमित्यग्निकारिकाया एव निगमनमाह । 'तदियं नान्यथा युक्तेति' यस्मान्मुमुक्षोर्व्यर्थेयं पापसाधनसम्पद्धेतुभूता च, 'तत्' तस्मादियमग्निकारिका, 'न' नैव, 'अन्यथा' धर्मध्यानाग्निकारिकायाः प्रकारान्तरापन्ना द्रव्याग्निकारिकेत्यर्थः, 'युक्ता' सङ्गतेति, विशोधनार्हपापसम्पादकसम्पन्निमित्तत्वेन द्रव्याग्निकारिकाया अकरणीयत्वं व्यासस्यापि न्यायतः सम्मतमिति दर्शयन्नाह 'तथा चोक्तं महात्मनेति' 'तथा च' यथास्मदुक्तार्थसंवादो भवति तथैव, 'उक्त'मभिहितं, 'महात्मना' परमस्वभावेन व्यासेनेति शेषः । इह च यन्मिथ्यादृष्टेरपि व्यासस्य महात्मकत्वाभिधानमाचार्येण कृतं तत् परसम्मतानुकरणमात्रमात्मनो माध्यस्थ्याविष्करणार्थमिति न दुष्टम्, सम्मतश्च परस्य महात्मतया व्यासः, अत एव च तद्वचनं स्वपक्षे परप्रीतिजननायोपन्यस्तमिति ॥ ५ ॥ तदेवाह ॥ (महाभारते वनपर्वणि द्वितीयाध्याये)॥

धर्मार्थं यस्य वित्तेहा, तस्यानीहा गरीयसी ॥ प्रक्षालनाद्धि पङ्कस्य, दूरादस्पर्शनं वरम् ॥६॥

(वृत्तिः) 'धर्मार्थं' धर्मनिमित्तं, 'यस्य' कस्यचित्पुंसः, 'वित्तेहा' द्रव्योपार्जनचेष्टा कृषिवाणिज्यादिका, 'तस्य' पुरुषस्य, 'अनीहा' अचेष्टा वित्तानुपार्जनमेव, 'गरीयसी' श्रेयसीतरा सङ्गततरा इत्यर्थः, अयमभिप्रायो, वित्तार्थ

चेष्टायामवश्यं पापं भवति तच्चोपार्जितवित्तवितरणेनावश्यं शोधनीयं भवति,एवं च वित्तार्थमचेष्टैव वरतरा वित्तवितरणविशोध्यपापाभावात् परिग्रहारम्भवर्जनात्मकत्वेनाचेष्टाया एव च धर्मत्वादिति। अत्रार्थे दृष्टान्तमाह। 'प्रक्षालनात्' धावनात्सकाशात्, 'हि' यस्मात्, 'पङ्कस्या'ऽशुचिरूपकर्दमस्य, 'दूरात्' विप्रकर्षात्, 'अस्पर्शनं' असंश्लेषणमेव, 'वरं' प्रधानमिति। इदमुक्तं भवति, यदि पङ्के करचरणादिरवयवः क्षिप्त्वापि प्रक्षालनीयस्तदा वरमक्षिप्त एव, एवं यद्यग्निकारिकां विधाय सम्पद उपार्जनीयास्तज्जन्यपातकं च पुनर्दानेन शोधनीयं तदा सैवाग्निकारिका वरमकृतेति। प्रयोगश्चेह, न विधेया मुमुक्षूणां द्रव्याग्निकारिका, तत्सम्पाद्यस्य कर्मपङ्कस्य पुनः शोधनीयत्वात्, पादादेः पङ्कक्षेपवदिति। एवं तर्हि गृहस्थेनापि पूजादि न कार्यं स्यात्, नैवम्, यतो जैनगृहस्था न राज्यादिनिमित्तं पूजां कुर्वन्ति, न च राज्याद्यावर्जितमवद्यं दानेन शोधयिष्याम इति मन्यन्ते, मोक्षार्थमेव तेषां पूजादौ प्रवृत्तेः, मोक्षार्थितया च विहितस्यागमानुसारिणो वीतरागपूजादेर्मोक्ष एव मुख्यं फलं, राज्यादि तु प्रासङ्गिकम्, ततो गृहिणः पूजादिकं नाविधेयम्। दीक्षितेतरयोश्च अनुष्ठानस्यानन्तर्यपारम्पर्यकृत एव फले विशेष इति ॥ ६ ॥

दीक्षितस्यापि सम्पदर्थित्वे सति युक्ता द्रव्याग्निकारिकेत्याशङ्कानिराकरणायाह ॥

**मोक्षाध्वसेवया चैताः, प्रायः शुभतरा भुवि ॥ जायन्ते ह्यनपायिन्य, इयं सच्छास्त्रसंस्थितिः ॥ ७ ॥**

(वृत्तिः) 'मोक्षो' निर्वाणं तस्याध्वा मार्गः सम्यग्दर्शनज्ञानचरणलक्षणस्तस्य सेवाऽनुष्ठानं 'मोक्षाध्वसेवा' तया, 'च' शब्दः पुनःशब्दार्थः, ततश्चाग्निकारिकायाः कार्यभूताः सम्पदः पापहेतुतया अशुभा, मोक्षाध्वसेवया पुनः शुभ-

तरा भवन्तीत्यर्थो लभ्यते, अवधारणार्थो वा चशब्दस्तेन मोक्षाध्वसेवयैव नाऽग्निकारिकाकरणतः 'एता' अनन्तरोदिता अग्निकारिकाफलभूताः सम्पदः, 'प्रायो'बाहुल्येन प्रायोग्रहणं च कस्यापि मोक्षाध्वसेवाभव(एव)निर्वाणभावान्न जायन्त एवेति ज्ञापनार्थम्, 'शुभतरा', अग्निकारिकाकरणेभ्यः सकाशात्प्रशस्ततरा, 'भुवि' पृथिव्याम्, 'जायन्ते' भवन्ति, 'हि' शब्दो यस्मादर्थः, 'अनपायिन्यो'ऽपायवर्जिताः यस्मान्मोक्षाध्वसेवया प्रशस्ततरा अनपायिन्यश्च 'सम्पदो'जायन्ते, तस्मादियमग्निक्रिया नान्यथा युक्तेति प्रक्रमः। मोक्षाध्वसेवया शुभतरा एता भवन्तीति कथमिदमवसितमित्याशङ्कायामाह।'इयं' अनन्तरोदिता, 'सच्छास्त्रसंस्थिति'रविसंवादकागमव्यवस्था ॥ यदाह॥ " मोक्षमार्गप्रवृत्तस्य, महाभ्युदयलब्धयः॥ सञ्जायन्तेऽनुषङ्गण,पलालं सत्कृषाविव ॥१॥" मुमुक्षूणां च शास्त्रं प्रमाणमेव ॥यदाह॥ " न मानमागमादन्यत्, मुमुक्षूणां हि विद्यते ॥ मोक्षमार्गे ततस्तत्र, यतितव्यं मनीषिभिः ॥१॥" इति ॥७॥

अथ परसमयसमाश्रयणेनैव द्रव्याग्निकारिकाकरणं निराकुर्वन्नाह ॥

**इष्टापूर्तं न मोक्षाङ्गं, सकामस्योपवर्णितम्॥ अकामस्य पुनर्योक्ता, सैव न्याय्याग्निकारिका ॥८॥** चतुर्थमग्निकारिकाष्टकम् ॥ ८ श्लो०

(वृत्तिः) इज्यते दीयते स्मेतीष्टम्, पूर्यते स्मेति पूर्तम्, इष्टं च पूर्तं चेति *'इष्टापूर्तमिति' समाहारद्वन्द्वः,छान्दसत्वाच्च 'इष्टापूर्तम्,' तत्स्वरूपं चेदम्, ॥"×अन्तर्वेद्यां तु यद्दत्तं,ब्राह्मणानां समक्षतः॥ [1]ऋत्विग्भिर्मन्त्रसंस्कारै–रिष्टं त-

*समाहारे पूर्वपददीर्घे च इष्टापूर्तम् ॥

+पृथिव्या मध्यस्थितत्वादन्तर्वेदीव । हरिद्वारावधिप्रयागपर्यन्ते शशस्थलीति ब्रह्मावर्त इति च ख्याते देशे ॥ १ अग्न्याधेयं पाकय-

दभिधीयते ॥१॥ वापीकूपतडागानि, देवतायतनानि च ॥ अन्नप्रदानमारामाः, पूर्तं तदभिधीयते ॥२॥ " तदेवमुक्तस्वरूप'मिष्टापूर्तं,' 'न' नैव, 'मोक्षाङ्गं' मुक्तिकारणम्, इहायमभिप्रायः, अग्निकारिकान मोक्षाङ्गमिष्टकर्मरूपत्वात्तस्या यतोऽन्तर्वेद्यामाहुतिप्राधान्येन कर्माणीष्यन्त इति, कुतस्तन्न मोक्षाङ्गमित्याह, 'सकामस्याऽ'भ्युदयाभिलाषिणः, यस्मात्तदित्येष वाक्यशेषो दृश्यः, 'उपवर्णित'मुपदिष्टं भवदीयसिद्धान्त एव, यतः श्रूयते॥ "स्वर्गकामो यजेत" इत्यादि श्रुतिवचनम्, तथा॥ "इष्टापूर्तं मन्यमाना वरिष्ठं, नान्यच्छ्रेयो येऽभिनन्दन्ति मूढाः॥ नाकस्य पृष्ठे ते सुकृतेन भूत्वा,इमं लोकं हीनतरं वा विशन्ति ॥१॥"इति ॥ अथाकामस्य का वार्तेत्याशङ्क्याह, 'अकामस्य'स्वर्गपुत्राद्यनाशंसावतो मुमुक्षोः,'पुनः'-शब्दः पूर्ववाक्यार्थापेक्षयोत्तरवाक्यार्थस्य विशेषाभिधायकः, 'या उक्ता' कर्मेन्धनमित्यादिना प्रतिपादिता, 'सैव'नान्या पराभ्युपगता, 'न्याय्या' न्यायादनपेता, न्यायश्च दर्शित एव, 'अग्निकारिकाऽ'ग्निक्रियेति ॥ ८ ॥

चतुर्थाष्टकविवरणं समाप्तम् ॥४॥

---

ज्ञानग्निष्टोमादिकान्मखान् ॥ यः करोति वृतो यस्य स तस्यर्त्विगिहोच्यते॥१॥ एकाग्निकर्महवनं त्रेतायां यच्च हूयते। अन्तर्वेद्यां च यद्दानमिष्टं तदभिधीयते ॥१॥ अग्निहोत्रं तपः सत्यं वेदानां चार्थपालनम् । आतिथ्यं वैश्वदेवं च प्राहुरिष्टं सदा बुधाः ॥२॥

## ॥ अथ पञ्चमं भिक्षाष्टकम् ॥

एवं च तात्त्विकं महादेवं भावस्नानपूर्वकभावपूजया पूजयतो धर्मध्यानाग्निकारिकाकरणपरायणस्य मुमुक्षोरनारम्भितया निष्परिग्रहतया च धर्माधारशरीरस्थितिर्भिक्षयैवोपपन्नेति तत्स्वरूपनिरूपणायाह ॥

सर्वसम्पत्करी चैका, पौरुषघ्नी तथापरा ॥ वृत्तिभिक्षा च तत्त्वज्ञै–रिति भिक्षा त्रिधोदिता ॥१॥

(वृत्तिः) 'सर्वा' निरवशेषा ऐहिक्यामुष्मिकीर्मोक्षावसानाः, 'सम्पदः' श्रियः कर्तुं शीलं यस्याः सा 'सर्वसम्पत्करी,' 'चकार' उक्तसमुच्चये,'एका' प्रथमा अद्वितीया वा प्रधानेत्यर्थः, 'पौरुषं'पुरुषकारं,'हन्ति' निष्फलीकरणेन ध्वंसयतीति 'पौरुषघ्नी,''तथे'त्युक्तसमुच्चय एव,अथवा 'तथा' तेन वक्ष्यमाणप्रकारेण, 'अपरा' द्वितीया,अथवा न परा 'अपरा' जघन्येत्यर्थः, वृत्तिर्वर्त्तनं जीविकेत्यर्थः तदर्था भिक्षा 'वृत्तिभिक्षा' सा च अन्येति गम्यते, 'च'कारो भिक्षासामान्यसमुच्चयार्थः, 'तत्त्वज्ञैः' परमार्थवेदिभिः, 'इति' एवमनन्तरोक्तेन प्रकारेण,'भिक्षा' याञ्चा, 'त्रिधा' त्रिभिः प्रकारैः, 'उदिता' अभिहितेति ॥ १ ॥ तत्राद्यां तावदाह ॥

यतिर्ध्यानादियुक्तो यो, गुर्वाज्ञायां व्यवस्थितः॥ सदानारम्भिणस्तस्य, सर्वसम्पत्करी मता ॥ २ ॥

(वृत्तिः) 'यतिः' साधुः,तस्य सर्वसम्पत्करी मते'ति क्रिया भिक्षेति प्रकृतमनेन च व्यवच्छेदफलत्वाद्वचनस्य गृहस्थस्य व्यवच्छेदः कृतः, यतिश्च द्रव्ययतिरपि स्यादतस्तद्व्यवच्छेदायाह, 'ध्यानादियुक्तः'तत्र ध्यानं भवशतसमुपचितकर्मवन-

गहनज्वलनकल्पमखिलनरःप्रकारप्रवरमान्तरतपःक्रियारूपं धर्मध्यानं शुक्लध्यानं च, आदिशब्दात् निखिलपारलौकिकाभ्युनु-
ष्ठानप्रकाशनप्रदीपकल्पज्ञानपरिग्रहः, अतस्तेन ध्यानादिना युक्तो युतो यः स तथा, अनेन च तपःक्रियाज्ञानयुक्तत्ववि-
शेषणेन केवलक्रियाकारिणः क्रियाशून्यज्ञानवतश्च व्यवच्छेद उक्तः, केवलयोस्तयोरनर्थकत्वात् ॥यदाह॥ "हयं नाणं किया-
हीणं,हया अन्नाणओ किया॥ पासन्तो पङ्गुलो दड्ढो,धावमाणो उ अंधओ [33] ॥ १॥ इति। उभय(युक्त)स्यैवार्थप्रसाधक-
त्वात्॥यदाह ॥ " संजोगसिद्धीइ फलं वयन्ति, न हु एगचक्केण रहो पयाइ ॥ अंधो य पंगू य वणे समिच्चा, ते संपउत्ता
नगरं पविट्ठा[34] ॥२॥" इति 'य' इति सामान्योऽनिर्दिष्टनामा ध्यानादियुक्त इतिविशेषणसामर्थ्यात्तथाविधविशिष्टज्ञान-
विकलानां माषतुषादिचारित्रिणां मा भूत्सर्वसम्यक्करभिक्षाप्रतिषेध इत्यत आह 'गुर्वाज्ञायां व्यवस्थितः' गुरोर्गुरुगुणो-
पेताचार्यस्याज्ञा वचनं तस्यां विशेषेणावस्थितः, एष हि गुरुज्ञानत एव ज्ञानवान् ज्ञानफलसिद्धेः,यदाह ॥ "यो निरनुबन्ध-
दोषात्, श्राद्धोऽनाभोगवान् वृजिनभीरुः ॥ गुरुभक्तो ग्रहरहितः, सोऽपि ज्ञाते(न्ये)व तत्फलतः॥१॥"अथवा यो गुरुकुले
वसतां प्रचुरसाधुत्वेन मनागनेषणीयभक्तभोजनसम्भवादिदोषोद्भावनतस्तन्निरपेक्षो भवति तस्यानेन व्यवच्छेद उक्तः,
सद्गुरूपदेशानपेक्षो हि शास्त्रे निन्द्यते ॥यदाह॥ " जे उ तह विवज्जत्था, सम्मं गुरुलाघवं अयाणन्ता ॥ सग्गाहा किरि-
यरया, पवयणखिंसावहा खुद्दा [35] ॥१॥" इत्यादि,'व्यवस्थित' इह विशब्देन यः कदाचित् गुर्वाज्ञाव्यवस्थितः कदाचिद्-

३३ हतं ज्ञानं क्रियाहीनं, हताऽज्ञानतः क्रिया ॥ पश्यन् पंगुर्दग्धः धावमानस्तु अन्धकः ॥१॥
३४ संयोगसिद्धौ फलं वदन्ति, न खल्वेकचक्रेण रथः प्रयाति। अन्धश्च पंगुश्च वने समेत्य तौ सम्प्रयुक्तौ नगरं प्रविष्टौ ॥२॥
३५ ये तु तथा विपर्यस्ताः सम्यग्गुरुलाघवं अजानन्तः। स्वग्राहात् क्रियारताः प्रवचनखिंसावहाः क्षुद्राः॥१॥ (तुच्छाःकृपणाः क्रूरा वा)

न्यथा तस्यापि व्यवच्छेदः। ननु ये जिनकल्पिकप्रतिमाकल्पिकादयो गच्छनिर्गतास्तेषां गुर्वाज्ञाविकलानां कथं विवक्षितभिक्षाभाक्त्वमिति, उच्यते,तत्कल्पस्यैव गुर्वाज्ञारूपत्वादिति॥ तस्येतीह दृश्यम् , ततस्तस्य यतेः किंविधस्येत्याह,'सदानारम्भिणः' सदा सर्वकालं अनारम्भिणः पृथिव्याद्युपमर्दपरिहारिणः अनेन पृथिव्यादिषु असंयतस्य व्यवच्छेदः ध्यानादियोगस्यापि तदीयस्य निष्फलत्वात् ॥आह च॥ "सम्मद्दिट्ठिस्स वि अवि–रयस्स न तवो महागुणो होइ॥ होइ हु हत्थिण्हाणं, तुंदच्छियं व तं तस्स [३६]॥१॥" *तुन्दाकर्षणे हि यावद्भ्रमिकाष्ठं दवरकेण मुच्यते तावदेव बध्यत इति । सदाग्रहणेन तु यो विहितसमायिकपौषधतया कदाचिदनारम्भी देशतो यतिस्तस्य व्यवच्छेद उक्तो भिक्षाकत्वेन तस्यागमेऽनभिधानात् । ननु य एकादशीं प्रतिमां प्रतिपन्नः श्रमणोपासकस्तस्य प्रतिमाकालावधिकत्वादनारम्भकत्वस्य न तदा तावदाद्या भिक्षा सम्भवति,नापि तदितरभिक्षैतस्य वक्ष्यमाणतत्स्वामिलक्षणायोगादिति कास्य भिक्षेति?,अत्रोच्यते, तस्य श्रमणभूतत्वाभिधानात् तद्भिक्षाया अपि श्रमणभिक्षाकल्पत्वात्तस्यामवस्थायां तस्या आप्तोपदिष्टत्वाच्च सर्वसम्पत्करीकल्पत्वमवसेयम् , न ह्यसर्वसम्पत्करमतत्कारणं वा विधेयतया वस्त्वाप्ता उपदिशन्ति आप्तत्वहानिप्रसङ्गादिति । इह ध्यानादियुक्त इत्यत्रादिशब्देन सदानारम्भित्वस्यावरोधेऽपि भेदेन तदुपादानं हेतुत्वार्थम् , ततश्च सदानारम्भिकत्वाद्धेतोः 'सर्वसम्पत्करी' उक्तनिर्वचना, मता. तत्त्वविदामिति ॥ सदानारम्भस्य हि वृत्तिर्भिक्षयैवान्यथा त्वारम्भित्वप्रसङ्गात् , सा चानारम्भित्वादेव 'सर्वसम्पत्करी,' अत एव सातिप्रशस्या, ॥ यदाह, (इत्याह)॥ "अहो जिणेहिं असावज्जा, वित्ती साहूण

३६ सम्यग्दृष्टेरप्यविरतस्य न तपो महागुणं भवति। भवति हु हस्तिस्नानं तुन्दाच्छिदमिव तत्तस्य ॥२॥ *तुन्दा मन्थानदण्डिका.

दे(दं)सिया॥ मोक्खसाहणहेउस्स, साहुदेहस्स धारणा [३७] ॥१॥" ॥२॥ पुनरपि किम्भूतस्य तस्येत्याह ॥

वृद्धाद्यर्थमसङ्गस्य, भ्रमरोपमयाऽटतः ॥ गृहिदेहोपकाराय, विहितेति शुभाशयात् ॥३॥

(वृत्तिः)'अटतो'यतेः सर्वसम्पत्करी भिक्षा भवतीति प्रकृतम्, किमर्थमटत इत्याह,'वृद्धाद्यर्थे'वृद्धा वयःपर्यायश्रुतस्थविराः आदिशब्दाद्बालग्लानशिष्य(शैक्ष)कप्राघुर्णकादिपरिग्रहः,तदर्थं तन्निमित्तमिति,अनेन स्वोदरविवरभरणप्रवणान्तःकरणस्य क्षपणकादेर्व्यवच्छेद उक्तः, वृद्धादिवैयावृत्त्यं हि सकलकल्याणवल्लरीकल्पकन्दकल्पं वर्तते, ॥यदाह ॥ "वेयावच्चं निच्चं, करेह संजमगुणे धरन्ताणं ॥ सव्वं किर पडिवाई, वेयावच्चं अपडिवाई [३८] ॥१॥" अतस्तन्निरपेक्षस्य कथं सर्वसम्पत्करभिक्षाभागित्वमिति, तथा 'असङ्गस्य' शब्दादिविषयेष्वनभिष्वङ्गस्य ॥आह च ॥"सद्दाइएसु साहू, मुच्छं न करेज्ज गोयरगओ य ॥ एसणजुत्तो होज्जा,गोणीवच्छो गवत्तिव्व[३९] ॥१॥" अथवा वृद्धग्लानाद्यर्थमटतोऽपि तदुद्देशलब्धपेशलदालिशालिकूरादिभोजनेष्वलुब्धस्य, तदितरस्य तु तथाविधवैयावृत्त्यकरा(रणा)देर्व्यवच्छेदः, तथा 'भ्रमरोपमया'मधुकरनिदर्शनेन यथा हि मधुकरः कतिपयमकरन्दकणस्वीकरणतः कुसुमक्लमाकरणेनात्मानमनुप्रीणात्येवमेव मुनिमधुकराः स्तोकस्तोकान्नमकरन्दग्रहणतो गृहपतिप्रसूनपीडानापादनेन संयमात्मानमनुपालयन्तीत्येवंरूपेणेति,अनेन च य एकत्र स-

---

३७ अहो जिनैरसावद्या, वृत्तिः साधूनां देशिता (दर्शिता)॥ मोक्षसाधनहेतोः साधुदेहस्य धारणाय ॥१॥

३८ वैयावृत्त्यं नित्यं कुरुत संयमगुणान्धरताम्। सर्वं किल प्रतिपाति वैयावृत्त्यमप्रतिपाति ॥१॥

३९ शब्दादिकेषु साधुः मूर्च्छां न कुर्यात् गोचरगतश्च। एषणायुक्तो भवेद् गोवत्सो गौरितीव ॥१॥

ग्रामे भुङ्क्ते तस्य निरासः, एकत्र भोजने हि कथञ्चिदुद्गमदोषपरिहरणप्रयत्नपरस्यापि पुरःकर्मपश्चात्कर्मासंयतचेष्टाकृतदोषप्रसङ्ग इति, 'अटतः' पर्यटतो भिक्षाकुलेष्वनेन च अनटतो निषेधः, अनटनेन हि भिक्षाग्रहणेऽभ्याहृतदोषसद्भावः, अथ ये गृहस्थाः साधुवन्दनार्थमागच्छन्ति तदानयनेऽसौ न भविष्यति वन्दनार्थागमनस्य गृहस्थप्रयोजनत्वात्साध्वर्थभक्तानयनस्य च प्रासङ्गिकत्वादिति, नैवम् , अभ्याहृतदोषाभावेऽपि मालापहृतनिक्षिप्तपिहिताद्यनेकविधदोषप्रसङ्गात् , अथ गृहस्थवचनप्रामाण्यात्तदवगमे तत्परिहारो भविष्यति, सत्यम् , किन्तु गृहस्थहस्तस्थार्पितादिदोषो दुष्परिहार्यः स्यादिति, किंविधेन आशयविशेषेणाटत इत्याह, 'गृहिदेहोपकाराय' गृहिणां स्वशरीरस्य चोपग्रहार्थम् । तत्र गृहिणामारम्भपरिग्रहगृहीतात्मनां दुर्गतिगमननिबन्धनकर्मबन्धवतां धर्मसाधककायोपकारकाहारग्रहणद्वारेणात्यन्तिकसुखफलनिर्वाणतरुबीजकल्पपुण्यसम्पादनत उपकारः, तथा स्वदेहस्याहारविरहितस्य शुद्धधर्मसौधशिखरमध्यासितुमशक्तस्याहारलक्षणावलम्बनदानत उपकारः। अनेन तु यो गृहिणामप्रीत्युत्पादनेन धर्मकायस्य चाहारलौल्याद्धर्मानुपग्राहकाहारग्रहणेनापकारी तस्य निषेधः, तथा दैन्याच्छ्रीमत्पुत्रादितया लज्जमानो वा योऽटति तन्निषेधायाह, 'वहिता' यत्यवस्थोचिता इयं तीर्थकरैरप्याचरितत्वादुपदिष्टत्वाच्च, 'इत्ये' वंप्रकारात् . 'शुभाशया' त्प्रशस्ताध्यवसायात् , अथवा गृहिदेहोपकाराय विहिता जिनैरुपदिष्टा भिक्षा इति एवंरूपाच्छुभाशयादटत इति प्रकृतमेवेति ॥३॥

उक्तविपर्ययेण पौरुषघ्नी भवतीति तत्स्वरूपप्रतिपादनायाह ॥

प्रव्रज्यां प्रतिपन्नो य–स्तद्विरोधेन वर्तते ॥ असदारम्भिणस्तस्य, पौरुषघ्नीति कीर्तिता ॥४॥ 

(वृत्तिः)'प्रव्रज्यां' सर्वविरतिलक्षणां,'प्रतिपन्नो'ऽभ्युपगतः सन्, 'यः'प्राणी, 'तद्विरोधेन'प्रव्रज्याविरोधेन मूलगुणोत्तरगुण-विराधनारूपेण पूर्वोक्तध्यानज्ञानगुर्वाज्ञानपेक्षत्वलक्षणेन वा हेतुना,'वर्तते' चेष्टते, 'तस्येति' प्रव्रज्याविरोधवर्तिनः किंविधस्य 'असदारम्भिणः' असदशोभनं भूतोपमर्दादिकं वस्त्वारभत इत्येवंशीलो यः स तथा तस्य, 'पौरुषघ्नी' उक्तनिर्वचना भिक्षेति प्रकृतम्, 'इति' अनेनानन्तरोक्तेन वक्ष्यमाणेन वा कारणेन,'कीर्तिता' संशब्दिता। ननु प्रव्रज्याविरोधाभिधानादेवासदारम्भित्वस्यावगतत्वात्किमेतद्ग्रहणेनेति, सत्यं, किन्तु विवक्षितभिक्षाहेतुत्वेनाभिधानमस्येति न दोषः, तथा च यतोऽसौ असदारम्भी इतिहेतोस्तस्य पौरुषघ्नीति कीर्तितेति वाक्यार्थः स्यात्, अथवा तस्य प्रव्रज्याविरोधवर्तिनः प्रव्रजितस्यासदारम्भिणश्चाशोभनारम्भस्य गृहिण इत्यर्थः असर्वदारम्भकस्य वाऽष्टम्यादिष्वारम्भवर्जकस्येत्यर्थः,इह च व्याख्याने समुच्चयार्थचशब्दाभावेऽपि समुच्चयः प्रतीयते।। "अहरहर्नयमानो(ऽपि), गामश्वं पुरुषं पशुम् ॥ वैवस्वतो न तृप्येत, सुराया इव दुर्मदी ॥१॥" इत्यादाविवेति ॥४॥ यदुक्तं 'वक्ष्यमाणेन वा कारणेन तदाह'। अथवा प्रव्रज्याविरोधवर्तिनं सामान्यं वा प्राणिनं प्रति पौरुषघ्न्या अन्वर्थघटनामाह ॥

धर्मलाघवकृन्मूढो, भिक्षयोदरपूरणम् ॥ करोति दैन्यात्पीनाङ्गः, पौरुषं हन्ति केवलम् ॥५॥

(वृत्तिः) 'धर्मस्य' श्रुतचारित्रलक्षणस्य, 'लाघव'मपभ्राजनं कर्तुं शीलमस्य धर्मलाघवं वा करोति "अनुचितकारिणः खल्वार्हता" इत्यवर्णमुत्पादयति यः, स 'धर्मलाघवकृत्,' तथा 'मूढो' मुग्धो यः सदानारम्भिविहितायामपि भिक्षायामसदारम्भ्यपि तदुचितमात्मानमाकलयन्मोहमाश्रयति यो वा पूर्वोदितानि वृद्धाद्यर्थादीन्यटनविशेषणानि कुशास्त्रवासना-

वासितत्वेन नाश्रयति किमित्याह,'भिक्षया' भिक्षणेन 'उदरपूरणं' जठरपिठरविवरभरणं, 'करोति'विदधाति 'दैन्यात्' दीनवृत्त्या, अवस्थाया ह्यनौचित्येन भिक्षणेन मनसोद्धतस्यापि परमार्थतो दीनत्वमेव,विदुषामश्लाघ्यत्वादिति। 'पीनाङ्गो' रोगाद्यपीडितत्वेनोपचितदेहः। अनेन खेदमाह। रोगादिपीडितदेहो भिक्षयोदरं पूरयन्नपि नोपहन्ति पौरुषं पौरुषस्य रोगादिभिरेव हतत्वादिति। इह च यतोऽसौ तस्मादितिवाक्यशेषो दृश्यः॥ 'पौरुषं' पुरुषभावं पुरुषकर्म वा पुरुषकारमित्यर्थः, 'हन्ति' विनाशयति, 'केवलं' यदि परं न पुनः पुरुषार्थं कंचन पुष्णाति॥ तथाहि॥ न तावत्तस्य धर्मार्थमोक्षार्थावसदारम्भित्वात् नाप्यर्थार्थकामार्थौ भिक्षाभोजित्वात्, भिक्षाकस्य ह्यर्थकामौ सतामप्रशंसनीयाविति एवं च भिक्षया यः पौरुषं हन्ति,तस्य पौरुषं भिक्षैव हन्ति इति तत्प्राधान्यात्पौरुषघ्नी भिक्षेति व्यपदिश्यत इति॥५॥अथ तृतीयभिक्षामाह॥

निःस्वान्धपङ्गवो ये तु, न शक्ता वै क्रियान्तरे॥ भिक्षामटन्ति वृत्त्यर्थं, वृत्तिभिक्षेयमुच्यते॥६॥

(वृत्तिः) 'निःस्वान्धपङ्गवो' निर्धनोपहतनयनचलनबलहीनाः,'ये' केचन,'तुशब्दः'पुनःशब्दार्थः। तस्य चैवं प्रयोगः, यः प्रव्रज्याविरुद्धवृत्तिस्तस्य पौरुषघ्नी भिक्षा ये पुनर्निःस्वादयः किंविधा वैशब्दस्यैवकारार्थत्वात् 'नञा'सम्बन्धान्नैव 'शक्ताः'समर्थाः, 'क्रियान्तरे' भिक्षाव्यतिरिक्ते कृषिवाणिज्यादिके कर्मविशेषे, ये तु क्रियान्तरसमर्थास्तेषां पौरुषघ्न्येवेतिगर्भार्थः। भिक्ष्यत इति 'भिक्षा' भिक्षणं वा 'भिक्षा,' ताम् 'अटन्ति' भ्रमन्ति, किमर्थमित्याह, वृत्तिर्वर्तनं जीविका तस्यै इदं 'वृत्त्यर्थं,' तेषामिति गम्यते, 'वृत्तिभिक्षा' उक्तनिर्वचना, 'इयम्' एषा, 'उच्यते' अभिधीयते इति॥६॥

किमियमेषामुचिता अनुचिता वेत्याशङ्कायामाह॥

नातिदुष्टापि चामीषा—मेषा स्यान्न ह्यमी तथा ॥ अनुकम्पानिमित्तत्वाद्, धर्मलाघवकारिणः ॥७॥

(वृत्तिः) 'न' नैव, 'अतिदुष्टा' अत्यन्तदोषवती पौरुषघ्नीव तद्वाजाम् , 'अपि च'त्यस्यानुक्तसमुच्चयार्थत्वान्नातिप्रशस्या च सर्वसम्पत्करीव तद्भागिनाम् , 'अमीषां' निःस्वान्धादीनाम् , 'एषा' ऽनन्तरोक्ता वृत्तिभिक्षा, 'स्यात्' भवेत् , कुत एतदेवमित्याह, 'न' नैव, 'हि'शब्दो यस्मादर्थः, ' अमी' एते निःस्वादयः, 'तथा' तेन प्रकारेण येन पौरुषघ्नीभागिनः, ' धर्मलाघवकारिणः' जिनवचनावर्णहेतवः, कुत इत्याह, 'अनुकम्पानिमित्तत्वात् ' स्वविषये जनकरुणायाः कारणत्वात्तेषां तथाविधबालवदिति । प्रयोगश्चात्र, धर्मलाघवहेतवो न भवन्ति न तेषां भिक्षादोषोऽस्ति यथा साधूनाम्, धर्मलाघवाहेतवश्च तथा निःस्वादयोऽतस्तेषां न दुष्टा भिक्षेति, न चाभ्यां हेतुदृष्टान्ताभ्यां निःस्वादीनां सर्वसम्पत्करी प्राप्नोतीति वाच्यम् , अयतित्वेन तेभ्यस्तस्या निवर्तित्वात् , सर्वसम्पत्करी हि यतित्वेन व्याप्ता, अतो यतित्वं निवर्तमानं तां निवर्तयतीति ॥ ७ ॥

इह भिक्षाकाणां भिक्षाफलं यथार्थैस्तन्नामभिरेवोक्तमथ दातॄणां फलनिरूपणायाह ॥

दातॄणामपि चैताभ्यः, फलं क्षेत्रानुसारतः ॥ विज्ञेयमाशयाद्वापि, स विशुद्धः फलप्रदः ॥ ८ ॥

( वृत्तिः ) न केवलं भिक्षाग्राहकाणां फलं सर्वसम्पत्कराद्युक्तलक्षणं भवति, ' दातॄणामपि च ' भिक्षादायकानामपि च गृहिणाम् , 'एताभ्यः' अनन्तरोदिताभ्यो भिक्षाभ्यः, पाठान्तरे तु 'एतेभ्यो' यत्यादिभिक्षाकेभ्यः सकाशात् , 'फलं' प्रयोजनं कुशलकर्मबन्धादि भवति, कथमित्याह 'क्षेत्रानुसारतः ' क्षेत्राणि धान्यावापभूमयस्तानीव ये यत्यादयो भिक्षाका धान्यवपनसाधर्म्यात्ते क्षेत्राणि तेषामनुसार आनुरूप्यं क्षेत्रानुसारस्ततः क्षेत्रानुसारतः तमाश्रित्य गुणवद्गुणविहीनपात्रा-

पेक्षयेत्यर्थः, 'विज्ञेयं' ज्ञातव्यम् ॥तथाहि॥ गुणवते पात्राय दीयमानं महाफलम् ॥यदाह॥"(समणोवासगस्स णं भंते!) तहारूवं समणं वा माहणं वा पडिहयपच्चक्खायपावकम्मं तहाविहेणं फासुएणं एसणिज्जेणं असण४ पडिलाभेमाणस्स भन्ते किं कज्जइ?। गोयमा! एगन्तसो निज्जरा कज्जइ, नत्थि से अप्पे वि पावे कम्मेत्ति ॥४०" तथा अल्पगुणाय दीयमानमसत्फलमेव॥यदाह,॥"तहारूवं समणं वा माहणं वा अपडिहयअपच्चक्खायपावकम्मं तहाविहेणं फासुएण वा अफासुएण वा एसणिज्जेण वा अणेसणिज्जेण वा असण४ पडिलाभेमाणस्स भन्ते किं कज्जइ?। गोयमा! एगन्तसो पावे कम्मे कज्जइ,नत्थि से अप्पा वि निज्जरा ॥४१" अन्धादिदानं त्वनुकम्पारूपप्रशस्यभावपूर्वकत्वात्तेषामपगुणत्वेऽपि किञ्चिच्छुभफलनिबन्धनमागमोक्तत्वात्तस्य॥ यदाह॥ "दट्ठूण पाणिनिवहं,भीमे भवसायरम्मि दुक्खत्तं ॥ अविसेसओणुकंपं,दुहावि सामत्थओ कुणइ४२॥१॥" 'क्षेत्रानुसारत'इति वा दानफलव्यवस्था व्यवहारनयमाश्रित्योक्ता॥ अथ निश्चयनयमतेनाह॥'आशयात्' अध्यवसायाच्छुभतरेतरादिभेदात् फलमिति प्रक्रमः अध्यवसायो हि शुभाशुभफलेषु परमं कारणं वर्तते ॥आह॥ "एक्क-

---

४० तथारूपं श्रमणं वा माहनं वा (ब्राह्मणं वा) प्रतिहतप्रत्याख्यातपापकर्माणं तथाविधेन प्रासुकेन एषणीयेन अशन४ प्रतिलाभयता भदन्त किं क्रियते । गौतम, एकान्तेन निर्जरा क्रियते, नास्ति तस्य अल्पमपि पापं कर्मेति ॥

४१ तथारूपं श्रमणं वा ब्राह्मणं वा अप्रतिहताप्रत्याख्यातपापकर्माणं तथाविधेन प्रासुकेन वा अप्रासुकेन वा एषणीयेन वा अनेषणीयेन वा अशन४ प्रतिलाभयता भदन्त किं क्रियते ?। गौतम! एकान्तेन पापं कर्म क्रियते, नास्ति तस्याल्पापि निर्जरा ॥

४२ दृष्ट्वा प्राणिनिवहं भीमे भवसागरे दुःखार्त्तम् । अविशेषतोऽनुकम्पां द्विधापि सामर्थ्यतः करोति ॥

म्मि वि पाणिवहम्मि, देसियं सुमहंतरं समए। एमेव निज्जरफला,परिणामवसा बहुविहा य ॥१॥ [४३]" 'निज्जरफलत्ति' तपःप्रभृतय इति। एवं च गर्वमत्सरादिपरिणामतो गुणवतेऽपि पात्राय ददतो न शुभफलम्, अनुकम्पाप्रवचननिन्दारक्षणादिपरिणामात् पुनरगुणवद्दानमपि शुभफलमिति। 'वाशब्दो' विकल्पार्थः 'अपिशब्दो' भिक्षायाः फलविशेषं प्रति कारणान्तरसमुच्चयार्थः, तच्च कारणान्तरं दातव्यविशेषो दानावसरो वा, दातव्यविशेषमाश्रित्योक्तम् ॥"(समणोवासगस्स णं भंते) तहारूवं समणं वा माहणं वा पडिहयपच्चक्खायपावकम्मं अफासुएणं अणेसणिज्जेणं असण४ पडिलाभेमाणस्स (भन्ते!)किं कज्जइ ?। गोयमा! अप्पे पावकम्मे बहुययरा से निज्जरा[४४]" ॥ तथा दानावसरमप्याश्रित्योक्तम् ॥"संथरणम्मि असुद्धं, दुण्हवि गेण्हंतादिंतयाणहियं। आउरदिट्ठंतेणं,तं चेव हियं असंथरणे ॥१॥[४५]"एवमनेकविधेषु भिक्षाफलविशेषकारणेषु किमवश्यं फलविशेषसाधकमित्याशङ्कायामाह, 'स विशुद्धः फलप्रदः' सोऽनन्तरोदिताशयः, 'विशुद्धो' निदानादिसकलकलङ्कविकलः,'फलप्रदः'भिक्षासु विशिष्टस्वर्गापवर्गादिफलसाधको,यतः परिणामोऽन्तरङ्गमिह कारणम्॥ यदाह॥"परमरहस्समिसीणं,समत्तगणिपिडगझरियसाराणं॥परिणामियं पमाणं,निच्छयमवलंबमाणाणं॥१॥[४६]"

---

४३ एकस्मिन्नपि प्राणिवधे देशितं सुमहदन्तरं समये। एवमेव निर्जरफलानि परिणामवशाद्बहुविधानि च ॥१॥

४४ तथारूपं श्रमणं वा ब्राह्मणं वा प्रतिहतप्रत्याख्यातपापकर्माणं अप्रासुकेन अनेषणीयेन अशन४ प्रतिलम्भयता किं क्रियते। गौतम, अल्पं पापकर्म बहुतरा तस्य निर्जरा ॥४५ संस्तरणेऽशुद्धं द्वयोरपि गृह्णद्ददतोरहितम्। आतुरदृष्टान्तेन तदेव हितमसंस्तरणे ॥१॥

४६ परमरहस्यं ऋषीणां समस्तगणिपिटकस्मृतसाराणाम्। पारिणामिकं प्रमाणं निश्चयमवलम्बमानानाम् ॥१॥

ननूत्प्रव्रजिताः सिद्धपुत्रसारूपिलक्षणा भिक्षाका जिनागमे श्रूयन्ते ॥ यतो व्यवहारचूर्ण्यामुक्तम् ॥"जो अणुसासिओ न पडिनियत्तो सो सारूवियत्तणेण वा सिद्धपुत्तत्तणेण वा अच्छिउं किंचिकालं,×सारूविओ नाम सिरमुण्डो अरजोहरणो अलाउएहिं भिक्खं हिण्डइ अभज्जो य, सिद्धपुत्तो* नाम सवालओ भिक्खं हिण्डइ वा न वा,वराडएहिं वेंटलियं करेइ लट्ठिं(ट्ठिं)वा वाव(ध) रेइत्ति[४७]" ॥ तत एतेषां भिक्षाकाणां कतमा भिक्षा । तत्र न तावत्सर्वसम्पत्करी तेषामयतित्वात् , नापि पौरुषघ्नी त्यक्तप्रव्रज्यत्वेन प्रव्रज्याविरोधवर्तित्वाभावात् , नापि वृत्तिभिक्षा क्रियान्तरकरणसमर्थत्वात् ,भिक्षान्तरस्य चानभिधानादिति। अत्रोच्यते॥ वृत्तिभिक्षेति सम्भावयामो निःस्वत्वात्तेषां क्रियान्तरकरणासामर्थ्याच्च,उत्प्रव्रजितो हि प्रायः क्रियान्तरकरणासमर्थो भवति, पौरुषघ्नी वासौ,यतो न प्रव्रज्याप्रतिपन्नस्यैव सा,क्रियान्तरकरणसमर्थस्य अन्यस्याप्यशोभनारम्भस्य तस्या इष्टत्वात्पौरुषहननलक्षणान्वर्थयोगाच्च,अथवा तेषामत्यन्तावद्यभिरूणां संवेगातिशयवतां पुनः प्रव्रज्यां प्रति प्रतिबद्धमानसानां सर्वसम्पत्करीभिक्षाया बीजकल्पासौ स्यात्। तत्त्वं पुनरिह केवलिनो विदन्तीति ॥ ८ ॥

## ॥ पञ्चमाष्टकविवरणं समाप्तम् ॥ ५ ॥

---

४७ योऽनुशिष्टो न प्रतिनिवृत्तः स सारूपिकत्वेन वा सिद्धपुत्रत्वेन वा स्थित्वा कञ्चित्कालम् ,सारूपिको नाम मुण्डशिरा अरजोहरणःअलाबुकैः भिक्षां हिण्डते अभार्यश्च(भवति),सिद्धपुत्रो नाम सवालःभिक्षां हिण्डते वा न वा वराटकैःवेण्टलिकां करोति लष्टिं (यष्टिं) वा व्यापा(धा)रयति इति ॥ *समानं रूप सरूपं तेन चरतीति सारूपिकः ॥ रजोहरणवर्जसाधुवेषधारी गृहस्थः। मुण्डितशिराः शुक्लवासःपरिधायी कच्छामबध्नानोऽभार्यो भिक्षां हिण्डमानः सारूपिक उच्यते ॥ मुंडसिराया सुक्किल्लवत्थधरो नवियच्छं। हिंडइ नवा अभज्जोसारुवी परिसो होइ ॥१॥ इत्यादिस्वरूपमन्यत्र॥ ×मुंड; सशिखाकः समार्यको गृहस्थविशेषः सिद्धपुत्रः ॥ सभार्यकोऽभार्यको वा णियमा सुक्कंबरधरो खुरमुंडो ससिहो असिहो वा णियमा अडंडगो अपत्तगो य सिद्धपुत्तो भवति ॥२॥ इत्याद्यन्यत्र ॥

## ॥ अथ षष्ठं सर्वसम्पत्करीभिक्षाष्टकम् ॥

अधिकारिवशेन प्राग्भिक्षा निरूपितास्तासां च सर्वसम्पत्करी परमेति तस्या एवाथ स्वरूपमाह ॥

**अकृतोऽकारितश्चान्यै-रसंकल्पित एव च ॥ यतेः पिण्डः समाख्यातो, विशुद्धः शुद्धिकारकः ॥१॥**

(वृत्तिः) 'अकृतः' क्रयणहननपचनैर्भोज्यतया स्वयमनिर्वर्तितः, एवमेव, 'अकारितश्च' अविधापितः, 'चकारः' समुच्चये, 'अन्यैः' कर्मकरादिभिः, 'असंकल्पित एव च' क्रयणादिप्रकारैः साधवे इदं दास्यामीत्यनभिसन्धितोऽन्यैरेव एवकारेणान्यथाविधपिण्डस्य साधोरग्राह्यतामाह ॥आह च॥ "पिण्डं असोहयन्तो,अचरित्ती एत्थ संसओ नत्थि॥ चारित्तम्मि असन्ते,सव्वा दिक्खा निरत्थिआ[४८]॥१॥" चकार उक्तसमुच्चये। अकृतादिपदैश्च क्रयणक्रायणतदनुज्ञानहननघातनतदनुज्ञानपचनपाचनतदनुज्ञानलक्षणकोटीनवकशुद्धता पिण्डस्योक्तेति। 'यतेः' पृथिव्यादिसंरक्षणप्रयत्नवतः, 'पिण्ड' ओदनादिरूपः,उपलक्षणत्वादस्य शय्योपकरणे च, 'समाख्यातो' विगतरागादिदोषसकलपदार्थसार्थस्वभावावभासनसहसंवेदनेन निर्वाणनगरगमनासमानमार्गायमाणचरणकरणविशुद्धिहेतुतयोपलभ्य सम्यगभिहितस्तीर्थकरैरिति नान्तरायदोषास्तेषां। पुनः किंविधः पिण्ड इत्याह। 'विशुद्धः' सकलदोषवियुक्तस्तथा विशुद्धत्वादेव 'शुद्धिकारकः' कर्ममलकलङ्कविकलताकारीति। अथवा कस्मादकृतादिगुणः पिण्डो यतेः समाख्यात इत्याह,'विशुद्धो' विशुद्ध एव कृतादिदोष-

---

४८ पिण्ड अशोधयन्, अचारित्री अत्र संशयो नास्ति ॥ चारित्रे असति, सर्वा दीक्षा निरर्थिका ॥ १ ॥

रहित एव 'शुद्धिकारको' भवति नान्यः, विशुद्ध्यर्थी च यतिर्भवप्रपञ्चोपचितकल्मषमलपटलस्येति ॥ १ ॥

असंकल्पित एव चेत्युक्तं तस्य च परमतेनासम्भवमुपदर्शयन्नाह ॥

**यो न संकल्पितः पूर्वं, देयबुद्ध्या कथं नु तम् ॥ ददाति कश्चिदेवं च, स विशुद्धो वृथोदितम् ॥ २ ॥**

(वृत्तिः) 'यः' पिण्डो,'न' नैव,'संकल्पितो'ऽभिसन्धितः, 'पूर्वं' दानकालात्, 'देयबुद्ध्या' दातव्योऽयं मया भिक्षुभ्य इत्येवंरूपया धिया,'कथमिति' क्षेपे, 'नु' इति वितर्के,केन प्रकारेण न कथञ्चिदिति यावत्, 'तं' पिण्डं, 'ददाति'भिक्षुभ्यः प्रयच्छति, 'कश्चित्' कोऽपि दायकः प्राणी न कोऽपीत्यर्थः, दानार्थमसंकल्पितस्यासत्त्वेन दातुमशक्यत्वादिति भावः । 'एवं च' अमुना प्रकारेणासंकल्पितस्य देयस्यासम्भवे सति, 'सो'ऽसंकल्पितपिण्डो 'विशुद्धो' निरवद्य इति यदुक्तं प्राक् तद्,' वृथा ' व्यर्थमसम्भवाद्, ' उदितं ' भणितमिति ॥ २ ॥

असंकल्पित एव पिण्डो ग्राह्यो यतेरिति अतस्तत्रैवाभ्युपगमे दूषणान्तरमाह ॥

**न चैवं सद्गृहस्थानां, भिक्षा ग्राह्या गृहेषु यत् ॥ स्वपरार्थं तु ते यत्नं, कुर्वते नान्यथा क्वचित् ॥ ३ ॥**

(वृत्तिः) न केवलमसंकल्पितपिण्डासम्भवेन व्यर्थं तत्प्रतिपादनम्, भिक्षा च न ग्राह्या सद्गृहेषु भवतीति वाक्यार्थः । पदार्थस्त्वेवं,'नेति' प्रतिषेधे, 'चशब्दो' दूषणान्तरसमुच्चये,'एवमिति' असंकल्पितपिण्डाभ्युपगमे सति, 'सद्गृहस्थानां' ब्राह्मणादिशोभनागारिकाणां, 'गृहेषु' वेश्मसु, 'भिक्षा' समुदानं, 'ग्राह्या ' आदातव्या, कुत एवमेतदित्यत आह, 'यत्' यस्मात्कारणात्, 'स्वपरार्थं तु' आत्मभिक्षाचरनिमित्तमेव, 'ते' सद्गृहस्थाः, 'यत्नं' पाकनिर्वर्तनप्रयासं,'कुर्वते'विदधति,

'नान्यथा' भिक्षाचरदानासंकल्पेन स्वार्थमेव, 'क्वचित्' कदाचनापि, स्वनिमित्तमेव पाकप्रयत्ने सद्गृहस्थत्वायोगादिति, यस्मात्॥"स्वकर्माजीवनं कुल्यैः,समानऋषिभिर्वैवाह्यं,ऋतुगामित्वं,देवतापित्रतिथिभर्तव्यपोषणं,शेषभोजनं चेति गृहस्थधर्मः"॥ अतिथिश्च यतिरपि भवति भोजनकालोपस्थायित्वात्तस्यापीत्यर्थः ॥३॥ पर एवाचार्यमतमाशङ्कमान आह ॥

**संकल्पनं विशेषेण, यत्रासौ दुष्ट इत्यपि ॥ परिहारो न सम्यक् स्या—द्यावदर्थिकवादिनः ॥४॥**

(वृत्तिः) 'संकल्पनं' अभिसन्धानं 'विशेषेण' अमुष्मै साधवे मयेदं दातव्यमित्येवमसामान्यतः,'यत्र' पिण्डे, 'असौ' स एव पिण्डो, 'दुष्टो' दोषवाङ्नान्यः,'इत्यपि'अयमनन्तरोदितोऽपि,न केवलमसंकल्पितपिण्डाभ्युपगमो न सम्यगित्यपिशब्दार्थः, 'परिहारः' पूर्वपक्षवाद्युक्तदूषणपरिहरणं,'न' नैव,'सम्यक्' सङ्गतः, 'स्याद्'भवेत्,कस्येत्याह, 'यावदर्थिकवादिन'-स्तव तत्र यावन्तो यत्परिमाणास्ते च तेऽर्थिनश्च भिक्षुकादयो यावदर्थिनस्ते प्रयोजनं यस्य निष्पादने स यावदर्थिकः पिण्डः तमपि परिहार्यतया यो वदतीत्येवंशील: स तथा तस्य'यावदर्थिकवादिनः' यावदर्थिनिमित्तनिष्पादितपिण्डपरिहारवादित्वाद्भवत इति भावः॥ यतोऽभिहितम् ॥ "जावंतियमुद्देसं, पासण्डीणं भवे समुद्देसं ॥ समणाणं आएसं, निग्गंथाणं समाएसं ४९॥१॥"इति,तथा॥"असणं पाणगं वावि,खाइमं साइमं तहा ॥ जं जाणिज्ज सुणेज्जा वा,दाणट्ठा पगडं इमं॥१॥ तं भवे (तारिसं) भत्तपाणं तु, संजयाण अकप्पियं॥ दितियं पडियाइक्खे,न मे कप्पइ तारिसं५० ॥२॥"पूर्वपक्षवाद्येवाह॥

**विषयो वाऽस्य वक्तव्यः, पुण्यार्थं प्रकृतस्य च॥ असम्भवाभिधानात् स्या—दातस्यानाप्ततान्यथा ॥५॥**

---

४९ यावतामिदमुद्देशं, पाषण्डिनां भवेत् समुद्देशं॥ श्रमणानामादेशं,निर्ग्रन्थानां समादेशमिति ॥१॥ ५० अशनं पानं वापि,खादिमं स्वादिमं तथा॥यज्जानीयात् शृणुयाद्वा,दानार्थं प्रकृतमिदम्॥१॥तद्भवेद्भक्तपानं तु संयतानां अकल्पिकं॥ ददतं प्रत्याख्यायात्,न मे कल्पते तादृशम्॥२॥

(वृत्तिः) यावदर्थिकपरिहारवादिना भवता पूर्वोक्तपरिहारासम्यक्त्वमभ्युपगन्तव्यं, नो चेत् 'विषयो वा' गोचरो वा, वाशब्दो विकल्पार्थः, 'अस्य' यावदर्थिकपिण्डस्य, 'वक्तव्यः' वाच्यः, अमुमर्थिविशेषमाश्रित्य निर्वर्त्तितोऽयं परिहार्य इत्येवं गोचरान्तरपरिकल्पनयैवायं शक्यः परिहर्तुं नान्यथा इति भावः। तथा न केवलं यावदर्थिकपिण्डस्य विषयो वक्तव्यः, 'पुण्यार्थं' पुण्यनिमित्तं, 'प्रकृतस्य च' निष्पादितस्यापि स वक्तव्यो, यतः पुण्यार्थं प्रकृतस्यापि पिण्डस्य परिहारोऽभ्युपगम्यते भवद्भिः॥ यदाह॥ "असणं पाणगं वावि, खाइमं साइमं तहा ॥ जं जाणिज्ज सुणेज्जा वा, पुन्नट्ठा पगडं इमं॥१॥ तं भवे०[51]॥" इत्यादि, अशक्यपरिहारश्चायमपीति तस्यापि विषयविशेषो वाच्य इति भावः। अथ किं विषयान्तराभिधानेनेत्याचार्यमतमाशंक्याह, 'अन्यथा' यावदर्थिकपुण्यार्थप्रकृतपिण्डयोर्विषयविशेषाप्रतिपादने, 'आप्तस्य' क्षीणरागद्वेषमोहदोषतयाऽध्वंसकवचनत्वेनैकान्तहितस्य शास्त्रप्रणेतुः, 'अनाप्तता' अक्षीणदोषत्वेनाहितत्वं, 'स्याद्' भवेत्, कुत इत्याह, 'असम्भवाभिधानात्' अविद्यमानः सम्भवो यस्य यावदर्थिकादिपिण्डपरिहारस्य सोऽसम्भवस्तस्याभिधानं तस्मात्, असम्भवश्च तस्य "स्वपरार्थं तु ते यत्नं कुर्वते नान्यथा" (अ०६ श्लो०३) इत्यनेन दर्शित एव॥ इति पूर्वपक्षः॥५॥ अत्रोत्तरमाह॥

**विभिन्नं देयमाश्रित्य, स्वभोग्याद्यत्र वस्तुनि ॥ संकल्पनं क्रियाकाले, तद्दुष्टं विषयोऽनयोः ॥६॥**

(वृत्तिः) 'विभिन्नं' अतिरिक्तं, 'देयं' दातव्यमोदनादि, 'आश्रित्य' अङ्गीकृत्य, कुतो विभिन्नमित्याह, 'स्वभोग्यात्' विवक्षितात्मीयौदनादिभोगार्हात्, 'यत्र' यस्मिन्, 'वस्तुनि' ओदनादिपदार्थे, 'संकल्पनं' मेतावदिह कुटुम्बायैतावच्चार्थिभ्यः पुण्यार्थं चेत्यभिसन्धानं, 'क्रियाकाले' पाकनिर्वर्तनसमये, 'तत्' इति यदेतत्संकल्पनं तत्, 'दुष्टं' दोषवद्, 'विषयो'

51 अशनं पानं वापि, खादिमं स्वादिमं तथा ॥ यज्जानीयात् शृणुयाद्वा पुण्यार्थं प्रकृतमिदम्, ॥१॥ तद्भवेत्०॥

गोचरः,'अन्योः' यावदर्थिकपुण्यार्थप्रकृतयोरपि एवंविधसंकल्पनवन्तावेतौ पिण्डविशेषौ परिहार्याविति भाव इति ॥६॥

संकल्पनान्तरं तु न दुष्टमित्येतदाह ॥

स्वोचिते तु यदारम्भे, तथा संकल्पनं क्वचित् ॥ न दुष्टं शुभभावत्वात्, तच्छुद्धापरयोगवत् ॥७॥

(वृत्तिः) स्वस्य शरीरकुटुम्बादेरुचितो योग्यः 'स्वोचित'स्तस्मिन्। 'तु'शब्दः पुनःशब्दार्थः, 'यदिति' संकल्पनं,'आरम्भे' पाकादिरूपे सति, 'तथा' तेन प्रकारेण स्वयोग्यातिरिक्तपाकशून्यतया 'संकल्पन'मिदं स्वार्थमुपकल्पितमन्नमतो मुनीनामुचितदानेनात्मानमथ पूतपापमाधास्यामीति चिन्तनम्, 'क्वचित्' कस्मिंश्चिदेवारम्भे न तु साध्वनुचितद्रव्यपाकरूपे, तदित्येतस्येह दर्शनात्तत्संकल्पनम्, 'न दुष्टं' न दोषवत् न तत्पिण्डदूषणकारणम्, कुत इत्याह, 'शुभभावत्वा'च्चित्तविशुद्धिमात्रत्वात्, न हि तत्संकल्पनं साध्वाद्यर्थपृथिव्यादिजीवोपमर्दनिमित्तमपि तु दायकस्य शुभभावमात्रं 'तदिति' भावः, किंतदित्याह, 'शुद्धापरयोगवत्' यः शुद्धः प्रशस्तोऽपरयोगः संकल्पनव्यतिरिक्तव्यापारो मुनिवन्दनादिस्तद्वत्, यथा हि मुनिविषयो नमनस्तवनादिरनवद्यो व्यापारो न पिण्डदूषणकारणमेवमेवंविधसंकल्पनमपीति भावनेति ॥७॥

यदुक्तमसम्भाविनोऽसंकल्पितस्याभिधानादासस्यानासतेति, (अ० ६ श्लो० ६)तत्परिहरन्नाह ॥

दृष्टोऽसंकल्पितस्यापि, लाभ एवमसम्भवः ॥ नोक्त इत्याप्ततासिद्धि–र्यतिधर्मोऽतिदुष्करः ॥८॥

(वृत्तिः) 'दृष्ट' उपलब्धः,'असंकल्पितस्यापि'यत्याद्यर्थमसम्भावितस्यापि,न केवलं संकल्पितस्यैव लाभो भवन्नीत्या दृष्ट इत्यपिशब्दार्थः,'लाभः'प्राप्तिः, पिण्डस्येति गम्यते,यतो गृहस्था अदित्सवोऽपि सूतककान्तारादिषु तथा भिक्षूणामभावेऽपि तथा रात्र्यादौ भिक्षानवसरेऽपि पाकं कुर्वन्ति तथा कथञ्चिद्ददत्यपीति दृश्यते ॥ आह च ॥ "संभवइ य एसोवि हु, के-

सिंधिय सूयगाइभावे वि ॥ अविसेसुवलम्भाओ, तत्थवि तहलाभसिद्धीओ[५२] ॥१॥" एवं च यदुक्तम्॥ "यो न संकल्पित "(अ०६श्लो०१)इत्यादि "न चैवं सद्गृहस्थानाम्"(अ०६श्लो०३)इत्यादि च,तत्परिहृतम् ।गाथा चेह॥"सिट्ठा वि य केइ इहं,विसेसओ धम्मसत्थकुसलमती॥ इय न कुणन्ति वि अणडणमेवं भिक्खाए वइमेत्तं[५३]॥१॥"यद्यसंकल्पितस्यापि पिण्डस्य लाभो दृष्टः ततः किमित्याह, 'एव'मिति अनेनासंकल्पितप्रकारेण पिण्डलाभदर्शने सति, 'असम्भवः' असम्भावना अप्रासिरसंकल्पितपिण्डस्य, 'नोक्तो' नाभिहित आप्तेन, ततः किमित्याह, इतिशब्दो हेत्वर्थः, तेन असम्भविपिण्डस्यानभिधानाद्धेतोः सम्भविन एवाभिधानादित्यर्थः । 'आप्तताया' असम्भविपिण्डाभिधानसम्भावितानाप्तताव्यतिरेकभूतायाः, सिद्धिः प्रतिष्ठा, 'आप्ततासिद्धिः,' शास्तुरिति गम्यते, अथ भवत्वसंकल्पितपिण्डस्य सम्भवस्तथापि तद्वृत्तेर्दुष्करत्वात्तत्प्रणेतुरनाप्ततैवेत्याह, 'यतिधर्मो 'मूलगुणोत्तरगुणसमुदायरूपः,'अतिदुष्करो'ऽतीवदुष्परिपाल्य इति प्रसिद्धमेव,नानेनास्यानाप्तता भवत्यनन्योपायत्वान्मोक्षस्येति॥ आह च॥" दुक्करयं अह एयं,जइधम्मो दुक्करो चिय पसिद्धं॥ किं पुण एस पयत्तो, मोक्खफलत्तेण एयस्स त्ति[५४] ॥१॥ " ततो हे कुतीर्थिका यदि यूयमात्मनो यतित्वेन सर्वसम्पत्करीं भिक्षां मन्यध्वे, तदा अकृतादिगुणोपेतपिण्डपरिग्रहः कार्य इति प्रकरणगर्भार्थ इति ॥ ८॥

## ॥ षष्ठाष्टकविवरणं समाप्तम् ॥ ६ ॥

---

५२ सम्भवति च एषोऽपि खलु केषांचिच्च सूतकादिभावेऽपि । अविशेषोपलम्भात् तत्रापि तथालाभसिद्धेः ॥१॥
५३ शिष्टा अपि केचिदिह विशेषतः धर्मशास्त्रकुशलमतयः । इति न कुर्वन्ति अपि अनदनमेवं भिक्षायै वचोमात्रम् ॥१॥
५४ दुष्करकमथैतद् यतिधर्मो दुष्कर एव (इति) प्रसिद्धम् । किं पुनः एष प्रयत्नो मोक्षफलत्वेन एतस्य इति ॥१॥

## ॥ अथ सप्तमं प्रच्छन्नभोजनाष्टकम् ॥



अकृतादिगुणसम्पदुपेतः पिण्डो विशुद्धः शुद्धिकारकः इत्युक्तं(अष्टक ६ श्लो १) स च शुद्धिकारकः प्रकटभोजने न सम्भवतीति प्रच्छन्नं भोजनं यतिना विधेयमित्युपदिशन्नाह ॥

**सर्वारम्भनिवृत्तस्य, मुमुक्षोर्भावितात्मनः॥ पुण्यादिपरिहाराय, मतं प्रच्छन्नभोजनम् ॥ १ ॥**

(वृत्तिः) मुमुक्षोर्मतं प्रच्छन्नभोजनमिति क्रिया, किंविधस्येत्याह 'सर्वे' निरवशेषा मनोवाक्कायकृतकारितानुमतिभेदा ये 'आरम्भाः' पृथिव्यादिजीवसंघट्टपरितापातिपातरूपास्तेभ्यो 'निवृत्तो' यः स तथा तस्य, एवं तस्य हि प्रकटं भुञ्जानस्य दीनादिकाय याचमानाय तद्दाने तत्पोषणत आरम्भप्रवृत्तिहेतुत्वेन सर्वारम्भनिवृत्तिक्षतिर्भवतीति तत्परिहारार्थमेतेन प्रच्छन्नमेव भोक्तव्यमित्युपदेष्टुं 'सर्वारम्भनिवृत्तस्ये'त्युक्तम्, अनेन चेह तदन्यस्य व्यवच्छेदस्तस्य हि प्रकटभोजनेऽपि न सर्वारम्भनिवृत्तेः क्षतिस्तदभावादिति, कस्य एवम्भूतस्येत्याह, मोक्तुं मोचयितुं कर्मबन्धनादात्मानमिच्छतीति 'मुमुक्षु' र्दीक्षितस्तस्य, अनेन चामुमुक्षोर्व्यवच्छेदः, तस्य हि पुण्यबन्धस्यानुज्ञातत्वादिति, पुनः किम्भूतस्य, 'भावितः' वासितः स्वपरोपकारकरणधर्मया प्रशमवाहितया जिनाज्ञया वा 'आत्मा' अन्तःकरणं येन स तथा तस्य, एतेन हि साधुसामाचार्यां यत्प्रकटभोजनं तज्जन्यो यः प्रवचनोपघातः स्वपरानर्थनिबन्धनभूतो अप्रशमवहो जिनाज्ञाभङ्गरूपः सो-

ऽवश्यं परिहार्य इत्यावेदितं भवति ॥ निषिद्धं च जिनागमे प्रकटभोजनम् ॥ यदाह ॥ "छक्कायदयावन्तो वि, संजओ दुल्लहं कुणइ बोहिं ॥ आहारे नीहारे, दुगंछिए पिण्डगहणे य[५५]॥ १ ॥" किमर्थमित्याह पुण्यं शुभकर्म, आदिशब्दाद्या-चकाप्रीत्यादिदोषः पापमसंयतपोषणद्वारायातारम्भप्रवर्तनं प्रवचनोपघातश्च परिगृह्यते, अतः पुण्यादीनां परिहारो वर्जनं पुण्यादिपरिहारस्तस्मै 'पुण्यादिपरिहाराय,' 'मतं' सम्मतं विदुषां, 'प्रच्छन्नभोजन'मप्रकटजेमनमिति ॥१॥

कथमप्रच्छन्नभोजने पुण्यबन्ध इत्याह ॥

भुञ्जानं वीक्ष्य दीनादि–र्याचते क्षुत्प्रपीडितः ॥ तस्यानुकम्पया दाने, पुण्यबन्धः प्रकीर्तितः ॥२॥ २ श्लो०

(वृत्तिः) 'भुञ्जानं' अभ्यवहरन्तम्, मुमुक्षुमिति गम्यते, वीक्ष्य' दृष्ट्वा, क इत्याह 'दीनादि'र्दीनो दैन्यवान्, आदिश-ब्दादनाथवनीपकादिपरिग्रहः, 'याचते' मृगयते, किंविधः सन्, 'क्षुत्प्रपीडितः' बुभुक्षात्यन्तबाधितः, अपीडितस्य हि याचने न तथाविधानुकम्पोत्पाद इत्यसौ विशेषितः, 'तस्ये'त्थम्भूतस्य दीनादेरिह सम्प्रदानेऽपि षष्ठी, सम्बन्धस्यैव वि-वक्षितत्वादिति । 'अनुकम्पया' करुणया, 'दाने' भोजनस्य वितरणे, 'पुण्यबन्धः' शुभकर्म्मोपादानम्, 'प्रकीर्तितः' आग-मेऽभिहितः ॥ यदाह॥ "भूयाणुकम्पवयजोग–उज्जओ खन्तिदाणगुरुभत्तो ॥ बन्धइ भूओ सायं, विवरीयं बन्धए इय-रो[५६] ॥१॥" इति कथं प्रकटं मुमुक्षुर्भुञ्जीतेति ॥२॥ भवतु पुण्यबन्धः का नो हानिरिति चेदत आह ॥

---

५५ षट्कायदयावानपि संयतो दुर्लभं करोति बोधिम् । आहारे नीहारे जुगुप्सिते पिण्डग्रहणे च ॥
५६ भूतानुकम्पव्रतयोगोद्यतः क्षान्तिदानगुरुभक्तः ॥ बध्नाति भूयः सातं विपरीतं बध्नाति इतरः ॥

भवहेतुत्वतश्चायं, नेष्यते मुक्तिवादिनाम् ॥ पुण्यापुण्यक्षयान्मुक्ति–रितिशास्त्रव्यवस्थितेः ॥ ३ ॥

(वृत्तिः) 'भवहेतुत्वतः' संसारकारणत्वात्, 'चशब्दः' पुनरर्थः, 'अयं' अनन्तरोद्दिष्टः पुण्यबन्धः, 'नेष्यते' आश्रयणीयतया नानुमन्यते, प्रवचनप्रणेतृभिः, केषामित्याह, मुक्तिं सकलकर्मनिर्मोक्षं स्वकीयस्यानुष्ठानविशेषस्य फलतया वदितुं शीलं येषां ते 'मुक्तिवादिन'स्तेषां मोक्षार्थिनामिति हृदयम्, अथवा 'मुक्तिवादिना'मित्येतत्पदं शास्त्रव्यवस्थितेरित्यनेन सम्बन्धनीयम्, नेष्यते इति कुतोऽवसितमिति चेदत आह। 'पुण्यापुण्यक्षयात्' शुभाशुभकर्मात्यन्तिकप्रलयादेव, 'मुक्ति'र्मोक्षो "जीवस्य स्वरूपेऽवस्थानम्" भवतीति गम्यते, 'इति' एवम्प्रकारायाः, 'शास्त्रव्यवस्थिते' राप्तप्रणीतागमव्यवस्थाया हेतोरिति ॥३॥ अथ दीनादेर्याचमानस्यापि न दास्यत इति कुतः पुण्यबन्धो भविष्यतीत्याशंक्याह ॥

प्रायो न चानुकम्पावां–स्तस्यादत्त्वा कदाचन ॥ तथाविधस्वभावत्वा–च्छक्नोति सुखमासितुम् ॥४॥

(वृत्तिः) यदि न ददाति तदा न भवति पुण्यबन्धः, 'न च' न पुनः, 'अनुकम्पावान्' करुणापरायणान्तःकरणः, 'प्रायो' बाहुल्येन, 'तस्य' याचमानस्य दीनादेः, 'अदत्वा' दानमकृत्वा, 'कदाचन' कस्मिंश्चित्काले,'शक्नोति'समर्थो भवति, सुखं अमनःपीडं यथा भवत्येवम्, 'आसितुं' स्थातुम्, कुत एतदेवमित्याह, तथाविधस्तत्प्रकारो याचमानदीनदाननिबन्धनभूतः स्वभावः स्वरूपं यस्यानुकम्पावतः स तथा तस्य भावस्तत्त्वं तस्मा'त्तथाविधस्वभावत्वात्', इति। हेतुप्रयोगश्चैवम्, यद्यस्तु यत्करणस्वभावं तत्तदकृत्वा नासितुं शक्नोति,यथा मद्यं पुरुषस्य नृत्या(दृसा)दिकं विकारम्',दीनदानस्वभावश्चानुकम्पावान्, तस्माददत्वा सुखमासितुं न शक्नोतीति ॥४॥ अथ पुण्यबन्धभीरुतया दृढचित्ततां विधाय न दास्यतीति कथं पुण्यबन्ध

इत्याशंक्याह, अथवा पुण्यादिपरिहारार्थमिहादिशब्दोपात्तयाचकाप्रीत्यादिदोषप्रतिपादनायाह ॥

अदानेऽपि च दीनादे-रप्रीतिर्जायते ध्रुवम् ॥ ततोऽपि शासनद्वेष-स्ततः कुगतिसन्ततिः ॥५॥

(वृत्तिः) 'अपि च' इति पुनःशब्दार्थः, ततो दाने पुण्यबन्धो भवति, 'अदाने' ओदनाद्यवितरणे, पुनर्दीनादेर्दीनानाथादेरर्थिनः, 'अप्रीतिः' चित्तोद्वेगः, 'जायते' भवति तस्यैव, 'ध्रुव'मवश्यम्भावेन । भवतु सा को दोष इति चेदत आह, 'ततोऽपि' अपिशब्दः पुनःशब्दार्थः, ततस्तस्याः पुनरप्रीतेः सकाशात्, 'शासनद्वेषः' आप्तप्रवचनं प्रति मत्सरस्तस्यैव, ततोऽपि किमित्याह, 'ततः'शासनप्रद्वेषात्,कुगतीनां नारकतिर्यक्कुनरकुदेवत्वलक्षणदुर्गतीनां, सन्ततिः सन्तानः प्रवाहः, 'कुगतिसन्ततिः,' जायते दीनादेरिति प्रक्रम इति॥५॥यदि नाम मिथ्यात्वोपहतबुद्धेस्तस्य स्वदोषादप्रीत्यादयः संजायन्ते ततः किमस्माकमसंक्लेशवन्मानसानामित्याशंक्याह, अथवा पुण्यादिपरिहारार्थमिहादिशब्दोपात्तपापबन्धप्रदर्शनायाह ॥

निमित्तभावतस्तस्य, सत्युपाये प्रमादतः ॥ शास्त्रार्थबाधनेनेह, पापबन्ध उदाहृतः ॥ ६ ॥

(वृत्तिः) 'शास्त्रार्थबाधनेन पापबन्धस्तस्योदाहृत' इति सम्बन्धः,शास्त्रार्थबाधनमेव कुत इत्याह ' निमित्तभावतो 'दीनाद्यप्रीतिशासनद्वेषकुगतिसन्ततीनां कारणत्वेन परेषामप्रीत्यादिवर्जनं हि शास्त्रार्थः, 'तस्ये'ति प्रकटभोजकयतेः, नन्वेवं महामुनीनामपि पापबन्धप्रसङ्गस्तेषामपि महामिथ्यात्वोपहतेष्वप्रीत्यादिनिमित्तत्वादित्याशंक्याह,'सति' विद्यमाने,उपाये प्रच्छन्नभोजनलक्षणे दीनाद्यप्रीत्याद्युत्पत्तिपरिहारस्य हेतौ, महामुनीनां पराप्रीतिपरिहारोपायाभावे तत्परिहारार्थं च प्रयत्ने सति परिणामविशुद्धेः पापबन्धाभाव इति, नन्वेवं हठादीनादिना भुञ्जानस्य साधोर्दर्शने उक्तदोषप्रसङ्ग इत्यत आह,

प्रमादूल: प्रमादेनालस्योपहततया, अप्रमत्तस्य पुनरप्रीत्यादिहेतुत्वेऽपि शास्त्रार्थाबाधनान्नास्ति पापबन्धोऽहिंसकस्यव॥ यदाह ॥ "आया चेव अहिंसा,आया हिंसत्ति निच्छओ एस ॥ जो होइ अप्पमत्तो अहिंसओ,हिंसओ इयरो[५७]॥१॥" शास्त्रार्थस्याप्तागमार्थस्य बाधनमन्यथाकरणं शास्त्रार्थबाधनं तेन हेतुना,महानर्थनिबन्धनं हि शास्त्रार्थबाधनम् । यदाह॥"यः शास्त्रविधिमुत्सृज्य, वर्तते कामचारतः॥ न स सिद्धिमवाप्नोति न सुखं न परां गतिम्॥१॥" शास्त्रं च पराप्रीतिपरिहारप्रयत्नप्रतिपादनपरमेव व्यवस्थितम् ॥तद्यथा॥ "अणुमित्तो वि न कस्सइ,बन्धो परवत्थुपच्चया भणिओ॥ तहवि हु जयन्ति जइणो, परिणामविसोहिमिच्छंता[५८]"॥१॥ तथा "इय सव्वेणवि सम्मं, सक्कं अप्पत्तियं सइ जणस्स॥ नियमा परिहरियव्वं, इयरम्मि सतत्तचिन्ता उ [५९]॥२॥"इह इति प्रकटभोजने,'पापबन्धो'ऽशुभकर्मोपादानम् ,'उदाहृतो'ऽभिहितस्तत्त्ववेदिभिरिति ॥६॥ भवतु शास्त्रार्थबाधेति चेन्नेत्याह ॥

**शास्त्रार्थश्च प्रयत्नेन, यथाशक्ति मुमुक्षुणा ॥ अन्यव्यापारशून्येन, कर्तव्यः सर्वदैव हि ॥७॥**

(वृत्तिः) 'शास्त्रार्थश्च' दृष्टेष्टाभ्यामविरुद्धागमस्यार्थोऽभिधेयं शास्त्रार्थः,'चशब्दः'पुनरर्थ एवकारार्थो वा,तेन शास्त्रार्थः पुनः कर्तव्यः,शास्त्रार्थ एव वा कर्तव्यः, कथम् ,'प्रयत्नेन'महता आदरेण,अनादरकरणे हि विवक्षितफलासिद्धेः कृषीवलानामिव, ननु शास्त्रार्थस्य संहननादिहीनेन समग्रस्य दुष्करत्वादशक्यानुष्ठानोऽयमुपदेश इत्याह, 'यथाशक्ति' शक्तेः शरीरबलस्यानतिक्रमो यथाशक्ति तेन,एवं हि आराधनोक्ता ॥ यदाह ॥ "अनिगूहंतो विरियं, न विराहेइ चरणतवसुएसु।

---

५७ आत्मा चैवाहिंसात्मा हिंसेतिनिश्चयएषः॥योभवति अप्रमत्तोऽहिंसको हिंसकइतरः॥ ५८ अणुमात्रोऽपिनकस्यचिद्बन्धःपरवस्तुप्रत्ययाद्भणितः। तथापि खलु यतन्तेयतयःपरिणामविशुद्धिमिच्छन्तः॥ ५९ इतिसर्वेणापिसर्वंशक्यंअप्रीतिकंसदाजनस्य। नियमात्परिहर्तव्यं इतरस्मिन्

जइ संजमे वि विरियं, न निगूहिज्जा न हाविज्जा[६०] ॥१॥" चरणं न हापयेदित्यर्थः,॥ केनेत्याह 'मुमुक्षुणा' मोक्षेप्सुना, अनन्योपायत्वान्मोक्षस्य ॥यदाह॥ "जम्हा न मोक्खमग्गे, मोत्तूणं आगमं इह पमाणं ॥ विज्जइ छउमत्थाणं, तम्हा तत्थेव जइयव्वं[६१] ॥ १॥ " किम्भूतेन 'अन्यव्यापारशून्येन' शास्त्रार्थकरणव्यतिरिक्तलोकयात्रादिकर्तव्यविरहितेन, व्यापारान्तरेण हि शास्त्रार्थकरणबाधा भवतीति, 'कर्तव्यो'विधेयः। किं प्रतिनियत(तं)कालम् ,नेत्याह,'सर्वदैव' सदैवाऽऽजन्मापीत्यर्थः, 'हिशब्दो' वाक्यालङ्कारार्थो यस्मादर्थो वा,ततश्च यस्माच्छास्त्रार्थ एव कर्तव्यस्तस्मात्प्रच्छन्नमेव भोजनं विधेयमिति प्रक्रम इति ॥७॥ प्रकरणार्थमुपसंहरन्नाह ।

एवं ह्युभयथाप्येत–द्दुष्टं प्रकटभोजनम् ॥ यस्मान्निदर्शितं शास्त्रे, ततस्त्यागोऽस्य युक्तिमान् ॥८॥ 

(वृत्तिः) 'एवं हि' अनेनैवानन्तरोक्तेन प्रकारेण,'उभयथा' दीनादेर्दानादानलक्षणाभ्यां वर्णितस्वरूपाभ्यां प्रकाराभ्याम्, न केवलमेकेनैव प्रकारेण,'अपि तु' उभयथाऽपीत्यपिशब्दार्थः,अथवा इहलोकपरलोकापेक्षया,तत्र परलोकापेक्षया प्रकटभोजनस्य दुष्टत्वमुपदर्शितमनन्तरमेव,इहलोकापेक्षया त्वमुतो नीतिश्लोकादवगन्तव्यम् ॥"प्रच्छन्नं किल भोक्तव्यं, दरिद्रेण विशेषतः ॥ पश्य भोजनदौर्बल्या–द्धटः सिंहेन नाशितः ॥१॥ 'एतद्'ऽनन्तरोक्तं 'प्रकटभोजनम्,' 'दुष्टं' दोषवत्, 'यस्मात्'यतो हेतोः,निदर्शितं'प्रतिपादितम् ,'शास्त्रे' आगमे,'ततः'तस्मात् ,'त्यागः' परिहारः,'अस्य'प्रकटभोजनस्य,'युक्तिमान्'उपपत्तियुक्तः,अतो हे कुतीर्थिका यदि यूयं मुमुक्षवः तदा भवतामपि प्रच्छन्नभोजनं कर्तुं युज्यत इति गर्भार्थ इति॥८॥ 

स्वतत्त्वचिन्ता तु ॥ ६० अनिगूहयन् वीर्यं न विराधयति चरणतपःश्रुतेषु । यदि संयमेऽपि वीर्यं न निगूहयेन्न हापयेत् ॥ ६१ यस्मान्न

## ॥ अथ अष्टमं प्रत्याख्यानाष्टकम् ॥

क्षणमात्रमपि नाविरतेन स्थातव्यमिति भोजनानन्तरं प्रत्याख्यानं निरूपयन्नाह ॥

**द्रव्यतो भावतश्चैव, प्रत्याख्यानं द्विधा मतम्॥ अपेक्षादिकृतं ह्याद्य-मतोऽन्यच्चरमं मतम् ॥१॥**

(वृत्तिः) यद्यपि द्रव्यशब्दः प्रत्याख्यानविषये सचेतनादिष्वशनादिषु वा प्रत्याख्येयेषु ताल्वोष्ठादिषु वा प्रत्याख्यानसूत्रोच्चारहेतुषु द्रव्येषु युज्यते, तथापीहाप्राधान्यार्थो द्रष्टव्यो, यतस्तदर्थस्यैवास्य बहुश आगमे प्रयोगः ॥ यथाह ॥ "अप्पाहन्ने वि इहं,कत्थइ दिट्ठो उ दव्वसद्दोत्ति॥ अंगारमद्दगो जह,दव्वायरियो सयाऽभव्वो[६२] ॥१॥ "ततश्च 'द्रव्यतो'ऽप्रधानभावमाश्रित्याप्रधान(प्रत्याख्यान)मित्यर्थः,अप्रधानता च विवक्षितप्रत्याख्यानफलाप्रसाधकत्वात् १॥अथवा कारणार्थे(र्थो) द्रव्यशब्दः, ॥ यदाह ॥ "समयम्मि दव्वसद्दो, पायं जं जोग्गयाए रूढोत्ति ॥ णिरुवचरिओ उ बहुहा,पओगभेदोवलम्भाओ[६३] ॥ १ ॥ मिउपिण्डो दव्वघडो, सुसावगो तहय दव्वसाहुत्ति ॥ साहू य दव्वदेवो, एमाइ सुए जओ भणितं[६४] ॥ २ ॥" ततश्च 'द्रव्यतो' भावप्रत्याख्यानयोग्यतामाश्रित्य २ ॥ अथवा "अनुपयोगो द्रव्यम्" इति वचनात् 'द्रव्यतो'

---

६२ अप्राधान्येऽपि इह कुत्रचित् दृष्टस्तु द्रव्यशब्द इति । अङ्गारमर्दको यथा द्रव्याचार्यः सदाऽभव्यः ॥१॥

६३ समये द्रव्यशब्दः प्रायो यद्योग्यतायां रूढ इति । निरुपचरितस्तु बहुधा प्रयोगभेदोपलम्भात् ॥१॥

६४ मृत्पिण्डो द्रव्यघटः सुश्रावकस्तथा च द्रव्यसाधुरिति । साधुश्च द्रव्यदेव एवमादि च श्रुते यतो भणितम् ॥२॥

विवक्षितोपयोगशून्यतामाश्रित्य ३॥ अथवा 'द्रव्यत' आहारवस्त्रादिद्रव्याण्याश्रित्य, तल्लाभार्थमित्यर्थः ४॥ तथा भाव-शब्दो यद्यपि प्रत्याख्येयेषु क्रोधादिभावेष्वपीह युज्यते,तथापि उपयोगार्थो द्रष्टव्यस्तथैवागमेऽभिधानात् ॥ तथाहि॥ "मणरहिएण उ काएण,कुणइ वायाए भासए जं च॥ तं होइ दव्वकरणं,मणसहियं भावकरणं तु[६५] ॥१॥"ततश्च भावतो विवक्षितोपयोगमाश्रित्य१॥ परमार्थो वा भावस्तमाश्रित्य,विवक्षितफलसाधनभावमाश्रित्येत्यर्थः,'चशब्दः'समुच्चयार्थः, 'एवकारो'ऽवधारणार्थः,तेन द्रव्यभावाभ्यामेव द्विधा, प्रकारान्तरतस्तु षोढा ॥यदाह॥ "णामं ठवणा दविए, अदिच्छ पडिसेहमेव भावे य॥ एए खलु छब्भेया पच्चक्खाणस्स आइपए (णंमि नायव्वा)[६६]॥१॥"अदित्सा अदानेच्छा,आदिपदम्,"पच्चक्खाणं पच्चक्खाओ×" इत्यादीनां षण्णां द्वाराणां प्रथमद्वारमिति,प्रति प्रवृत्तिप्रातिकूल्येन, आ मर्यादया,ख्यानं कथनम्, 'प्रत्याख्यानम्', निषेधेन विधिना वा प्रतिज्ञा, द्वाभ्यां प्रकाराभ्यां 'द्विधा', 'मत'मिष्टम्,तद्विदामिति, एतयोरेव स्वरूपभावनार्थमाह,अपेक्षणमपेक्षा अभिष्वङ्गः,साऽऽदिर्येषामविद्यादीनां ते तथा,तैः करणभूतैः कृतं विहितम्,'अपेक्षादिकृतम्', 'हि'शब्दःप्रत्याख्यानभेदद्वयभावनासूचनार्थः,आदौ भवम्'आद्यम्', अनन्तरोक्तयोर्द्वयोःप्रथमम्,द्रव्यप्रत्याख्यानमित्यर्थः,

---

६५ मनोरहितेन तु कायेन करोति वाचा भाषते यच्च । तद्भवति द्रव्यकरणं मनःसहितं भावकरणं तु ॥

६६ नाम स्थापना द्रव्यं अदित्सा प्रतिषेध एवं भावश्च । एते खलु षड्भेदाः प्रत्याख्यानस्य आदिपदम् ॥ (ख्याने ज्ञातव्याः)

+ पच्चक्खेयं च आणुपुव्वीए । परिसा कहणविहीया फलं च आईइ छब्भेया ॥१॥ इति गाथापूर्तिः॥

(प्रत्याख्यानं प्रत्याख्याता प्रत्याख्येयं च आनुपूर्व्या ॥ पर्षत् कथनविधिश्च फलं च आदौ षड् भेदाः॥

'अत' एतस्मादपेक्षादिकृतात्, 'अन्यद्'विलक्षणमपेक्षादिशून्यम्, 'चरम'मनन्तरोदितयोर्द्वयोरन्त्यम्,भावप्रत्याख्यानमित्यर्थः, 'मत'मिष्टम्, प्रत्याख्यानस्वभाववेदिनामिति ॥ १ ॥ आद्यविवरणायाह ॥

अपेक्षा चाविधिश्चैवा–परिणामस्तथैव च ॥ प्रत्याख्यानस्य विघ्नास्तु, वीर्याभावस्तथापरः ॥ २ ॥

(वृत्तिः)–'अपेक्षा' ऐहिकामुष्मिकार्थकामिता, 'अविधिः' विधिव्यतिरेकः । विधिश्चायम् ॥ "गिण्हति सयंगहीयं, काले विणएण सम्ममुवउत्तो ॥ अणुभासन्तो पइवत्थु, जाणगो जाणगसमासे[६७] ॥ १ ॥" 'चशब्दौ' समुच्चयार्थौ, 'एवकारो'ऽवधारणार्थः, तस्य चैवं प्रयोगः अविधिरेव च न तु विधिरपीत्यर्थः, तथा 'अपरिणामः' प्रत्याख्यानप्रतिपत्तौ निजश्रद्धारूपपरिणामाभावः, 'तथैव' यथा अपेक्षादयो भावप्रत्याख्यानविघ्नास्तथैवायमपीति, 'चशब्दः' समुच्चये, 'प्रत्याख्यानस्य' भावतो नियमस्य, विघ्नास्तु प्रतिघाता एव द्रव्यप्रत्याख्यानहेतव एते अपेक्षादय इत्यर्थः, वीर्यं वीर्यान्तरायक्षयोपशमादिसमुत्थो जीवपरिणामः, तस्याभावो 'वीर्याभावः', 'तथेति' यत्प्रकारा अपेक्षादयस्तत्प्रकारः प्रत्याख्यानविघ्नः, 'अपरो'ऽन्यइति, अयं च परिणामे सत्यपि प्रत्याख्यानापरिपालनहेतुत्वेन प्रत्याख्यानविघ्नो भवतीति ॥ २ ॥

अपेक्षाकृतप्रत्याख्यानं निष्फलत्वेनाप्रधानत्वाद् द्रव्यप्रत्याख्यानमित्यस्यार्थस्य प्रतिपादनायापेक्षां निन्दन्नाह ॥

लब्ध्याद्यपेक्षयाह्येत–दभव्यानामपि क्वचित् ॥ श्रूयते न च तत्किञ्चि–दित्यपेक्षात्र निन्दिता ॥ ३ ॥

(वृत्तिः) 'लब्धि'र्भोजनादिलाभ 'आदि'र्येषां यशःपूजादीनां ते लब्ध्यादयस्तेषु तेषां वा 'अपेक्षा' स्पृहा 'लब्ध्याद्यपेक्षा' तया,'हिशब्दो'यस्मादर्थः,'एतत्'प्रत्याख्यानम्,'अभव्यानामपि'सिद्धिगमनायोग्यानामपि,आस्तां भव्यानामित्यपिशब्दा-

[६७] गृह्णाति स्वयंगृहीतं काले विनयेन सम्यगुपयुक्तः । अनुभाषमाणः प्रतिवस्तु ज्ञायको ज्ञायकसकाशे ॥१॥

र्थः,'क्वचित्'अवस्थान्तरे, यथाप्रवृत्तिकरणेन ग्रन्थिप्रदेशमागतानाम्,'श्रूयते'आगमे आकर्ण्यते, ॥तथाहि॥"असंजयभवियदव्वदेवाणं भन्ते? देवलोएसु उववज्जमाणाणं कस्स कहिं उववाए पन्नत्ते? गोयमा! जहन्नेणं भवणवई(वासी)सु, उक्कोसेणं उवरिमगेविज्जएसु[६८] ॥" इह चासंयतभविकद्रव्यदेवा अभव्याः सन्तो ये देवत्वेन भाविनस्ते व्याख्याताः ॥तथा॥ "एगमेगस्स णं भंते? मणुसस्स गेवेज्जगदेवत्ते केवइया दव्विन्दिया अईया ?। गोयमा!अणन्तत्ति[६९]॥" द्रव्येन्द्रियाणि च त्वगादीनि शरीराणीति तात्पर्यम्, ग्रैवेयकोपपातश्च साधुलिङ्गेनैव, तत्र च प्रत्याख्यानमवश्यं भवतीति ॥ आह च॥ "आणोहेणाणन्ता,मुक्का गेवेज्जगेसु उ सरीरा॥ न य तत्थासंपुण्णाए,साहुकिरियाए उववाओ[७०]॥१॥" ततश्च किमित्याह। 'न च'न पुनः,'तत्'अपेक्षाजनितप्रत्याख्यानम्,'किञ्चित्'वस्तु,मुमुक्षुविवक्षितमोक्षलक्षणस्वफलाप्रसाधकत्वात्,स्वफलसाधकं हि वस्तु वस्तुत्वमाप्नोति न पुनरन्यद्वन्ध्यासुतवदिति, 'इतिशब्दो' हेत्वर्थः, ततश्च यतोऽपेक्षाकृतप्रत्याख्यानमफलमतोऽपेक्षा भावप्रत्याख्यानविघ्नभूता, 'अत्र' प्रत्याख्यानविषये, जिनशासने वा, 'निन्दिता' गर्हिता इति ॥३॥

अविधेर्भावप्रत्याख्यानविघ्नतामाह ॥

**यथैवाविधिना लोके, न विद्याग्रहणादि यत् ॥ विपर्ययफलत्वेन, तथेदमपि भाव्यताम् ॥४॥**

(वृत्तिः) 'यथैव' येनैव प्रकारेण, 'अविधिना' अविधानेन प्रसिद्धेन, लोके' सामान्यजने, 'विद्याग्रहणादि' विद्यामन्त्रो-

६८ असंयतभविकद्रव्यदेवानां भदन्त देवलोकेषूपपद्यमानानां कुत्र उपपातः प्रज्ञप्तः। गौतम,जघन्येन भवनपतिषु (वासिषु)उत्कर्षेण उपरिमग्रैवेयकेषु॥ ६९ एकैकस्य, भदन्त, मनुष्यस्य ग्रैवेयकदेवत्वे कियन्ति द्रव्येन्द्रियाणि अतीतानि । गौतम, अनन्तानीति ॥
७० आओघेनानन्तानि मुक्तानि ग्रैवेयकेषु न शरीराणि । न च तत्रासंपूर्णया साधुक्रियया उपपातः ॥ १ ॥

पादानादि, 'यत्' किमपि, नशब्दस्येह दर्शनात्तदित्यस्य च गम्यमानत्वान्न नैव तद्विद्याग्रहणादिकं भवति स्वस्वभावं न लभत इत्यर्थः। कथमित्याह, विपर्ययेण वाञ्छितफलविपर्यासेन, फलं यस्य तत् 'विपर्ययफलम्,' तद्भावस्तत्त्वम्, तेन मरणादिफलत्वेनेत्यर्थः। दार्ष्टान्तिकयोजनामाह, 'तथा' तेनैव प्रकारेण, अप्रत्याख्यानत्वेनेत्यर्थः, 'इदमपि' अविधिकृतप्रत्याख्यानमपि, 'भाव्यतां' निरूप्यतामिति। प्रयोगश्चैवम्, अविधिप्रत्याख्यानमप्रत्याख्यानमेव, विपर्ययफलत्वात्, यद्यद्विपर्ययफलं तत्तन्न भवति अविधिविद्याग्रहणादिवत्, विपर्ययफलं चाविधिप्रत्याख्यानम्, अतः प्रत्याख्यानं न भवति इति ॥४॥

अपरिणामकृतप्रत्याख्यानस्य द्रव्यप्रत्याख्यानतामाह ॥

अक्षयोपशमात्त्याग-परिणामे तथाऽसति ॥ जिनाज्ञाभक्तिसंवेगवैकल्यादेतदप्यसत् ॥५॥

(वृत्तिः) क्षय उदीर्णस्य विरत्यावारककर्मणो विनाशः, तेन सहोपशमस्तस्यैवानुदीर्णस्य विपाकोदयापेक्षया विष्कम्भितोदयत्वं क्षयोपशमः, तन्निषेधात् 'अक्षयोपशमात्,' 'त्यागपरिणामे' प्रत्याख्येयवस्तुविवेकपरिणतौ, 'तथा' तेन प्रकारेण देशसर्वविरतिनमस्कारसहितादिप्रत्याख्यानप्रतिपत्तिलक्षणेन, 'असति' अविद्यमाने, अनेन देशविरतिसर्वविरतिप्रत्याख्यानयोस्तथा तद्वतोरेव गृहिश्रमणयोर्नमस्कारसहिताद्युत्तरगुणप्रत्याख्यानस्य च द्रव्यतोक्ता। अथवा 'तथा' इति यथाविधक्षयोपशमे सति त्यागपरिणामो भवति तथाविधे त्यागपरिणामे 'असति'। एतेन चाविरतसम्यग्दृष्टीनां वासुदेवादीनामभव्यादीनां च प्रत्याख्यानस्य द्रव्यतोक्ता। अथ कथञ्चित्प्रत्याख्येयवस्तुत्यागपरिणामेऽपि सत्यभव्यादेः कथं द्रव्यप्रत्याख्यानतेत्याशंक्याह, जिनाज्ञायामाप्तागमे, भक्तिर्बहुमानः, जिनाज्ञाभक्तिः, सा च संवेगश्च मोक्षाभिलाषो जिनाज्ञाभक्तिसंवेगौ, जिनाज्ञाभक्तेर्वा सकाशात्संवेगो जिनाज्ञाभक्तिसंवेगः, तयोस्तस्य वा, वैकल्यं विरहितत्वम्, 'जिना-

शाभक्तिसंवेगवैकल्यम्,' तस्मात् । एतदुक्तं भवति,अभव्यादीनां त्यागपरिणामस्य संवेगादिविकलतया अपरिणामत्वा-त्तद्द्रव्यप्रत्याख्यानमिति, 'एतदपि' न केवलमविधिप्रत्याख्यानमपरिणामप्रत्याख्यानमपि, 'असत्' अशोभनम्, भाव-प्रत्याख्यानापेक्षया अप्रधानं द्रव्यप्रत्याख्यानमित्यर्थ इति ॥५॥ अथ वीर्याभावस्य द्रव्यप्रत्याख्यानहेतुतामाह ।

**उदग्रवीर्यविरहात्, क्लिष्टकर्मोदयेन यत् ॥ बाध्यते तदपि द्रव्य–प्रत्याख्यानं प्रकीर्तितम् ॥६॥**

(वृत्तिः) उदग्रमुत्कटं यद्वीर्यं वीर्यान्तरायक्षयोपशमसम्पन्नात्मपरिणामलक्षणम्' तस्य विरहो विच्छेदः, 'उदग्रवीर्य-विरहः,' तस्मादवधेः, 'क्लिष्टकर्मोदयेन' तीव्रतीव्रवीर्यान्तरायादिकर्मविपाकेन कर्तृभूतेन, यत्प्रत्याख्यानम्, प्रतिपन्नमपि सत्, बाध्यते अभिभूयते, वीर्योल्लासेन हि जीवः क्लिष्टं कर्म शमयति, तदभावे च क्लिष्टकर्मोदयो भवति, तेन च प्रत्याख्यानं बाध्यते, इति वीर्याभावः प्रत्याख्यानबाधने हेतुः, अथवा 'क्लिष्टकर्मोदयेन' यो वीर्याभावस्तस्मात्प्रत्या-ख्यानं 'यत्' 'बाध्यते' जीवेनेति, 'तदपि' न केवलमविधिप्रत्याख्यानं वीर्याभावप्रत्याख्यानमपि, 'द्रव्यप्रत्याख्यानं' उक्तलक्षणम्, 'प्रकीर्तितं' भणितं तत्त्ववेदिभिः। अन्यैस्तु व्याख्यातं कालान्तरे भावप्रत्याख्यानकारणत्वात् द्रव्यत्वमस्य, सकृत्सञ्जातो हि भावो भावान्तरं जनयति, यदाह, "सइ संजाओ भावो, पायं भावन्तरं जओ कुणइ ॥७१॥" इति। इह च द्रव्यशब्दो योग्यतावाची द्रष्टव्य इति ॥६॥ उक्तं द्रव्यप्रत्याख्यानम्, अथ भावप्रत्याख्यानमाह ।

**एतद्विपर्ययाद्भावप्रत्याख्यानं जिनोदितम् । सम्यक्चारित्ररूपत्वा–न्नियमान्मुक्तिसाधनम् ॥७॥**

---

७१ सकृत्सञ्जातो भावः प्रायो भावान्तरं यत. करोति ॥ +ता एवमेत्थ पवरं लिंगं सइ भावबुड्ढी तु ॥ (इतिगाथापूर्तिः)

(वृत्तिः) 'एतद्विपर्ययात्' अपेक्षादिकृतप्रत्याख्यानविपर्यासात्, अनपेक्षादिकृतमित्यर्थः, 'भावप्रत्याख्यानं' उक्तशब्दार्थम्, भवतीति गम्यम्, किम्भूतं 'जिनोदितम्' आप्ताभिहितम्। इह च प्रयोगः, यद्यस्य विपर्ययभूतं तत्तस्याभावेऽवश्यं भवति, यथा छायाया अभावे सत्यातपः, द्रव्यप्रत्याख्यानविपर्ययभूतं च भावप्रत्याख्यानमिति द्रव्यप्रत्याख्यानाभावेऽवश्यम्भवति प्रत्याख्यानसामान्ये सतीति। तच्च भावप्रत्याख्यानं किम्फलमित्याह, 'नियमात्' अवश्यम्भावेन, 'मुक्तिसाधनं' मोक्षकारणम्, साक्षात्पारम्पर्येण वा, कुत इत्याह 'सम्यक्चारित्ररूपत्वात्' शोभनचरणस्वभावत्वात्, तथाभूतध्यानादियोगवदिति दृष्टान्त ऊह्य इति ॥७॥ द्रव्यप्रत्याख्यानं किमनर्थकमेव, न, इत्याह ॥

जिनोक्तमितिसद्भक्त्या, ग्रहणे द्रव्यतोऽप्यदः ॥ बाध्यमानं भवेद् भाव–प्रत्याख्यानस्य कारणम् ॥८॥

(वृत्तिः) इहैवमक्षरघटना, 'अदः' एतत्प्रत्याख्यानम्, 'ग्रहणे' उपादाने, 'द्रव्यतोऽपि' न केवलं भावतः अपेक्षादियोगेन द्रव्यतो गृहीतमपीत्यर्थः, 'भवेत्' भावप्रत्याख्यानस्य कारणमिति योगः, कथम्भूतं सदित्याह, 'जिनोक्त'माप्तप्रणीतम्, 'इति' एवमुल्लेखवती, या 'सती' शोभना प्रशस्ता, 'भक्ति' र्बहुमानविशेषः, सा 'जिनोक्तमितिसद्भक्तिः' तया, अथवा 'जिनोक्त'मिति हेतोः, शेषं तथैव, 'बाध्यमानं' निराक्रियमाणम् 'भवेत्' स्यात्, 'भावप्रत्याख्यानस्य' परमार्थप्रत्याख्यानस्य, 'कारणं' निमित्तम्। जिनोक्तमितिसद्भक्तिर्हि द्रव्यप्रत्याख्यानहेतूनामपेक्षादिभावानां विरुद्धा अतो यत्र सा स्यात्ततेषां निवृत्तेर्भावप्रत्याख्यानीभवति न सर्वमेवेति भावनेति ॥८॥

॥ इति अष्टमाष्टकविवरणं समाप्तम् ॥८॥

## ॥ अथ नवमं ज्ञानाष्टकम् ॥९॥

इदं भावप्रत्याख्यानं ज्ञानविशेषे सति सम्भवतीति तदेव निरूपयन्नाह ॥

विषयप्रतिभासं चा–त्मपरिणतिमत्तथा ॥ तत्त्वसंवेदनं चैव, ज्ञानमाहुर्महर्षयः ॥ १ ॥

(वृत्तिः)'विषयः'श्रोत्रादीन्द्रियज्ञानगोचरः शब्दादिः,तस्यैव न पुनरतत्प्रवृत्तौ तज्जन्यस्यात्मनोऽर्थानर्थसद्भावस्य,'प्रतिभासः' प्रतिभासनं परिच्छेदो यत्र तत्'विषयप्रतिभासम्,'ऐहिकामुष्मिकेषु छाद्मस्थिकज्ञानविषयेष्वर्थेषु प्रवृत्तावात्मनस्तात्त्विकार्थानर्थप्रतिभासशून्यमित्यर्थः,ज्ञानमाहुरिति सम्बन्धः। 'चशब्द'उत्तरज्ञानविशेषापेक्षया समुच्चयार्थः, इदं च मिथ्यादृशां भवतीति। तथा आत्मनो जीवस्य,परिणतिरनुष्ठानविशेषसम्पाद्यः परिणामविशेषः, सैव ज्ञेयतया यस्मिन्नस्ति ज्ञाने न पुनस्तदनुरूपप्रवृत्तिनिवृत्ती अपि, तत् 'आत्मपरिणतिमत्,''तथेति' समुच्चये,इदं चाविरतसम्यग्दृष्टीनां भवतीति। तत्त्वं परमार्थः,तत्सम्यग् वेद्यते ज्ञायते येन तत् 'तत्त्वसंवेदनम्'हेयोपादेयार्थनिवृत्तिप्रवृत्तिसम्पादकमित्यर्थः,'चशब्दः'समुच्चये, 'एवकारो'ऽवधारणे,तस्य चैवं प्रयोगः,तत्त्वसंवेदनमेव च नोक्तव्यतिरिक्तम्, इदं च(तु)विशुद्धचारित्रिणां स्यात्।'ज्ञानं'बोधम्, 'आहुः' ब्रुवते, महर्षयः' महामुनयः। एते च त्रयोऽपि ज्ञानभेदा मत्यादिविशेषा एवेति ॥१॥ आद्यस्वरूपमाह ॥

विषकण्टकरत्नादौ, बालादिप्रतिभासवत्। विषयप्रतिभासं स्यात्, तद्धेयत्वाद्यवेदकम् ॥२॥

(वृत्ति) विषं च शृङ्गिकादि, कण्टकाश्च बब्बूलाद्यवयवविशेषा इति हेयं वस्तु, रत्नानि च मरकतादीनि चोपादेयम्, विषकण्टकरत्नानि तानि आदिर्यस्य तत्तथा, तत्र ' विषकण्टकरत्नादौ' द्रष्टव्ये, इहादिशब्दाद्धेयोपादेयरूपवस्त्वन्तरपरि-

ग्रहः, उपेक्षणीयपरिग्रहो वा, बालः शिशुरादिर्येषां ते बालादयः, आदिशब्दादतिमुग्धपरिग्रहः, तेषां प्रतिभासो वस्तुबोधः, बालादिप्रतिभासः, स इव 'बालादिप्रतिभासवत्' तत्तुल्यमित्यर्थः, 'विषयप्रतिभासं' उक्तनिर्वचनं ज्ञानम्, 'स्यात्' भवेत् । कथं बालादिप्रतिभासतुल्यत्वमस्येत्याह, तेषां ज्ञेयविषयाणाम्, 'हेयत्वादि' हेयत्वमुपादेयत्वमुपेक्षणीयत्वं चेत्यर्थः, तस्यावेदकमनिश्चायकं 'तद्धेयत्वाद्यवेदकम्'। यथा बालादिप्रतिभासो विषादिविषयस्य रूपादिमात्रमेवाध्यवस्यति न तु हेयत्वादिकं तद्धर्मम्, एवं यत् ज्ञानं बहुश्रुतानामप्यभिन्नग्रन्थीनां मोहमलमलीमसमानसत्वेनातत्त्वानां हेयतायास्तत्त्वानां चोपादेयताया विमर्शाक्षमं तत्त्वातत्त्वयोः समतावभासकं विपर्ययावभासकं वा तद्विषयप्रतिभासमिति भावना। उक्तं च॥ "विसयपडिभासमित्तं, बालस्सेवक्खरयणविसयंति ॥ वयणाइएसु (वयणा इमेसु इत्युपदेशपदे) नाणं, सव्वत्थण्णाणमोणेयम् ७२ ॥१॥", 'वयणाइएसुत्ति' सूत्रार्थादिष्विति ॥२॥ इदमेव लिङ्गादिभिर्निरूपयन्नाह ॥

निरपेक्षप्रवृत्त्यादि–लिङ्गमेतदुदाहृतम् ॥ अज्ञानावरणापायं, महापायनिबन्धनम् ॥ ३ ॥

(वृत्तिः) निर्गता अपेता अपेक्षा ऐहिकामुष्मिकापायशङ्का यस्याः सा तथा निरपेक्षा, प्रवृत्तिःप्रवर्तनमादिर्यस्य निवृत्त्यादेस्तन्निरपेक्षप्रवृत्त्यादि, निरपेक्षस्य वा निराशङ्कस्य प्रवृत्त्यादि निरपेक्षप्रवृत्त्यादि, तल्लिङ्गं चिह्नं यस्य तत् 'निरपेक्षप्रवृत्त्यादिलिङ्गम्', 'एतत्' अनन्तरोदितं विषयप्रतिभासं ज्ञानम्, 'उदाहृतं' आप्तैरुपदिष्टम्, अथ किंहेतुकमिदमित्यत आह, न ज्ञानमज्ञानं मिथ्यात्वोदयदूषिते मतिश्रुते अवधिश्च, नञः कुत्सार्थत्वात्॥आह च ॥"अविसेसिया मई च्चिय, सम्मद्दिट्ठिस्स सा मइ-

---

७२ विषयप्रतिभासमात्रं बालस्येवाक्षरत्नविषयमिति॥ वचनादिकेषु (वचनात् एषु इत्युप० पदवृत्तिः) ज्ञानं सर्वत्राज्ञानामेव ज्ञेयम्॥

ण्णाणं ॥ मइअन्नाणं मिच्छा–दिट्ठिस्स सुयंपि एमेव[७३] ॥१॥ " तथा " सदसदविसेसणाओ, भवहेउजदिच्छिओवलम्भाओ ॥ णाणफलाभावाओ, मिच्छद्दिट्ठिस्स अन्नाणं[७४] ॥१॥ " तस्याज्ञानस्य मत्यज्ञानादिलक्षणस्यावरणमावृतिकारणं कर्म अज्ञानावरणं तस्यापायोऽपगमः क्षयोपशमो यस्मिंस्तद् 'अज्ञानावरणापायम्,' मत्यज्ञानावरणादिकर्मक्षयोपशमहेतुकमित्यर्थः, अथवा अविद्यमानो ज्ञानावरणापायो यत्र तत्तथा, अथ किंफलमिदमित्याह, महान्तश्च ते गुरुका अपायाश्च स्वपरगतैहिकामुष्मिकप्रत्यवाया महापायास्तेषां निबन्धनं हेतुः 'महापायनिबन्धनम्,' इदं च भावतोऽज्ञानमेव, भवति ह्याज्ञानं महापायनिबन्धनम् ॥यत आह॥ "अज्ञानं खलु भोः कष्टं, क्रोधादिभ्योऽपि सर्वपापेभ्यः ॥ अर्थं हितमहितं वा, न वेत्ति येनावृतो लोकः" ॥१॥इति॥ ॥३॥ द्वितीयज्ञाननिरूपणायाह ॥

पातादिपरतन्त्रस्य, तद्दोषादावसंशयम् ॥ अनर्थाद्याप्तियुक्तं चा–त्मपरिणतिमन्मतम् ॥ ४ ॥

(वृत्तिः) पातोऽधःपतनमादि यस्योर्ध्वतिर्यगाकर्षणविपरीतशिक्षाश्वोद्वहनादेस्तत्पातादि तेन तस्य वा परतन्त्रः परायत्तः पातादिपरतन्त्रः, पातादिपरतन्त्र इव 'पातादिपरतन्त्रः' तस्य, विषयकषायादिवशीकृतस्य देहिनः, तस्मिन् पातादौ यो दोषोऽङ्गभङ्गमरणादिलक्षणः स आदिर्यस्य रुतोत्करमृदुस्पर्शादिगुणस्य स तथा तत्र 'तद्दोषादौ,' दार्ष्टान्तिके तु कर्मबन्धदुर्गत्यादिदोषे गुणे चाभ्युदयादौ ज्ञेये, 'असंशयम्' उपलक्षणत्वादविद्यमानसंदेहविपर्ययं विलीनमोहग्रन्थित्वेन यथाव-

७३ अविशेषिता मतिरेव सम्यग्दृष्टेः सा मतिज्ञानम् ॥ मत्यज्ञानं मिथ्यादृष्टेः श्रुतमप्येवमेव ॥१॥
७४ सदसदविशेषणात् भवहेतुतो यादृच्छिकोपलम्भात् ॥ ज्ञानफलाभावात् मिथ्यादृष्टेरज्ञानम् ॥१॥

स्त्रियस्वरूपमित्यर्थः, अनर्थोऽपायोऽङ्गनादिरादिर्यस्य सुखस्पर्शादेरर्थस्य स तथा तस्याप्तिः प्राप्तिस्तया युक्तमन्वितम् 'अनर्थाद्याप्तियुक्तम्,' इह च यद्यपि पुरुषस्यैवानर्थाद्याप्तियोगस्तथापि ज्ञानाव्यतिरिक्तत्वात्तस्य ज्ञानमेवानर्थाद्याप्तियुक्तमुक्तम्, दार्ष्टान्तिके तु अनर्थाद्याप्तिः कर्मबन्धदुर्गतिगमनपरम्परापवर्गगमनरूपावगन्तव्या, चशब्दो विशेषणान्तरसमुच्चयार्थः, तदेवंविधं ज्ञानम्, 'आत्मपरिणतिमत्'प्रतिपादितनिर्वचनम्, 'मतम्' अभिमतमध्यात्मतत्त्वविदुषामिति, इह च संवादगाथे॥ "भिन्ने उ तए(इतो उप०पदे)नाणं जहक्खरयणेसु तग्गयं चेव। पडिबन्धम्मि वि सद्धाइ-भावओ सम्मरूवं तु[७५]॥१॥" भिन्ने तु तकस्मिन् मोहग्रन्थावित्यर्थः, 'तग्गयं चेवत्ति' अक्षे अक्षगतमेव, रत्ने रत्नगतमेव, प्रतिबन्धेऽपि सदनुष्ठानव्याघातेऽपि इत्यर्थः॥ "जमिणं असप्पवित्तीइ, दव्वओ संगयं पि नियमेण। होइ फलंगं असुहा-णुबन्धवोच्छेयभावाउ त्ति[७६]"॥२॥४॥

एतदेव लिङ्गादिभिर्निरूपयन्नाह ॥

तथाविधप्रवृत्त्यादि-व्यङ्ग्यं सदनुबन्धि च ॥ ज्ञानावरणह्रासोत्थं, प्रायो वैराग्यकारणम् ॥५॥

(वृत्तिः) तथा तत्प्रकारा विधा स्वरूपं यस्याः सा तथाविधा, "हिअए जिणाण आणा, चरियं मह एरिसं अउन्न(न्न?)स्स॥ एयं आलप्पालं अव्वो दूरं विसंवयइ[७७]॥१॥," इत्यादिभावनया असंक्लिष्टा चासौ प्रवृत्तिश्च हिंसादिषु वर्त्तनं तथाविध-

७५ भिन्ने तु तकस्मिन्(इतः उप० पद वृ०) ज्ञानं यथाक्षरत्नयोः तद्गतमेव ॥ प्रतिबन्धेऽपि श्रद्धादिभावतः सम्यग्रूपं तु ॥
७६ यदिदं असत्प्रवृत्त्या द्रव्यतः सङ्गतमपि नियमेन ॥ भवति फलाङ्गं अशुभानुबन्धव्यवच्छेदभावात्तु इति ॥
७७ हृदये जिनानामाज्ञा चरितं ममेदृशमपुण्यस्य ॥ एतदालप्यालम् अहो ? दूरं विसंवदति ॥

प्रवृत्तिः सा आदिर्यस्य निवृत्तिप्राप्त्यादेः तत्तथाविधप्रवृत्त्यादि, तेन व्यज्यते व्यक्तीक्रियते यत् तत् 'तथाविधप्रवृत्त्यादिव्यङ्ग्यम्', तथा सन् शोभनोऽनुबन्धः परम्परया मोक्षफलप्रदायकत्वं सदनुबन्धः सोऽस्यास्तीति 'सदनुबन्धि,' "चशब्दो विशेषणसमुच्चये," किंहेतुकमिदमित्याह, ज्ञानावरणं मत्याद्यावारकं कर्म तस्य ह्रासः क्षयोपशमस्तस्मादुत्तिष्ठत उत्पद्यते यत्तत् 'ज्ञानावरणह्रासोत्थम्', कथमिदं सदनुबन्धि इत्यत आह, 'प्रायो' बाहुल्येन, 'वैराग्यकारणं' सद्भावनानिमित्तम्, यतो भवतीति गम्यते॥यदाह॥"बालधूलीगृहक्रीडा,तुल्यास्यां भाति धीमताम्॥तमोग्रन्थिविभेदेन,भवचेष्टाखिलैव हि॥१॥" प्रायोग्रहणं च कषायोदयविशेषे सति तद्वैराग्यकारणं न स्यादपि, राज्यादिप्रसाधनप्रवृत्तभरतादेरिवेति प्रतिपादनार्थमिति ॥५॥ तृतीयप्रतिपादनायाह ॥

स्वस्थवृत्तेः प्रशान्तस्य, तद्धेयत्वादिनिश्चयम् ॥ तत्त्वसंवेदनं सम्यग्—यथाशक्ति फलप्रदम् ॥६॥

(वृत्तिः) स्वस्था अनाकुला वृत्तिर्वचनकायव्यापाररूपं वर्तनं यस्य स तथा तस्य 'स्वस्थवृत्तेः,' 'एतदेव कुत इत्याह,' 'प्रशान्तस्य' रागद्वेषाद्युपशमप्रकर्षवतः, तत्त्वसंवेदनं भवतीति क्रिया । किम्भूतमित्याह, 'तेषां' ज्ञेयवस्तुतत्त्वानां 'हेयत्वादि' त्यजनीयत्वादि आदिशब्दादुपादेयत्वोपेक्षणीयत्वपरिग्रहः तत्र निश्चयो निर्णयो यस्य तत् 'तद्धेयत्वादिनिश्चयम्' इति, अथवा यदिति शेषस्ततश्च स्वस्थवृत्तेः प्रशान्तस्य पुंसो यद्ज्ञानं तत्तत्त्वसंवेदनमिति योगः, 'तत्त्वसंवेदनम्' उक्तनिर्वचनम्, 'सम्यक्' समीचीनतया, 'यथाशक्ति' पुरुषसंहननादिसामर्थ्यानुसारतः, 'फलप्रदं' स्वप्रयोजनप्रसाधकम्, ज्ञानस्य चानन्तरं फलं विरतिः परम्पराफलं त्वपवर्ग इति ॥६॥ एतस्य लिङ्गादि प्रतिपादयन्नाह ॥

न्याय्यादौ शुद्धवृत्त्यादि–गम्यमेतत्प्रकीर्तितम् ॥ सज्ज्ञानावरणापायं, महोदयनिबन्धनम् ॥७॥

(वृत्तिः) न्यायो नीतिरतस्मादनपेतो न्याय्यः सम्यग्दर्शनादित्रयरूपो मोक्षमार्गः स आदिर्यस्यान्याय्यस्य मिथ्यादर्शनादिरूपस्य भवमार्गस्य स'न्याय्यादि'स्तत्र,शुद्धवृत्तिर्निरतिचारप्रवृत्तिरादिर्यस्या निवृत्तेः सा तथा तया गम्यमनुमेयं 'शुद्धवृत्त्यादिगम्यम्', 'एतत्' अनन्तरोदितस्वरूपं तत्त्वसंवेदनज्ञानम् ,'प्रकीर्तितं' ज्ञानस्वरूपविद्भिः संशब्दितम्, किंहेतुकमिदमित्याह, सत् शोभनं प्रकृष्टं यज्ज्ञानमाभिनिबोधिकादि तस्य यदावरणं तस्यापायोऽपगमः क्षयक्षयोपशमलक्षणो यस्मिंस्तत् 'सज्ज्ञानावरणापायम्,' अथवा सन्विद्यमानो ज्ञानावरणापायो यत्र तत्तथा, फलमस्याह महोदयो महाभ्युदयो निर्वाणं तस्य निबन्धनमक्षेपेण कारणं 'महोदयनिबन्धनम्' इति ॥७॥ उपसंहरन्नुपदेशमाह ॥

एतस्मिन्सततं यत्नः, कुग्रहत्यागतो भृशम् ॥ मार्गश्रद्धादिभावेन, कार्य आगमतत्परैः ॥८॥

(वृत्तिः) 'एतस्मिन्' अनन्तरोक्ते तत्त्वसंवेदनज्ञाने,'सततम्', अनवरतम् ,'यत्नः' आदरः कार्य इति सम्बन्धः,कुतः 'कुग्रहत्यागतः' शास्त्रबाधिताभिनिवेशपरित्यागेन, 'भृशम्' अत्यर्थम् , केन करणभूतेन कार्यो यत्न इत्याह,मार्गे मोक्षमार्गे श्रद्धादिर्मार्गश्रद्धादिस्तद्रूपो भाव आत्मपरिणामो 'मार्गश्रद्धादिभाव'स्तेन, तत्र श्रद्धानमादिशब्दात् ज्ञानमासेवनं चेति, 'कार्यो' विधेयः, कैरित्याह 'आगमतत्परैः' आप्तप्रवचनप्रधानैरिति ॥८॥

॥ नवमाष्टकविवरणं समाप्तम् ॥९॥

## ॥ अथ दशमं वैराग्याष्टकम् ॥१०॥

सम्यग्ज्ञानाद्वैराग्यमुपजायत इत्यतस्तन्निरूपणायाह ॥

आर्त्तध्यानाख्यमेकं स्या–न्मोहगर्भं तथापरम् ॥ सज्ज्ञानसङ्गतं चेति, वैराग्यं त्रिविधं स्मृतम् ॥१॥

(वृत्तिः) ऋतं दुःखं तत्र भवमार्तं तच्च तद्ध्यानं चैकाग्रचित्तत्वम् आर्तध्यानम् इष्टानिष्टार्थवियोगावियोगनिमित्तं सविक्लवं चित्तमित्यर्थः तदेवाख्या संज्ञा यस्य तद् 'आर्त्तध्यानाख्यम्,' 'एकं' प्रथमम्, 'स्यात्' भवेत्, मोहो मिथ्यात्वमज्ञानं च गर्भोऽन्तःसारो यस्य तद् 'मोहगर्भम्,' 'तथा' इति समुच्चये, 'अपरम्' अन्यत्, सज्ज्ञानं सम्यग्बोधस्तेन सङ्गतं युक्तं 'सज्ज्ञानसङ्गतम्,' 'चः' समुच्चये, 'इति' अनेन प्रकारेण, विगतो रागः प्रमादो यस्य स विरागः तस्य भावः कर्म वा 'वैराग्यम्,' तिस्रो विधा भेदा यस्य तत् 'त्रिविधम्,' 'स्मृतम्' आप्तैरुपदिष्टमिति ॥१॥ आद्यं तावदाह ॥



इष्टेतरवियोगादि–निमित्तं प्रायशो हि यत् ॥ यथाशक्त्यपि हेयादा–वप्रवृत्त्यादिवर्जितम् ॥२॥

उद्वेगकृद्विषादाढ्य–मात्मघातादिकारणम् ॥ आर्त्तध्यानं ह्यदो मुख्यं, वैराग्यं लोकतो मतम् ॥३॥

(वृत्तिः) इष्टश्च प्रिय इतरश्चानिष्ट इष्टेतरौ विषयाविति गम्यते तयोर्यथासङ्ख्येन यो वियोगादिर्विरहसम्प्रयोगो स निमित्तं कारणं यस्य तद् 'इष्टेतरवियोगादिनिमित्तम्,' 'प्रायशो' बाहुल्येन, न पुनरिष्टेतरवियोगादिनिमित्तमेव, स्वविकल्पनिमित्तस्यापि तस्य सम्भवात्, 'हिशब्दो' यस्मादर्थः, तत्प्रयोगं च दर्शयिष्यामः, 'यदिति' वैराग्यम्, 'अद' एतदार्त्तध्यानमेवेति सम्बन्धः, कुतस्तदार्त्तध्यानमेव, न पुनर्यथावद्वैराग्यमित्याह, यस्मात् 'यथाशक्त्यपि' सामर्थ्यानुरूपमपि

आस्तां श्रद्धातिशयाच्छक्त्यतिक्रमतः, 'हेयादौ' हेयोपादेयवस्तुविषये, क्रमेण'अप्रवृत्त्यादिवर्जितं निवर्तनप्रवर्तनविरहितम्, यत्किल यथावद्वैराग्यं भवति तद्धेयेष्विन्द्रियार्थेषूपादेयेषु च तपोध्यानादिषु यथाशक्ति निवृत्तिप्रवृत्तियुक्तं भवति तत्स्वरूपत्वात्, इदं तु तद्वर्जितं यस्मात्तस्मादार्तध्यानमेवेति भावः ॥२॥ तथा उद्वेगं मनःस्वास्थ्यचलनं करोतीति 'उद्वेगकृत्,' तथा विषादो दैन्यं तेनाढ्यं परिपूर्णं 'विषादाढ्यम्,' अनेन मनोदुःखहेतुताऽस्योक्ता, अथ शरीरदुःखहेतुतामस्यैवाह, आत्मेह रूढितः स्वशरीरं तस्य यद्धातादि हिंसनताडनादि तस्य कारणं हेतुः 'आत्मघातादिकारणम्,' 'आर्तध्यानम्,' 'हि'शब्दस्यैवकारार्थत्वादार्तध्यानमेव,'अद'इति सम्बन्धितमेव,किम्भूतमित्याह, मुखे भवं 'मुख्यं' प्रधानं निरुपचरितमित्यर्थः, ननु यद्यार्तध्यानमेतत्तदा कस्माद्वैराग्यतयोक्तमित्याह,' वैराग्यम्' उक्तनिर्वचनम्, 'लोकतो' लोकं पृथग्जनमाश्रित्य तद्रूढ्येत्यर्थो न पुनस्तत्त्वतः, 'मतं' सम्मतं तत्त्वविदुषामिति ॥३॥ मोहगर्भस्वरूपोपदर्शनायाह ॥

एको नित्यस्तथाऽबद्धः, क्षय्यसन्वेह सर्वथा ॥ आत्मेतिनिश्चयाद् भूयो, भवनैर्गुण्यदर्शनात् ॥४॥

तत्त्यागायोपशान्तस्य, सद्वृत्तस्यापि भावतः ॥ वैराग्यं तद्गतं यत्तन्--मोहगर्भमुदाहृतम् ॥५॥

(वृत्तिः) 'एको'ऽद्वितीय 'आत्मेत्यादिनिश्चयात् सद्वृत्तस्यापि यद्वैराग्यं तन्मोहगर्भमुदाहृतम्' इति योगः, तत्र एक एवात्मा लोकव्यापी चेत्येको वादी निश्चितवान्, यदाह ॥ "पुरुष एवेदं गिनं सर्वं यद्भूतं यच्च भाव्यम् । उतामृतत्वस्येशानो यदन्नेनातिरोहति यदेजति यन्नेजति यत् दूरे यदु अन्तिके । यदन्तरस्य सर्वस्य यदु सर्वस्यास्य बाह्यतः॥" इति (ऋग्वेदे १० मण्डले, ९० सूक्ते, २ श्लोकः) ॥ गिनं इति वाक्यालङ्कारो निपातः। उतामृतत्वस्येशानो मोक्षस्यापि प्रभुः पुरुष एव, एजति चलति, यदु अन्तिके इह उशब्दो निपातः, अन्तः आध्यात्मिकं वस्तु अस्य जगत इति ॥ एतन्मतानुसा-

यैवाह ॥ " एक एव हि भूतात्मा, भूते भूते व्यवस्थितः ॥ एकधा बहुधा चैव, दृश्यते जलचन्द्रवत् ॥१॥ (ईशोपनिषदि ५ श्लोकः ॥) ॥तथा॥ " नित्यज्ञानविवर्तोऽयं, क्षितितेजोजलादिकः ॥ आत्मा तदात्मकश्चेति, संगिरन्ते परे पुनः ॥१॥" (ब्रह्मविन्दौ १२ श्लोकः) तथा 'नित्य' इति,अनेकत्वेऽपि नित्य आत्मा इति कश्चित्, अप्रच्युतानुत्पन्नस्थिरैकरूपत्वात्, आह च ॥ "अमूर्तश्चेतनो भोगी, नित्यः सर्वगतोऽक्रियः ॥ अकर्ता निर्गुणः सूक्ष्म, आत्मा कपिलदर्शने ॥१॥" इति । 'तथेति' विशेषणान्तरसमुच्चये, 'अबद्धो' न केनचित्संस्पृष्टः ॥ यदाह ॥"तस्मान्न बध्यते नापि,मुच्यते नापि संसरति कश्चित् ॥ संसरति बध्यते मु-च्यते च नानाश्रया प्रकृतिः॥१॥" तथा 'क्षयी' क्षणिकात्मेति कश्चित् , यतस्तत्सिद्धान्तोऽयम् ॥ "जह लेट्टुयम्मि खित्ते उप्पाए अत्थि कारणं॥ पडणे कारणं नत्थि, अन्नत्थुप्पायकारणा ७८॥१॥ एवं संकडधम्माणं, उप्पाए अत्थि कारणं ॥ विणासे कारणं नत्थि, अन्नत्थुप्पायकारणा ७९ ॥२॥ न निहाणगया भग्गा, पुञ्जो नत्थि अणागए ॥ निव्वुया नेव चिट्ठन्ति, आरग्गे सरिसोवमा८० ॥३॥" तथा ॥ "अर्थक्रियाविधायित्वं, वस्तुलक्षणमुच्यते ॥ क्रमाक्रमाविरुद्धा च, क्रिया निःशेष-वस्तुषु ॥१॥ क्रमाक्रमविरोधश्च, नित्ये वस्तुनि तां प्रति ॥ तेन वस्तु क्षणस्थायि, परिणामवियोगतः ॥२॥" तथा 'असन्' न विद्यमान आत्मेति, यतो बौद्धसिद्धान्ते वृत्तमिदम् ॥ "यथा कुमारी स्वप्नान्तरेऽ(त)स्मिन्, सा पुत्रं जातं च मृतं च पश्यति ॥ जातेऽतितुष्टा मृते दौर्मनस्यिता, तथोपमान् जानत सर्वधर्मान् ॥१॥" एतस्य वृत्तस्य छान्दसत्वात् नापशब्द-

---

७८ यथा लेष्टुके क्षिप्ते उत्पादेऽस्ति कारणम् ॥ पतने कारणं नास्ति अन्यत्रोत्पादकारणात् ॥ १ ॥
७९ एवं सङ्कटधर्माणामुत्पादेऽस्ति कारणम् ॥ विनाशे कारणं नास्ति अन्यत्रोत्पादकारणात् ॥ २ ॥
८० न निधानगता भग्नाः पुञ्जो नास्त्यनागते ॥ निर्वृता नैव तिष्ठन्ति आराग्रे सर्षपोपमाः ॥ ३ ॥

च्छन्दोभङ्गावधार्यांविति । तथा "सर्वे धर्मा निरात्मान, एतत्साधनहानितः॥ दृष्टगुच्छेदस्तु मा भूया–दिति सत्ता प्रकीर्तिता ॥१॥" 'वाशब्दो' विकल्पार्थोऽनुक्तसमुच्चयार्थो वा, तेन चित्तमात्रं वात्मेति ॥ यतः सुगतवचनम् ॥ "चित्तमात्रं भो जिनपुत्र, यदेतत्त्रैधातुकमिति"॥ 'इह' इत्यस्मिँल्लोके, 'सर्वथा' इति सर्वत्र सम्बध्यते, ततश्च सर्वथैकः सर्वथा नित्य आत्मेत्यादिनिश्चयादेव मोहगर्भत्वं वैराग्यस्य स्यात्, कथञ्चिदेकत्वादिनिश्चयात् पुनः सज्ज्ञानसङ्गततां तस्य वक्ष्यति, तथाविधनिश्चयस्य वस्तुपरामर्शित्वेन सज्ज्ञानत्वादिति, तथाहि, सामान्यरूपापेक्षया एकत्वमस्य, विशेषरूपापेक्षया त्वनेकत्वमेव, न च वाच्यं सामान्यं विशेषेभ्यो भेदाभेदविकल्पाभ्यामनुपपद्यमानत्वादसत्, विशेषेभ्यः सामान्यस्यैकान्तेन भेदाभेदयोरनभ्युपगमात्, तथाहि, विशेषा एव समताप्रत्ययनिबन्धनतामापद्यमानाः सामान्यमुच्यते, विषमताप्रत्ययनिबन्धनतामापद्यमाना विशेषा इति ॥यदाह॥ "वैषम्यसमभावेन, ज्ञायमाना इमे किल ॥ प्रकल्पयन्ति सामान्य–विशेषस्थितिमात्मनि ॥१॥" इति ॥ तथा सर्वथैकत्वे आत्मनः सर्वमसमञ्जसं स्यात्, यदाह ॥ "आत्मनां सर्वथैकत्वे, वेदनं सुखदुःखयोः॥ भेदसिद्धं न युज्येत, न वा संसारनिर्वृती ॥१॥" यच्चोक्तम् ॥ "पुरुष एवेदमित्यादि"॥ तद्वचनमात्रम्, अप्रमाणकत्वादिति । तथा नित्यत्वमप्यात्मनो द्रव्यार्थापेक्षया सङ्गतमेव, न तु सर्वथा, पर्यायार्थतया तस्यानित्यत्वात् ॥ आह च ॥ "द्रव्याश्रयं च नित्यत्व–मात्मनो हन्त सङ्गतम् ॥ कूटस्थनित्यतायोगे, बन्धमोक्षाद्यसङ्गतेः ॥१॥ पर्यायतस्त्वनित्यत्वं, सिद्धं बाल्यादिदर्शनात् ॥ अनित्यतां विना नैव, स्यादवस्थाविचित्रता ॥२॥ यथाहेः कुण्डलावस्था, व्यपैति तदनन्तरम् ॥ सम्भवत्यार्जवावस्था, सर्पत्वं त्वनुवर्तते ॥३॥ एवमस्य निवर्तन्ते, जायन्ते चापरापराः॥ अवस्थाः सुखदुःखाद्या–श्चैतन्यं त्वनुवर्तते ॥४॥ न चावस्थाविभेदेन, सर्वथैव स भिद्यते ॥ क्रमवद्वर्णसंस्पर्शि–विकल्पप्रत्ययो यथा ॥५॥ विकल्पस्याप्यनेकत्वे, न स्याद्वस्तुविनिश्चयः॥

तदभावे च न स्यातां, प्रवर्तननिवर्तने ॥६॥ विरुद्धधर्मयोगोऽपि,नैकान्तेन विभेदकः॥ यथैकमपि प्रत्यक्षं, भ्रान्ताभ्रान्ततया
मतम् ॥७॥"तथा सर्वथैवात्मनो बन्धाभावे प्रकृतेरेव वा बन्धे आत्मनो मोक्षो न युज्यते, लोके हि यो बद्धस्तस्यैव मोक्षो
व्यपदिश्यते नान्यस्येति, आह च, "प्रकृतेरेव बन्धश्चे-त्तदा पुंसो न मुक्तता ॥ अबद्धत्वेन तस्यापि, मुक्तौ स्यादसमञ्ज-
सम् ॥१॥" तथा क्षणिकत्वमपि सर्वथैव सद्भिर्नाभिमन्यते, कथञ्चिदेव तस्यानुमतत्वात्, इदं चानन्तरमेवोपदर्शितम्, "द्र-
व्याश्रयं च नित्यत्वम्" इत्यादिना वचनसन्दर्भेण। यच्च क्षणिकत्वसाधनायोक्तम्,"जह लेट्ठुयम्मि खित्ते इत्यादि,"तत्पर्या-
यापेक्षया युक्तमेव,द्रव्यापेक्षया तु नित्यत्वमुपदर्शितमेव। यच्चोक्तम्,"अर्थक्रियाविधायित्वमित्यादि,"तत्रोच्यते। अर्थक्रि-
याकारित्वं सत्त्वलक्षणं न भवत्येव, दीपाद्यन्तक्षणेन व्यभिचारात्॥ अथ ज्ञानजनकत्वात्तस्य न व्यभिचारः, नैवम्, योगि-
ज्ञानजनकत्वेनातीतानागतार्थानां वस्तुत्वप्राप्तेः। भवतु वार्थक्रियाकारित्वलक्षणं सत्त्वम्,तथापि तत् परिणामिन्येव वस्तुनि
सङ्गच्छते, क्षणिकाक्षणिकयोरतदसम्भवात्,तथाहि, क्षणिकोऽर्थः पूर्वक्षणे १ स्वक्षणे २ अनागतक्षणे ३ वा कार्यं करोतीति
विकल्पाः,तत्र न तावत् पूर्वक्षणे, तस्य तदानुत्पन्नत्वेनासत्त्वात्, नापि स्वक्षणे, समकालभाविनि व्यापाराभावादितरथैक-
क्षणवर्तिनां समस्तार्थक्षणानामितरेतरं कार्यकारणभावः प्रसज्येत, नाप्यनागतक्षणे, तत्र तस्य विनष्टत्वेनासत्त्वादेव ।
किञ्च, क्षणिकोऽर्थः क्रमेणार्थक्रियां करोति यौगपद्येन वा, न तावत् क्रमेण, क्षणिकत्वे क्रमकरणस्यासम्भवात्,नापि यौग-
पद्येनेति पक्षः, यतोऽसौ सन् करोति असन् वा, न असन्,असत्त्वादेव, खरविषाणवत्,नापि सन्,स्वक्षणकरणोक्तदोषप्रस-
ङ्गात् । किञ्च स्वभावभेदवतामनेककार्याणां युगपत्करणे वस्तुनोऽनेकस्वभावतापत्तिः स्यात्,न चासौ क्षणवादिनामस्तीति।
अक्षणिकं तु भवतैवैकस्वभावतया विकल्पद्वयेनापि न कार्यकरणदक्षमित्युक्तम्, अतः परिणामिन्येव वस्तुन्यर्थक्रि-

र्थाकारित्वलक्षणं सत्त्वमवतिष्ठत इति । किञ्च, "सर्वथा क्षणिकं वस्तु, यदि हन्त त्वयेष्यते ॥ कार्यकारणभावादि, तदा कः प्रतिपद्यते ॥१॥ को हि व्यवस्थितः कर्ता, संचरो क्रमवद्गतिम् ॥ अस्य दृष्टाविदं दृष्टं, नास्यादृष्टौ तु लक्ष्यते ॥२॥" तथा असत्त्वमप्यात्मनः सर्वथात्वेन असङ्गतम्, कथञ्चित्तु सङ्गतमेव, आह च, "पररूपेण चासत्त्व–मिष्यते न तु सर्वथा । सर्वथा तदभावे हि, परलोको न सिध्यति ॥१॥" इति॥ यच्चोक्तम्, "यथा कुमारीत्यादि," तत् सकलवस्तुविषयाभिष्वङ्गदोषोन्मूलनार्थं, न तु सर्वथा आत्माभावप्रतिपादनार्थमिति बोद्धव्यम् । यच्चोक्तम्, "सर्वे धर्मा निरात्मान एतत्साधनहानितः," इत्यादि, तदयुक्तम्, आत्मसाधनानां शास्त्रान्तरेषु प्रतिपादितत्वादिति । यच्चोच्यते, "दृष्टयुच्छेदस्तु मा भूयात्" इति. तदयुक्ततरम्, असतो ह्यात्मनः सर्वोपदर्शनं परप्रतारणस्वरूपमेव, न चैतत्सतां सङ्गतमिति । अतति सततं गच्छतीति "आत्मा" प्राणी, 'इति' एवम्प्रकारात्, 'निश्चयात्' निर्णयात्, 'भूयः' पुनरपि, 'भवनैर्गुण्यदर्शनात्' संसारासारतोपलम्भात्, "सदापायः कायः-प्रणयिषु सुखं स्थैर्यविमुखं, महारोगा भोगाः कुवलयदृशः सर्पसदृशाः ॥ गृहावेशः क्लेशः प्रकृतिचपला श्रीरपि खला यमः स्वैरी वैरी परमिह हितं कर्तुमुचितम् ॥१॥" इत्यादि भावनयेत्यर्थः ॥४॥ 'तत्त्यागाय' संसारविमोक्षार्थम्, 'उपशान्तस्य' कषायेन्द्रियनिग्रहवतः, 'सद्वृत्तस्यापि' स्वसिद्धान्तानुसारेण शोभनानुष्ठानवतोऽपि, आस्तामन्यस्य, 'भावतः' सद्भावेन, 'यत्' इत्यस्येह सम्बन्धात्, 'वैराग्यम्' अभिष्वङ्गाभावः, किम्भूतम्, 'तद्गतं' भवविषयम्, 'तत्' इति वैराग्यम्, 'मोहगर्भम्' अज्ञानसारम्, 'उदाहृतं' वैराग्यस्वरूपवेदिभिरभिहितम्, मोहगर्भता चास्यान्यथाभूतस्य वस्तुनोऽन्यथावबोधात्, अत एवेदं न परमार्थसाधकमात्यन्तिकसन्निपातग्रस्तस्य सदौषधवत् सुखमात्रसम्पादकत्वादस्य, यदाह । "कुणइ जह सन्निवाए, सदोसहं जोग्गसोक्खमित्तं तु ॥ तह एयं विन्नेयं, अणोरपारम्मि संसारे[८१] ॥१॥" इति ॥५॥ अथ सज्ज्ञानसङ्गतवैराग्यप्रतिपादनायाह ॥

[८१] करोति यथा सन्निपाते सदौषधं योग्यसुखमात्रं तु ॥ तथैतद्विज्ञेयं अनर्वाक्पारे संसारे इति ॥१॥

भूयांसो नामिनो बद्धा, बाह्येनेच्छादिना ह्यमी ॥ आत्मानस्तद्वशात्कष्टं, भवे तिष्ठन्ति दारुणे ॥६॥

(वृत्तिः) 'भूयांसो'ऽतिबहवः, आत्मान इति योगः, भूयस्त्वं चैषां प्रतिप्राण्यन्तर्मुखावभासिविचित्रचैतन्योपलब्धेः, अनेन च सर्वथैकत्वप्रतिषेधोऽभिहितः, तथा नमनं नामः परिणामोऽपरापरपर्यायगमनम् ॥यदाह॥ "परिणामो ह्यर्थान्तरगमनं, न तु सर्वथा व्यवस्थानम् ॥ न च सर्वथा विनाशः, परिणामस्तद्विदामिष्टः॥१॥" स एषामस्तीति 'नामिनः,' अनेन च एकान्तनित्यत्वानित्यत्वयोर्व्यवच्छेद उक्तः, यदाह, "सर्वव्यक्तिषु नियतं, क्षणे क्षणेऽन्यत्वमथ च न विशेषः॥ सत्योश्चित्यपचित्यो-राकृतिजातिव्यवस्थानात् ॥१॥" तथा, 'बद्धा' न त्वनादिशुद्धाः,बन्धाभावे हि सुखसाधनयुक्तस्यापि पुंसो दुःखोपलम्भो दुःखसाधनयुक्तस्यापि च सुखोपलम्भोऽयं लोके दृश्यते, स न स्यात्, कार्यत्वात्, कारणाभावे घटवदिति ॥यदाह ॥ "जो तुल्लसाहणाणं, फले विसेसो न सो विणा हेउं ॥ कज्जत्तणओ गोयम, घडो व्व हेऊ य सो कम्मं ८२॥१॥" अनेन चैकान्तेनाबद्धात्मवादव्यवच्छेद उक्तः ॥ किंविधेन केन ते बद्धा इत्याह, 'बाह्येन' आत्मव्यतिरेकिणा, स्वरूपाव्यतिरिक्तबन्धनेन हि बद्धानां बन्धनक्षये स्वरूपक्षतिप्रसङ्गः, अनेन चात्माव्यतिरिक्ताविद्यादिबन्धनाभ्युपगमनिरासमाह,अभ्युपगतं चात्माव्यतिरिक्ताविद्यादिबन्धनं कैश्चित्, यदाह, "कार्यकारणभूताश्च, तत्राविद्यादयो मताः ॥ बन्धस्तद्विगमादिष्टा, मुक्तिर्निर्मलता धियः ॥१॥" एषणमिच्छा राग इत्यर्थः। आह च, "इच्छा मूर्छा रागः, स्नेहो गार्ध्यं ममत्वमभिनन्दः॥ अभिलाष इत्यनेका-नि रागपर्यायवचनानि ॥१॥"(प्रशमरति श्लोक १७) सा आदिर्यस्य द्वेषादेः स तथा तेन 'इच्छादिना'मिथ्यात्वाविरतिकषाययोगलक्षणबन्धहेतुजन्येन कर्मणेति भावः, इच्छादेश्च बाह्यत्वमात्मव्यतिरिक्तकर्मकृतविकाररूपत्वा-

८२ यस्तुल्यसाधनयोः फले विशेषो न स विना हेतुम् ॥ कार्यत्वात्, गौतम, घट इव हेतुश्च तत् कर्म ॥१॥

दिति, 'हि'शब्दश्चशब्दार्थः स च भूयांसो नामिनो बद्धाश्चेत्येवं सम्बन्धो द्रष्टव्यः, 'अमी' एते लोकव्यवहारगोचरा ज्ञानरूपतद्गुणप्रत्यक्षत्वेन प्रत्यक्षगोचरा वा । यदाह, "गुणपच्चक्खत्तणओ, गुणी वि जीवो घडो व्व पच्चक्खो ॥ घडओ वि घिप्पइ गुणी, गुणमित्तग्गहणओ जम्हा[८३] ॥१॥" 'आत्मानो' जीवाः, 'तद्वशात्' इच्छादिजन्यबन्धसामर्थ्यात्, 'कष्टं' सदुःखम्, 'भवे' संसारे, 'तिष्ठन्ति' आसते, 'दारुणे' रौद्रे इति ॥६॥ ततः किमित्याह ॥

एवं विज्ञाय तत्याग-विधिस्त्यागश्च सर्वथा ॥ वैराग्यमाहुः सज्ज्ञान-सङ्गतं तत्त्वदर्शिनः ॥ ७ ॥

(वृत्तिः) 'एवम्' उक्तप्रकारम्, आत्मभूयस्त्वादिकं वस्तुस्वभावम्, 'विज्ञाय' उपपत्तिगर्भाप्तोपदेशाद्विनिश्चित्य, ततः किमित्याह, 'तस्ये'च्छादेर्बन्धनस्य भवावस्थाननिबन्धनस्य, 'त्यागविधिः' त्यजनविधानं तदुद्यमः सर्वसावद्यविरतिप्रतिपत्तौ परिकर्मेत्यर्थः, तथा, 'त्यागश्च' त्यजनं चेच्छादेरेव, कथम्, 'सर्वथा' सर्वप्रकारैः सकलसावद्ययोगविरतिरित्यर्थः, यो विधीयते इति वाक्यशेषो दृश्यः, तदिति च, ततश्च, तदेवंविधम्, 'वैराग्य'मुक्तनिर्वचनम्, 'आहुः' ब्रुवते, 'सज्ज्ञानसङ्गतम्' उक्तस्वरूपम्, 'तत्त्वदर्शिनः' वैराग्यपरमार्थवेदिन इति, सज्ज्ञानसङ्गतत्वमस्य यथावस्तुबोधपूर्वकत्वादिति ॥७॥ एतदेव सिद्धिसाधनमिति प्रतिपादयन्नाह ॥

एतत्तत्त्वपरिज्ञाना-न्नियमेनोपजायते ॥ यतोऽतः साधनं सिद्धे-रेतदेवोदितं जिनैः ॥ ८ ॥

(वृत्तिः) 'एतत्' अनन्तरोदितं सज्ज्ञानसङ्गतं वैराग्यम्, न पुनराद्यद्वयम्, तत्त्वपरिज्ञानात्' आत्मादिवस्तुनः परिणामित्वादिस्वरूपावबोधात्सकाशात्, 'नियमेन' अवश्यम्भावेन, नान्यतः आद्यद्वयवत्, 'उपजायते' सम्पद्यते, 'यतो' यस्मा-

---

[८३] गुणप्रत्यक्षत्वाद्गुण्यपि जीवो घट इव प्रत्यक्षः । घटकोऽपि गृह्यते गुणी गुणमात्रग्रहणतो यस्मात् ॥ १ ॥

त्कारणात्, 'अतः' एतस्मात्कारणात्' 'साधु' सात्त्विकतमम्, 'सिद्धैः' मुक्तैः, 'एतदेव' इदमेव, सज्ज्ञानगर्भवैराग्यमेव, नेतरद्वयम्, 'उदितम्' अभिहितम्, 'जिनैः' रागादिजेतृभिरिति ॥ ८ ॥ दशमाष्टकविवरणं समाप्तम् ॥ १० ॥

## ॥ अथ एकादशं तपोष्टकम् ॥ ११ ॥

वैराग्ययुक्तेन तपो विधेयम् । अतो वैराग्याष्टकानन्तरं तपोष्टकमारभ्यते, तत्रापि परमतमाशङ्कमान आह ॥

दुःखात्मकं तपः केचि—न्मन्यन्ते तन्न युक्तिमत् ॥ कर्मोदयस्वरूपत्वाद्—बलीवर्दादिदुःखवत् ॥ १ ॥

(वृत्तिः) दुःखमसुखमात्मा स्वभावो यस्य तत् 'दुःखात्मकम्,' किं तत्, 'तपो'ऽनशनादिरूपम्, इति कृत्वा, 'केचित्' अनधिगतपारगतागमगम्भीर्थाः, 'मन्यन्ते' अभ्युपगच्छन्ति, 'तत्' इति तपः, 'न' नैव, 'युक्तिमत्' उपपत्त्या सङ्गतम्' न मोक्षाङ्गं तप एव न सम्भवतीति यावत्, अथ दुःखात्मकमपि सत् कस्मान्न मोक्षाङ्गमित्याह, 'कर्मोदयस्वरूपत्वादिति' कर्मोदयोऽसातवेदनीयादिकर्मविपाकः स्वरूपं स्वभावो यस्य तत्तथा तद्भावस्तत्त्वं तस्मात्,' तथाहि, भवन्त्यनशनादिषु क्षुत्पिपासादयः परीषहाः, ते च वेदनीयकर्मोदयसम्पाद्या आगमे श्रूयन्ते इति वेदनीयकर्मोदयात्मकमनशनादि, कर्मोदयस्वरूपत्वाच्च न मोक्षाङ्गं तत्, किंवदित्याह, 'बलीवर्दादिदुःखवत्' गवादिगतासातमिव, प्रयोगश्चैवम्, यत्कर्मोदयस्वरूपं न तन्मोक्षाङ्गम्, यथा गवादिदुःखम्, कर्मोदयस्वरूपं च तपः, तस्मान्न मोक्षाङ्गमिति स्थितम्, अयं च श्लोकार्थ इमां (च) पञ्चवस्तुकगाथामुपजीव्य मयाभिहितः, "कुणइ जंपि केइ, णाणसजाइ दुहं पि (त्ति) मोक्खंगं ॥ कम्मविवागत्तणओ,

भणन्ति एयं पि पडिसिद्धम्[८४] ॥१॥" इति ॥१॥ अथ दुःखस्वरूपस्यापि तपसो युक्तिमत्त्वाभ्युपगमे पर एव प्रसङ्गमाह॥

**सर्व एव च दुःख्येवं, तपस्वी सम्प्रसज्यते ॥ विशिष्टस्तद्विशेषेण, सुधनेन धनी यथा ॥ २ ॥**

(वृत्तिः) 'सर्व एव' निरवशेष एव, यः कश्चित्, 'दुःखी' दुःखवान्, 'चशब्दो' दूषणान्तरसमुच्चये, 'एवं' दुःखात्मकस्यापि तपसो युक्तिमत्त्वाभ्युपगमे सति, स, 'तपस्वी' तपोयुक्तः, 'सम्प्रसज्यते' प्राप्नोति, अनशनादिदुःखस्य व्याध्यादिदुःखस्य च दुःखत्वाविशेषात् दुःखात्मकस्य तपसोऽभ्युपगमे च दुःखस्यैव तपस्त्वेनाभ्युपगमादिति भावः, तथा 'विशिष्टः' प्रधानतरः, तपस्वी प्रसज्यत इति प्रक्रमः, केनेत्याह, 'तद्विशेषेण' दुःखविशेषेण हेतुना, क इव केनेत्याह, 'सुधनेन' प्रचुरधनेन, 'धनी' महाधनः, 'यथा' येन प्रकारेणेति ॥ २ ॥ अथ सर्व एव दुःखी तपस्वी प्रसज्यतां को दोष इत्याह ॥

**महातपस्विनश्चैवं, त्वन्नीत्या नारकादयः ॥ शमसौख्यप्रधानत्वा-द्योगिनस्त्वतपस्विनः ॥ ३ ॥**

(वृत्तिः) महातपस्विनः विशिष्टतपोधनाः, प्रसज्यन्त इति गम्यते, चकारो दोषान्तरसमुच्चये, 'एवम्' उक्तप्रकारया 'त्वन्नीत्या' भवन्न्यायेन, दुःखी तपस्वीत्यभ्युपगमलक्षणेनेति भावः, 'नारकादयो' नैरयिकादयः, तेषां महादुःखितत्वात्, आदिशब्दान्महावेदनाभिभूततिर्यगादेः परिग्रहः, शमः प्रशमः स एव सौख्यम्, ॥यदाह॥ "तणसंथारनिसन्नो वि, मुणिवरो भट्ठरागमयमोहो ॥ जं पावइ मुत्तिसुहं, कत्तो तं चक्कवट्टी वि[८५] ॥ १ ॥" शमसौख्यं प्रधानं येषां तेन वा प्रधाना ये ते तथा तद्भावस्तत्त्वं तस्मात् 'शमसौख्यप्रधानत्वात्' अदुःखितत्वादित्यर्थः, 'योगिनः' समाधिमन्तः, 'तुशब्दः'

---

८४ एतेन यदपि केचिन्मानशनादि दुःखमिति मोक्षाङ्गम् । कर्मविपाकत्वाद्भणन्ति एतदपि प्रतिषिद्धम् ॥

८५ तृणसंस्तारनिषण्णोऽपि, मुनिवरो भ्रष्टरागमदमोहः ॥ यत् प्राप्नोति मुक्तिसुखं, कुतस्तच्चक्रवर्त्यपि ॥ १ ॥

पुनरर्थः, 'अतपस्विनः' अतपोधनाः, दुःखात्मकतपसोऽभावादिति भावना, त्वन्नीत्या प्रसज्यन्त इति प्रकृतमेवेति ॥३॥ पर एव स्वपक्षं निगमयन्नाह ॥

युक्त्यागमबहिर्भूत-मतस्त्याज्यमिदं बुधैः ॥ अशस्तध्यानजननात्, प्राय आत्मापकारकम् ॥ ४ ॥

(वृत्तिः) युक्तिश्चोपपत्तिरागमश्चाप्तवचनं ताभ्यां बहिर्भूतं तदननुपाति तद्बाधितं 'युक्त्यागमबहिर्भूतम्,' तत्र युक्तिबहिर्भूतता प्रागुपदर्शिता, आगमबहिर्भूतता चैवमवगन्तव्या ॥ "भावियजिणवयणाणं, ममत्तरहियाण नत्थि उ विसेसो ॥ अप्पाणम्मि परम्मि य, तो वज्जे पीडमुभओ वि ८६ ॥ १ ॥" अनशनादौ तु स्वकायपीडा प्रतीतैवेति, 'अतः' इति यस्मादनेकानन्तरोदितदूषणोपेतं, 'अत' एतस्माद्धेतोः, 'त्याज्यं' त्यागार्हम्, 'इदं' अनशनादिदुःखात्मकं तपः, कैरित्याह, 'बुधैः' युक्त्यागमहृदयज्ञैः, न तैर्लोकरूढ्या प्रवर्तितव्यं भवति, बुधत्वाभावप्रसङ्गादिति हृदयम्, तथा 'आत्मापकारकं' स्वस्यानर्थनिबन्धनमिदम्, कुतः, 'अशस्तध्यानजननात्' अप्रशस्ताध्यवसायोत्पादकत्वात, 'प्रायो' बाहुल्येन, उत्पद्यते हि भोजनाद्यभावे अप्रशस्तध्यानम् ॥ यदाह ॥ "आहारवर्जिते देहे, धातुक्षोभः प्रजायते ॥ तत्र चाधिकसत्त्वोऽपि, चित्तभ्रंशं समश्नुते ॥१॥" इह च प्रायोग्रहणात् श्रीमन्महावीरादिभिर्व्यभिचारपरिहारो दर्शित इति, अतोऽपि त्याज्यमेवेदं बुधैरिति प्रक्रमः ॥ इति पूर्वपक्षः ॥ ४ ॥ अत्र सूरिरुत्तरमाह ॥

मनइन्द्रिययोगाना-महानिश्चोदिता जिनैः ॥ यतोऽत्र तत्कथं त्वस्य, युक्ता स्यात् दुःखरूपता ॥ ५ ॥

(वृत्तिः) पूर्वपक्षवादिना यदुक्तम्, दुःखात्मकं तपो न युक्तिमत् कर्मोदयस्वरूपत्वात्, तत्र दुःखात्मकमिति विशेषणं तपसो

---

८६ भावितजिनवचनानां ममत्वरहितानां नास्ति तु विशेषः । आत्मनि परस्मिन् ततो वर्जयेत्पीडामुभयोरपि ॥

न सिद्धमिति तावदावेदयति, कथम्, मनश्च चित्तमिन्द्रियाणि च करणानि योगाश्च प्रत्युपेक्षणादयः संयमव्यापारा 'मन-इन्द्रिययोगा'स्तेषाम्, 'अहानिः'अनाबाधता,'चोदिता'अभिहिता,अथवा'चशब्दः'समुच्चये,तेन अनुपप्लुतता च, 'उदिता' उक्ता, 'जिनैः' तीर्थङ्करैः, 'यतो' यस्मात्कारणात्, अत्र तपसि ॥ यदाह ॥ सो हु तवो कायव्वो, जेण मणो मंगुलं न चिन्तेइ ॥ जेण न इन्दियहाणी, जेण य जोगा न हायंति[८७] ॥१॥" ॥ तथा ॥ " ता जह न देहपीडा, न यावि चियमंससोणियत्तं तु ॥ जह धम्मज्झाणवुड्ढी, तहा इमं होइ कायव्वं[८८] ॥२॥ 'तत्' इति तस्मात्कारणात्, 'कथं' केन प्रकारेण न कथञ्चिदित्यर्थः, 'तु' इति वितर्के, 'अस्य'तपसः, 'युक्ता' उपपन्ना, 'स्यात्' भवेत्, 'दुःखरूपता'असुखस्वभावता, तदेवं दुःखात्मकत्वं तपसोऽसिद्धं तद्सिद्धावयुक्तिमत्त्वमप्यसिद्धमित्युक्तमिति ॥ ५ ॥ ननु देहपीडाकारित्वेनानशनादीनां दुःखस्वरूपत्वमनुभूयमानमपि कथमसिद्धमिति व्यपदिश्यत इत्याह ॥

यापि चानशनादिभ्यः, कायपीडा मनाक् क्वचित् ॥ व्याधिक्रियासमा सापि, नेष्टसिद्ध्यात्र बाधनी ॥६॥

(वृत्तिः) 'यापि' इति, 'अनशनादिभ्यः' उक्तन्यायेन तावद्देहपीडा न भवत्येव, 'यापि च अनशनादिभ्य' उपवासादिभ्यः, आदिशब्दादूनोदरतादेः सकाशात्, 'कायपीडा' शरीरबाधा न तु मनःपीडा, 'मनाक्' स्वल्पा, 'क्वचित्' देशे काले वा न पुनः सर्वत्र सर्वदा सा सम्भवति उक्तन्यायप्रवृत्तस्य, 'साऽपि' इति इह दृश्यं तेनासावपि, 'न बाधनी' नैव बाधिका न मनसो दुःखदा, किमित्यत आह, 'इष्टसिद्ध्या' वाञ्छितार्थसाधनात्, 'अत्र' प्रवचने, किंविधासावित्याह,

---

८७ तत् खलु तपः कर्तव्यं, येन मनो मङ्गुलं (अशुभं) न चिन्तयति । येन नेन्द्रियहानिः येन च योगा न हीयन्ते ॥१॥
८८ तस्मात् यथा न देहपीडा न चापि चितमांसशोणितत्वं तु । यथा धर्मध्यानवृद्धिः तथा इदं भवति कर्तव्यम् ॥२॥

'व्याधिक्रियासमा' रोगचिकित्सातुल्या, यथाहि रोगचिकित्सायां मनाक् देहस्य पीडा सत्यपि न बाधिका आरोग्यसिद्धेः, एवं तपस्यपि देहपीडा भावारोग्यसंसिद्धेर्न भावतो बाधिकेति भावनेति ॥ ६ ॥

इष्टार्थसंसिद्धौ देहपीडाया अदुःखरूपतां दृष्टान्तेन समर्थयन्नाह ॥

**दृष्टा चेष्टार्थसंसिद्धौ, कायपीडा ह्यदुःखदा ॥ रत्नादिवणिगादीनां, तद्वदत्रापि भाव्यताम् ॥ ७ ॥**

(वृत्तिः) न केवलमस्माभिरेवेहोपन्यस्ता, 'चेष्टा च' लोकेऽवलोकिता, 'इष्टार्थसंसिद्धौ' अभिप्रेतप्रयोजनप्राप्तौ सत्याम्, 'कायपीडा' देहबाधा, 'हिशब्दः' स्फुटार्थः, 'अदुःखदा' न पीडाकारिणी, केषामित्याह, रत्नानि मरकतादीनि आदिर्येषां वस्त्रसुवर्णादीनां तानि तथा तेषां वणिक् वाणिजको रत्नादिवणिक् स आदिर्येषां कृषीवलादीनां ते तथा तेषां 'रत्नादिवणिगादीनाम्,' ततः किमित्याह, तेषामिव वणिगादीनामिव 'तद्वत्,' 'अत्रापि' अनशनादितपोविषयेऽपि, 'भाव्यतां' निपुणधिया पर्यालोच्यताम्, तथाहि, रत्नसुवर्णवसनादिवणिक्कृषीवलादीनां समीहितार्थसंसिद्धिबद्धनिश्चयानां अपारपारावारावतारकान्तारनिस्तरणधरणीप्रकर्षणादिविविधव्यापारपरायणानां क्षुत्पिपासाश्रमादिजनितदेहपीडा न मनोविधुरताऽऽधायिनी, एवं साधूनामपारसंसारसागरमचिरादुत्तितीर्षूणामनशनोनोदरतादितपोजनितदेहपीडा न मनोबाधाविधायिनीति ॥ इह पुनर्विशेषसम्प्रदायं केचिदेवमूचुः ॥ "किल कोपि दरिद्रवणिजको दूरदेशान्तरं गत्वा कथंकथमपि रत्नान्युपार्जितवान् चिन्तितवांश्च, कथमहमेतानि महामूल्यानि सर्वाशासम्पादकानि महारत्नानि चौरव्याकुलमरण्यं निस्तीर्य स्वनगरं गत्वोपभोगं नेष्यामि, ततस्तेनोत्पन्नबुद्धिना तान्येकत्र स्थाने निहितानि, काचादिशकलानि च पोट्टलिकायां बद्धानि, सा च दण्डाग्रे निबद्धा, ततश्चौरपल्लीमध्येन 'अहो रत्नवणिजको गच्छति' इत्येवं महता शब्देन व्याहरन्नरण्यमतिका-

मति स्म, ततो मार्गपल्लीषु च ये जनास्ते तं वीक्ष्य ससंभ्रममागत्य निभालयन्ति स्म, अपश्यंश्च काचादिशकलानि, अवधीरितवन्तश्च ग्रहगृहीतोऽयमिति विभावयन्तः, ततः पुनरपि तथैव निवृत्तः, तत्रापि यैः पूर्वं न वीक्षित आसीत्ते तथैव वीक्षितवन्तोऽथावधीरितवन्तश्च, एवं पुनरपि असावरण्यमध्येन गतवान् ततस्तृतीयवेलायामतिपरिचितत्वादव- धीरितस्तस्करजनेन, ततोऽसौ निश्चितं न मां कोपि अत्रारण्यमार्गे स्खलयिष्यतीति निश्चित्य रत्नानि गृहीत्वा शीघ्रं शीघ्रं तदुपयो (भो)गाय वाञ्छितपुरप्रासावरण्यात्तन्निर्वाहणे चातीवौत्सुक्येनानवरतमहाप्रयाणकैः क्षुत्पिपासाश्रमादीन् भ- वतो भूयसोऽप्यवगणयन् गन्तुं प्रवृत्तः। बहुतरमार्गमतिलङ्घितः सन् पिपासाभिभूतो भावयामास,अहो अहमद्यजलंविना म्रिये, न च रत्नोपभोगभाजनं भवामीत्येवं भावयता मरणभयभीतेन रत्नोपभोगकाङ्क्षिणा दृष्टं सरः पङ्कप्रायपानीयं पङ्कमग्नमृगादिकलेवरपूयकृमिजलव्याकुलं विलीनमतिदुर्गन्धं विरसं तुच्छजलं दृष्ट्वा च गन्धमजिघ्रता रसमनास्वादयता दुष्करकरणं कुर्वता अक्षिणी निमील्याञ्जलिभिस्तत्पीतवान् परं स्वास्थ्यं चागमत्, तदुपष्टम्भितश्च क्षीणपिपासादुःखोऽ क्षेपेणेष्टपुरं प्राप्तः रत्नोपभो(यो)गसुखं चेति ॥" उपनयस्तु प्रागुक्त एवेति ॥७॥

तदेवं दुःखात्मकतां तपसो व्युदस्य कर्मोदय स्वरूपतां व्युदस्यन्नाह ॥

विशिष्टज्ञानसंवेग-शमसारमतस्तपः ॥ क्षायोपशमिकं ज्ञेय-मव्याबाधसुखात्मकम् ॥ ८ ॥

(वृत्तिः) 'विशिष्टाः'प्रधानाः सम्यग्दर्शनविशेषितत्वात्,'ज्ञानं' च तत्त्वसंवेदनम्,' संवेगश्च'संसारभयं मुक्तिमार्गाभिला- षिता वा,'शमश्च कषायेन्द्रियमनसां निरोधो ज्ञानसंवेगशमाः,विशिष्टाश्च ते ते चेति कर्मधारयः,त एव'सारोऽ'न्तर्गर्भो यस्य तैर्वा सारं यत्तत्तथा,ज्ञानादिसारमेव तपः, तपो भवति नेतरत्,अल्पफलत्वात्,॥यदाह॥ "सट्ठिं वाससहस्सा" गाथा,*

---

* षष्टिवर्षसहस्राणि ॥ तिसत्तखुत्तो दएण धोएण ॥ अणुचिण्णं तामलिणा, अन्नाणतवुत्ति अप्पफलो ॥१॥ इति गाथापूर्तिः ॥

×"छज्जीवकायवहगा" गाथा ॥ 'अतः' इति यस्मादुक्तयुक्तेरदुःखात्मकमत एतस्माद्धेतोः, 'तपो'ऽनशनादि, किमित्याह, क्षयेण उदीर्णचारित्रमोहनीयकर्मणश्छेदेन सह उपशमस्तस्यैव विपाकापेक्षया विष्कम्भितोदयत्वं क्षयोपशमस्तत्र भवं 'क्षायोपशमिकम्,' 'ज्ञेयं' ज्ञातव्यम्, न पुनः कर्मोदयस्वरूपम् । तथा अविद्यमाना व्याबाधा अविरतिजनिताः अनन्तराः पारम्पर्यकृता वा ऐहिक्यः पारत्रिक्यो वा यस्मिंस्तदव्याबाधम्, तच्च तत्सुखं च तदेवात्मा स्वभावो यस्य तद् 'अव्याबाधसुखात्मकं' प्रशमसुखात्मकं सिद्धसुखानुकारीत्यर्थः । अनेन च श्लोकेन तपसोऽकर्मोदयस्वरूपत्वमदुःखत्वरूपत्वं चावेदितम् । उक्तं चैतदन्यत्रापि ॥ "जं इय इमं न दुक्खं, कम्मविवागो वि सव्वहा णेवं ॥ खाओवसमियभावे, एयंति जिणागमे भणियं[८९] ॥१॥ खन्ताइसाहुधम्मे, तवगहणं सो य खओवसमियम्मि ॥ भावम्मि विणिद्दिट्ठो, दुक्खं चोदइयगे सव्वं[९०] ॥२॥ एतेन च तपसो दुःखरूपत्वकर्मोदयस्वरूपत्वपरिहारेण "सर्व एव हि दुःखैवं" इत्यादिश्लोक (२–३) द्वयाभिहितं तपोदूषणं सर्वं परिहृतमवगन्तव्यं दुःखस्वरूपत्वाश्रयत्वात्तस्येति ॥ ८ ॥

अन्ये त्विदमष्टकमेवं व्याचक्षते, 'दुःखात्मकं' दुःखमेवेत्यर्थः, 'तपः केचिन्मन्यन्ते,' तदेतत् दुःखात्मकतपोमननम्, युक्तिमत्, कुत इत्याह, कर्मोदयस्वरूपत्वात् दुःखस्य, किंवत् इत्याह, बलीवर्दादिदुःखवत्, तपसश्च क्षायोपशमिकत्वादिति (१), इह एव दूषणान्तराभिधानायाह, सर्व एव चेत्यादिश्लोकद्वयम्, अथवा दुःखात्मकं तपः केचिन्मन्यन्ते

---

× षड्जीवकायवधकाः॥ हिंसकसत्थाइं उवइसंति पुणो ॥ सुबहुं पि तवकिलेसो बालतवस्सीण अप्पफलो ॥२॥ इति गाथापूर्तिः॥

८९ यदितीदं न दुःखं नापि कर्मविपाकोऽपि सर्वथा नैव। क्षायोपशमिकभावे एतदिति जिनागमे भणितम् ॥१॥

९० क्षान्त्यादिसाधुधर्मे तपोग्रहणं तच्च क्षायोपशमिके । भावे विनिर्दिष्टं दुखं चौदयिके सर्वम् ॥२॥

कर्मोदयस्वरूपत्वाद्बलीवर्दादिदुःखवदिति, न चेह साध्यदृष्टान्तयोरेकत्वमिति वाच्यम्, बलीवर्दादिशब्देन विशेषितत्वात् दृष्टान्तस्यैति, सद्धेतुरेवायम्, वृक्षोऽयम्, शाखादिमत्त्वात्, ग्रामवृक्षवदित्यादिवदिति। अत्राचार्य आह, तन्न युक्तिमदिति, कुत इत्याह, सर्व एव चेत्यादिश्लोकद्वयम्, इह चशब्दो यस्मादर्थो द्रष्टव्यः॥(२-३)॥आचार्य एवोभयत्र परस्योपदेशमाह, युक्त्यागमेत्यादि, इदमिति तपसो दुःखात्मकत्वमननम् (४)॥ शेषं तु श्लोकचतुष्टयं पूर्ववदेव, नवरं "मनइन्द्रिययोगानामहानिश्चोदिता जिनैः" इत्यत्र चशब्दः पूर्वोक्तयुक्त्यपेक्षया युक्त्यन्तरसमुच्चयार्थो द्रष्टव्य इति॥ एकादशाष्टकविवरणं समाप्तम् ॥११॥

## ॥ अथ द्वादशं वादाष्टकम् ॥ १२ ॥

एवं तावत्प्रायः कुदृष्टीन्विविधार्थेषु विप्रवदमानान् अनुशास्य तदनुशासनविधेर्वादस्य स्वरूपनिरूपणाय आह॥

शुष्कवादो विवादश्च, धर्मवादस्तथापरः ॥ इत्येष त्रिविधो वादः, कीर्तितः परमर्षिभिः ॥ १ ॥

(वृत्तिः) शुष्क इव शुष्को नीरसः गलतालुशोषमात्रफल इत्यर्थः, स चासौ वादश्च कमपि विप्रतिपत्तिविषयमाश्रित्य प्रतिवादिना सह वदनं 'शुष्कवादः,' तथा विरूपो जयप्राप्तावपि परलोकादिबाधको वादः 'विवादः,' 'चशब्द' उक्तसमुच्चये, तथा धर्मप्रधानो वादो 'धर्मवादः,' 'तथा' तेनात्यन्तमाध्यस्थ्यादिना धर्महेमकषादिपरीक्षालक्षणेन वा प्रकारेण, समुच्चयार्थो वा 'तथाशब्दः,' 'परः' प्रधानः, अपरो वा उक्तवादाभ्यामन्यः, 'इति' अनेन प्रकारेण, 'एषो'ऽनन्तरोक्तः, तिस्रो विधाः प्रकारा यस्य स 'त्रिविधः,' 'कीर्तितः,' संशब्दितः, 'परमर्षिभिः' प्रधानमुनिभिरिति ॥ १ ॥ आद्यवादस्वरूपमाह ॥

अत्यन्तमानिना सार्धं, क्रूरचित्तेन च दृढम् ॥ धर्मद्विष्टेन मूढेन, शुष्कवादस्तपस्विनः ॥ २ ॥

(वृत्तिः) अत्यन्तमत्यर्थं मानी गर्वी 'अत्यन्तमानी' तेन, स हि जितोऽपि परगुणं न मन्यते, 'सार्धं' सह, 'क्रूरचित्तेन' संक्लिष्टाध्यवसायेन, स हि जितो वैरी स्यात्, 'चशब्दः' समुच्चये, तथा, 'दृढम्' अत्यर्थम्, धर्मो जिनाख्यातः श्रुतचारित्ररूपः, तस्यैव दुर्गतौ प्रपततां धरणसमर्थत्वात्, तस्य द्विष्टो द्वेषवान् 'धर्मद्विष्टः' तेन, स हि निराकृतोऽपि धर्मं न प्रतिपद्यतेऽतो व्यर्थप्रयासः स्यात्, 'मूढेन' युक्तायुक्तविशेषानभिज्ञेन, स हि वादेऽनधिकृत एव, प्रतिवादिना यो वादः स इति गम्यते, किमित्याह, 'शुष्कवादो'ऽनर्थवादो भवतीति गम्यम्, कस्येत्याह, 'तपस्विनः' साधोः, तपस्विग्रहणं चेह तस्य सदैवोचित-प्रवृत्तिकतया योग्यत्वेन शास्त्रेऽधिकारित्वोपदर्शनार्थमितरस्य चान्यथात्वेन तत्रानधिकारित्वोपदर्शनार्थं च, अथवा हे तपस्विन इति ॥ २ ॥ अथ कथमस्य शुष्कवादत्वम्, अनर्थवर्धनत्वादिति ब्रूमः, एतदेवाह ॥

विजयेऽस्यातिपातादि, लाघवं तत्पराजयात् ॥ धर्मस्येति द्विधाप्येष, तत्त्वतोऽनर्थवर्धनः ॥ ३ ॥

(वृत्तिः) 'विजये'ऽभिभवे तपस्विना कृते सति, 'अस्य' अत्यन्तमानादिदोषयुक्तस्य प्रतिवादिनः, अतिपतनमतिपातो मरणम्, स एव आदिर्यस्य चित्तनाशादिदोषवृन्दस्य तत् 'अतिपातादि,' भवतीति गम्यते, स हि विजितो मानात् म्रियेत चित्तनाशवैरानुबन्धाशुभकर्मबन्धसंसारपरिभ्रमणादिकं वाऽऽप्नुयात्, अथवा साधोरेव वैरानुबन्धात् सामर्थ्ये सत्यतिपातं शासनोच्छेदादि वा कुर्यादिति भावना । तथा 'लाघवं' माहात्म्यहानिः, भवतीति गम्यम्, कुत इत्याह, तस्मात्प्रतिवादिनः सकाशात् पराजयः साधोरभिभवः 'तत्पराजयस्तस्मात्,' कस्य लाघवमित्याह, धर्मस्य जिनप्रवचनस्य, यतो वादे जितो जैनोऽतोऽसारं जैनशासनमित्यवर्णवादात् । 'इति' अनन्तरोदितहेतोः, 'द्विधापि' द्वाभ्यामपि प्रकाराभ्याम्, आस्तां पराजये विजयपराजययोरपीति भावः, 'तत्त्वतः' परमार्थतो न तु व्यवहारत एव, संसारकारणत्वात्, 'अनर्थव-र्धनः' अपायवृद्धिकारीति ॥ ३ ॥ अथ द्वितीयवादस्वरूपमाह ॥

लब्धिख्यात्यर्थिना तु स्याद्दुःस्थितेनाऽमहात्मना ॥ छलजातिप्रधानो यः, स विवाद इति स्मृतः ॥ ४ ॥

(वृत्तिः) 'लब्धिः' सुवर्णादीनां लाभः, 'ख्यातिश्च' प्रसिद्धिः, ताभ्यामर्थः प्रयोजनं यस्यास्ति स तथा तेन, 'तुशब्दः' पुनःशब्दार्थः, स चाद्यवादविवादयोर्विशेषद्योतकः, 'स्यात्' भवेत्, यो वाद इति सम्बन्धः, 'दुःस्थितेन' दरिद्रेण मनोदुःस्थितेन वा, 'अमहात्मना' अनुदारचित्तेन, एवंविधस्य हि पराजये विषादवृत्तिच्छेदादिदोषप्रसङ्गेन साधोः परलोकबाधेति कृत्वा वादस्य विरुद्धता स्यात्, अत एव कारणात् विशेषितोऽसाविति, इह च सह वादिनेति गम्यम्, 'छलजातिप्रधानो यः,' तत्र छलं वाक्छलादि, यथा नवकम्बलो देवदत्तः, जातयो दूषणाभासाः, यथाऽनित्यः शब्दः, कृतकत्वात्, घटवदिति, अस्य हेतोः दूषणम्, तथाहि, यदि घटगतं कृतकत्वं हेतुः तदा तच्छब्देनासिद्धमित्यसिद्धो हेतुः, अथ शब्दगतं तदा तदनित्यत्वेन व्याप्तं न सिद्धमित्यसाधारणानैकान्तिको हेतुरिति, तत्प्रधानो यः स तथा, 'स' एवंविधो वादः, 'विवाद इति स्मृतः' एवमभिहित इति ॥ ४ ॥ कस्माद्विवादोऽयं स्मृत इत्याह ॥

विजयो ह्यत्र सन्नीत्या, दुर्लभस्तत्त्ववादिनः ॥ तद्भावेऽप्यन्तरायादि-दोषोऽदृष्टविघातकृत् ॥ ५ ॥

(वृत्तिः) 'विजयः' प्रतिवाद्यभिभवद्वारेण जयः, 'हि' यस्मात्, 'अत्र' छलादिप्रधाने विवादे, 'सन्नीत्या' शोभनेन न्यायेन, यतस्तत्र सन्नीत्युद्ग्राहणपरस्यापि छलापशब्दादिना निग्रहस्थानावाप्तिः स्यात्, 'दुर्लभः' न सुलभः, कस्येत्याह, तत्त्ववादिनः वस्तुतत्त्ववदनशीलस्य साधोः, अथात्यन्ताप्रमादितया छलादिपरिहरतो विजयस्य लाभो भवति, तत्रापि दोषमाह, 'तद्भावेऽपि' आस्तां विजयाभावे दोषस्तद्भावेऽपि परनिराकरणेपि (हि) अन्तरायः प्रतिवादिनो लाभख्यात्यादिविघात आदिर्यस्य शोकप्रद्वेषादेः स तथा, स चासौ दोषश्च इति 'अन्तरायादिदोषः,' सम्भवतीति गम्यते, स हि पराजितो राजादिभ्यो न

किञ्चिल्लभते लब्धं चास्य ह्रियते, किंविधो दोष इत्याह, 'अदृष्टविघातकृत्' परलोकव्याहतिकारीति ॥ ५ ॥

धर्मवादस्वरूपनिरूपणायाह ॥

परलोकप्रधानेन, मध्यस्थेन तु धीमता ॥ स्वशास्त्रज्ञाततत्त्वेन, धर्मवाद उदाहृतः ॥ ६ ॥

(वृत्तिः) परलोको जन्मान्तरं स प्रधानो नोपसर्जनभूतो यस्य स 'परलोकप्रधानस्तेन,' स हि परलोकभयादसमञ्जसस्य वक्ता कर्ता च न भवति,'मध्यस्थेन' आत्यन्तिकस्वदर्शनानुरागपरदर्शनद्वेषरहितेन,एवंविधो हि सुखप्रतिपाद्यो भवति, 'तुशब्दः'पुनःशब्दार्थः,'धीमता'बुद्धिमता, एवंविधो हि गुणदोषज्ञो भवति, तथा 'स्वशास्त्रस्य'अभ्युपगतदर्शनस्य 'ज्ञातं' अवगतं, तत्त्वं परमार्थो येन स तथा तेन,एवम्भूतो हि स्वदर्शनं दूषितमदूषितं वा जानातीति, सह प्रतिवादिनेति गम्यते, यो वादः स 'धर्मवाद उदाहृतः' कथितस्तत्त्ववेदिभिरिति ॥ ६ ॥

कुतोऽयं धर्मवाद उच्यते, यस्मादिह विशिष्टं तत्फलमस्तीत्यत आह ॥

विजयेऽस्य फलं धर्म-प्रतिपत्त्याद्यनिन्दितम् ॥ आत्मनो मोहनाशश्च, नियमात्तत्पराजयात् ॥ ७ ॥

(वृत्तिः) 'विजये' सन्न्यायेनाभिभवे सति, 'अस्य' परलोकप्रधानत्वादिविशेषणस्य प्रतिवादिनः,'फलम्' अर्थसिद्धिः, धर्मो जिनोक्तश्रुतचारित्रलक्षणस्तस्य प्रतिपत्तिरभ्युपगमः स आदिर्यस्याद्वेषपक्षपातावर्णवादादेः तत् 'धर्मप्रतिपत्त्यादि,' 'अनिन्दितम्' अनवद्यम्, फलविशेषणं क्रियाविशेषणं चेदं, भवतीति चेह गम्यते । अथ प्रतिवादिनः सकाशादात्मनः पराजयो भवति तत्राह । 'आत्मनः' साधोरधिकृतवादिनः, 'मोहनाशः'अतत्त्वादौ तत्त्वाद्यध्यवसायलक्षणबोधहानिः, 'चशब्दः'समुच्चयार्थः, 'नियमात्'अवश्यम्भावेन,कुत इत्याह,तेन तस्माद्वा पराजयोऽभिभवः 'तत्पराजयस्तस्मादिति'॥७॥

तर्हि किं धर्मवादः कर्तव्य एवेतरौ तु न कर्तव्यावेवेत्याशङ्कायां यद्विधेयं तदुपदिशन्नाह ॥

देशाद्यपेक्षया चेह, विज्ञाय गुरुलाघवम् ॥ तीर्थकृज्ज्ञातमालोच्य, वादः कार्यो विपश्चिता ॥ ८ ॥

(वृत्तिः) 'देशो'ग्रामनगरजनपदादिरादिर्येषां कालराजसभ्यप्रतिवाद्यादीनां ते देशादयः,तत्र देशः कुतीर्थिकप्रचुरेतरस्वरूपः, कालो दुर्भिक्षादिः, राजादयो मध्यस्था विज्ञा इतरे वा, प्रतिवादी वादयोग्यस्तदन्यो वा ॥यदाह॥ "अत्थवइणा निवइणा,पक्खवया बलवया पयण्डेणं॥गुरुणा नीएण तव-स्सिणा य सह वज्जए वायं[९१]"॥१॥आत्मा वादसमर्थोऽन्यथा वेति ॥यदाह॥"कः कालः कानि मित्राणि,को देशः कौ व्ययागमौ॥कश्चाहं का च मे शक्ति-रिति चिन्त्यं मुहुर्मुहुः॥ १"॥ इति । एतेषाम्'अपेक्षा'तया देशादीनाश्रित्येत्यर्थः,'चकारः'पुनःशब्दार्थः,'इह' वादविषये,'विज्ञाय' ज्ञात्वा,किं तदित्याह, गुरु च लघु च गुरुलघुनी,तयोर्भावो'गुरुलाघवं,'गुरु एवंविधेषु देशादिषु वादे विधीयमाने प्रवचनस्यात्मनो वा गौरवं माहात्म्यं भवति,एवंविधेषु च तेषु लाघवं माहात्म्यक्षतिस्तयोर्भवतीत्येवं विज्ञाय,यथा गौरवमेव भवति तथा वादः कार्यो न यथाकथञ्चिदिति भावना,किं कृत्वेत्याह, तीर्थकृदेव वर्धमानजिन एव ज्ञातं दृष्टान्तः 'तीर्थकृज्ज्ञातं'तत्,'आलोच्य' विभाव्य, यथा तेन भगवता वर्धमानस्वामिना प्रथमसमवसरणसमागताभव्यपर्षदं वर्जयित्वाऽन्यत्र विशिष्टा धर्मदेशना कृता, एवमन्येनाप्यनुचितदेशादिकं स्वपरोपकाराभावं च वर्जयित्वान्यत्र, 'वादो'ऽनन्तरोदितस्त्रिविधः,'कार्यो' विधेयः,'विपश्चिता' पण्डितेनेति, सर्वत्र गुरुलाघवालोचनपूर्वकप्रवृत्तिक एव परमार्थतो विपश्चिद्भवति तदन्यस्य परमार्थेनाविपश्चित्त्वादित्युक्तं विपश्चितेति ॥ ८ ॥ द्वादशाष्टकविवरणं समाप्तम् ॥१२॥

---

९१ अर्थपतिना नृपतिना पक्षवता बलवता प्रचण्डेन। गुरुणा नीचेन तपस्विना च सह वर्जयेद्वादम् ॥१॥

ष्टक वृ० २ ॥



## ॥ अथ त्रयोदशं धर्मवादाष्टकम् ॥ १३ ॥

———:०:———

अनन्तरं वादा उक्तास्तेषां च मध्ये मुख्यवृत्त्या धर्मवाद एव विधेय इति तद्विषयमुपदर्शयन्नाह ॥

**विषयो धर्मवादस्य, तत्तत्तन्त्रव्यपेक्षया ॥ प्रस्तुतार्थोपयोग्येव, धर्मसाधनलक्षणः ॥ १ ॥**

श्लो० १-२

(वृत्तिः) विषयो गोचरः, धर्मसाधनलक्षण इति योगः,कस्य, 'धर्मवादस्य' उक्तलक्षणस्य, कथमित्याह, 'तस्य तस्येति' वीप्सायां द्विर्वचनम्, तन्त्रस्य शास्त्रस्य, षष्टितन्त्रादेर्विशिष्टापेक्षा निश्रा 'तत्तत्तन्त्रव्यपेक्षा तया,' यद्यद्दर्शनं प्रतिवादी समाश्रितस्तत्तदपेक्षयेत्यर्थः। किं यावांस्तदभ्युपगतदर्शनार्थोऽभिधीयते तावदपेक्ष्योऽसौ धर्मवादविषयः, नैवमित्याह, 'प्रस्तुतार्थो' मुमुक्षूणां मोक्षार्थ एव, तत्रोपयोगः प्रयोजनभावो यस्यास्ति स 'प्रस्तुतार्थोपयोगी,' 'स एव नान्योऽपि धर्मवादविषयः, कश्चासावित्याह, धर्मस्य कर्मानुपादाननिर्जरणलक्षणस्य, 'साधनानि' हेतवोऽहिंसादीनि, तानि 'लक्षणं' स्वभावो यस्य स तथेति ॥ १ ॥ धर्मसाधनान्येवाह ॥

**पञ्चैतानि पवित्राणि, सर्वेषां धर्मचारिणाम् ॥ अहिंसा सत्यमस्तेयं, त्यागो मैथुनवर्जनम् ॥ २ ॥**

(वृत्तिः) 'पञ्च' इति सङ्ख्या, 'एतानि' वक्ष्यमाणानि, 'पवित्राणि' पावनानि, सर्वसम्मतत्वादेषाम्,'सर्वेषां' समस्तानां जैनसाङ्ख्यबौद्धवैशेषिकादीनाम्, 'धर्मचारिणां' धार्मिकाणाम्, कानि तानीत्याह, 'अहिंसा' प्राणिवधविरतिः, 'सत्यम्' ऋतम्, 'अस्तेयम्' अचौर्यम् 'त्यागः' सर्वसङ्गत्यजनम्, 'मैथुनवर्जनम्' अब्रह्मविरतिरिति। सर्वसम्मतत्वं चैषामेवम्। जैनैस्तावदेतानि महाव्रतान्यभिधीयन्ते ॥ साङ्ख्यैर्व्यासमतानुसारिभिश्च यमाः, यतस्ते आहुः, "पञ्च यमाः पञ्च नियमाः", "तत्र यमाः" "अहिंसा सत्यमस्तेयं ब्रह्मचर्यमव्यवहारश्चेति" ॥ "नियमास्तु" अक्रोधो गुरुशुश्रूषा

शौचमाहारलाघवम् ॥ अप्रमादश्चेति" ॥ पाशुपतैस्तु धर्मशब्देनोक्तानि, यतस्ते दश धर्मानाहुः, तद्यथा, "अहिंसा सत्यवचन-मस्तैन्यं चाप्यकल्पना॥ब्रह्मचर्यं तथाऽक्रोधो, ह्यार्जवं शौचमेव च ॥ संतोषो गुरुशुश्रूषा,इत्येते दश कीर्तिताः"॥१॥ भागवतैस्तु व्रतशब्देनोच्यन्ते, यदाहुस्ते,"पञ्च व्रतानि पञ्चोपव्रतानि, तत्र व्रतानि यमाः, उपव्रतानि तु नियमाः"॥ बौद्धैः पुनरेतानि कुशलधर्मा उक्ताः, यदाहुस्ते, दश कुशलानि, तद्यथा, "हिंसास्तेयान्यथाकाम-पैशून्यं परुषानृतम्। सम्भिन्ना-लापव्यापादमभिध्या दृग्विपर्ययम्॥ पापं कर्मेति दशधा कायवाङ्मानसैस्त्यजेत्"॥१॥अत्र चान्यथाकामः पारदार्यम्, सम्भि-न्नालापोऽसम्बद्धभाषणम्, व्यापादः परपीडाचिन्तनम्, अभिध्या धनादिष्वसन्तोषः परिग्रह इति तात्पर्यम्, दृग्विपर्ययो मिथ्याभिनिवेशः, एतद्विपर्ययाश्च दश कुशलधर्मा भवन्तीति ॥ वैदिकैस्तु ब्रह्मशब्देनैतान्यभिहितानीति ॥२॥

यद्येतानि पवित्राणि ततः 'किमित्याह'॥

क खल्वेतानि युज्यन्ते, मुख्यवृत्त्या क वा न हि ॥ तन्त्रे तत्तन्त्रनीत्यैव, विचार्यं तत्त्वतो ह्यदः ॥ ३ ॥

धर्मार्थिभिः प्रमाणादे–र्लक्षणं न तु युक्तिमत् ॥ प्रयोजनाद्यभावेन, तथा चाह महामतिः ॥ ४ ॥

(वृत्तिः) 'क' कस्मिन्, तन्त्रे इति योगः,'खलु' वाक्यालङ्कारे, 'एतानि' अनन्तरोदितानि अहिंसादीनि, 'युज्यन्ते' घटन्ते, 'मुख्यवृत्त्या' अनुपचारेण, क वा कस्मिन् वा तन्त्रे, 'न हि' नैव, युज्यन्ते इत्यनुवर्तते, 'तन्त्रे' बौद्धादिसिद्धान्ते, कथं युज्यन्ते कथं वा न युज्यन्ते इत्याह, तस्यैव बौद्धादेस्तन्त्रस्य शास्त्रस्य नीतिरात्मादिपदार्थानां सत्त्वासत्त्वनित्यानित्यत्वा-दिका व्यवस्था 'तत्तन्त्रनीतिः, तया एव, न तु शास्त्रान्तरनीत्या, एकशास्त्रोक्तप्रकाराणां ह्यहिंसादीनामन्यशास्त्रन्याये-नायुज्यमानतायाः स्फुटमेव प्रतीयमानत्वात् इति, किमित्याह, हिंशब्दस्यैवकारार्थत्वात्, 'अदः एव' एतदेवानन्तरोक्तम्,

पृ० 'विचार्यं' विचारणीयम्, 'तत्त्वतः' परमार्थेन, वस्त्वन्तरविचारणे धर्मवादाभावप्रसङ्गात्, कैर्विचार्यमित्याह, 'धर्मार्थिभिः' प्रयोवृतं
सू० धार्मिकैः। उक्तविपर्ययमाह, 'प्रमाणस्य' प्रत्यक्षादेः, आदिशब्दात् प्रमेयस्य आत्मादेः,'लक्षणं' तदन्यव्यवच्छेदकं स्वरूपम्, धर्मवादा-
यथा "स्वपरावभासिज्ञानं प्रमाणमित्यादि," 'तुशब्दः' पुनरर्थः, 'न' नैव, 'युक्तिमत्' उपपत्त्युपेतम्, विचार्यमाणमिति द्यकम्.
१ ॥ शेषः, केन हेतुना इत्याह, प्रयोजनं फलं तदादिर्यस्योपायादेस्तत्प्रयोजनादिस्तस्याभावोऽसत्ता प्रयोजनाद्यभावस्तेन
प्रमाणलक्षणविचारणस्य 'प्रयोजनाद्यभावेन' हेतुना इत्यर्थः, प्रयोगश्चात्रैवम्, प्रमाणादिलक्षणविचारणं न युक्तिमत्, श्लो० ६
प्रयोजनाद्यभावात्, यद्यत्प्रयोजनादिरहितं तत्तन्न युक्तिमत्, यथा कण्टकशाखामर्दनम्, प्रयोजनादिरहितं च प्रमाणा-
दिलक्षणविचारणम्, इति तन्न युक्तिमत्, न चायमसिद्धो हेतुः, सिद्धसेनसूरिवचनप्रतिष्ठितत्वादस्य, एतदेवाह, 'तथा
चाह महामतिः,' 'तथा च' तेनैव प्रमाणनिष्प्रयोजनत्वेन, 'आह' ब्रूते, इह तत्कालापेक्षो वर्तमाननिर्देशः, कोऽसावित्याह,
'महामतिः' अतिशयवत्प्रज्ञः सिद्धसेनाचार्य इत्यर्थ इति ॥ ३-४ ॥ एतदेवाह ॥

प्रसिद्धानि प्रमाणानि, व्यवहारश्च तत्कृतः ॥ प्रमाणलक्षणस्योक्तौ, ज्ञायते न प्रयोजनम् ॥ ५ ॥

(वृत्तिः) 'प्रसिद्धानि' लोके स्वत एव रूढानि, न तु प्रमाणलक्षणप्रणेतृवचनप्रसाधनीयानि, 'प्रमाणानि' प्रत्यक्षादीनि, तथा, 'व्यवहरणं व्यवहारः' स्नानपानदानदहनपाचनादिका क्रिया, चशब्दः प्रसिद्धत्वसमुच्चयार्थः, 'तत्कृतः' प्रमाणप्रसाध्यः, प्रमाणलक्षणाप्रवीणानामपि गोपालबालाबलादीनां तथाव्यवहारदर्शनात्, ततश्चैवं सति, 'प्रमाणलक्षणस्य' अविसंवादिज्ञानं प्रमाणमित्यादेः, 'उक्तौ' प्रतिपादने, 'ज्ञायते' उपलभ्यते, 'न' नैव, 'प्रयोजनं' फलम्, उपलम्भार्हं सद्यन्नोपलभ्यते तन्नास्तीत्यभिप्रायः, इह च नास्तीति मुख्यवृत्त्या वक्तव्ये सत्यपि यज्ज्ञायते नेत्युक्तमाचार्येण तदतिवचनपारुष्यप- ॥ ६२ ॥

रिहारार्थमिति ॥ ५ ॥ एवं तावत्प्रमाणलक्षणप्रतिपादने प्रयोजनाभाव उक्तोऽथ तत्रैवोपायाभावप्रतिपादनायाह ॥

**प्रमाणेन विनिश्चित्य, तदुच्येत न वा ननु ॥ अलक्षितात्कथं युक्ता, न्यायतोऽस्य विनिश्चितिः ॥६॥**

(वृत्तिः) 'ननु' इति प्रमाणलक्षणप्रणायकमताशङ्कायाम्, ततश्चाह, प्रमाणलक्षणप्रणेतुः 'प्रमाणेन' प्रत्यक्षादिना, 'विनिश्चित्य' निर्णीय, 'तत्' प्रमाणलक्षणम्, 'उच्येत' अभिधीयेत, त्वया, 'न वा' इति अन्यथा वा, तत्र यद्याद्यः पक्षस्तदा यत्तत्प्रमाणलक्षणनिश्चायकं प्रमाणं तल्लक्षणतो निश्चितमनिश्चितं वा स्यात्, यदि निश्चितं तत्, तदा किं तेनैवाधिकृतप्रमाणेन प्रमाणान्तरेण वा, तत्र यदि तेनैव, तदा इतरेतराश्रयः, तथाहि, प्रमाणात् तल्लक्षणनिश्चयः, तल्लक्षणनिश्चये च तत्प्रमाणमिति, यावत्तल्लक्षणं न निश्चितं न तावत्प्रमाणस्य प्रमाणत्वम्, यावच्च न प्रमाणस्य प्रामाण्यं न तावत्तल्लक्षणनिश्चय इति, नापि प्रमाणान्तरेण तल्लक्षणनिश्चयः, अनवस्थापत्तेः, तथाहि, यत्तत्प्रमाणान्तरं तन्निश्चितलक्षणमन्यथा वा, नान्यथा वक्ष्यमाणदोषापत्तेः, नापि निश्चितलक्षणम्, यतस्तल्लक्षणनिश्चयः किं तेनैव, उतान्येन, यदि तेनैव, तदा पूर्ववदितरेतराश्रयः, अथ प्रमाणान्तरेण, तदा तदपि निश्चितलक्षणमन्यथा वेत्यनवस्थानात्, तन्न निश्चितलक्षणमिति पक्षः, नाप्यनिश्चितलक्षणमिति वाच्यम्, यत आह, 'अलक्षितात्' अनिर्णीतलक्षणात् प्रमाणलक्षणनिश्चायकात्प्रमाणात्, 'कथं' केन प्रकारेण, न कथञ्चिदित्यर्थः, 'युक्ता' सङ्गता, 'न्यायतो' नीत्या, अस्य प्रमाणलक्षणस्य, 'विनिश्चितिः' निर्णीतिः। अयमभिप्रायः, निश्चितलक्षणेन प्रमाणेन विनिश्चित्य प्रमाणलक्षणं वक्तव्यं भवतीति न्यायः, न च चिकीर्षितप्रमाणलक्षणव्युत्पादकशास्त्रं विना प्रमाणलक्षणविनिश्चायकप्रमाणस्य लक्षणनिश्चयः, ततश्चानिश्चितलक्षणमेव तदित्युपलक्षितात्प्रमाणान्न युक्ता तल्लक्षणविनिश्चितिरिति ॥६॥ अथानिश्चितलक्षणादपि प्रमाणात्प्रमाणनिश्चितिर्भविष्यति इत्यस्यां शङ्कायामाह॥

सत्यां चास्यां तदुक्त्या किं, तद्वद्विषयनिश्चितेः ॥ तत एवाविनिश्चित्य, तस्योक्तिर्ध्यान्ध्यमेव हि ॥ ७ ॥

(वृत्तिः) 'सत्यां' भवन्त्याम्, 'चशब्दः' पुनरर्थः, 'अस्याम्' अनन्तरोक्तायामनिर्णीतलक्षणात्प्रमाणात्प्रमाणलक्षणनिश्चितौ, 'तदुक्त्या' प्रमाणलक्षणप्रतिपादनेन, 'किं' न किञ्चित्प्रयोजनमित्यर्थः, कुत इत्याह, 'तद्वत्' प्रमाणलक्षणवत्, 'विषयनिश्चितेः' प्रमेयपरिच्छेदात्, यथा हि, अनिर्णीतलक्षणेनापि प्रमाणेन प्रमाणलक्षणं निश्चीयते, एवं चिकीर्षितलक्षणेन प्रमाणेन प्रमेयस्यापि निश्चितिप्रसङ्गात् व्यर्थं प्रमाणलक्षणप्रणयनमिति भावः, तदेवं "प्रमाणेन विनिश्चित्य तदुच्येत" इति पक्षो निराकृतः । अथानिश्चित्येति पक्षस्य दूषणायाह, 'तत एव' इति यत एव प्रमाणेन विनिश्चित्य प्रमाणलक्षणप्रतिपादनमुक्तयुक्त्या मोहरूपं वर्त्तते तत एव, 'अविनिश्चित्य' प्रमाणेनाविनिर्णीय, 'तस्योक्तिः' प्रमाणलक्षणप्रतिपादनम्, किमित्याह, 'धियो' बुद्धेः, 'आन्ध्यम्' अन्धत्वं सम्मोहः, 'ध्यान्ध्यम्' तद् एव वर्त्तते प्रमाणलक्षणप्रतिपादयितुर्मूढतैव, निष्फलायासनिबन्धनत्वात्तस्याः, इति भावना, हिशब्दो यस्मादर्थे, तस्य चोत्तरश्लोके तस्मादित्यनेन सम्बन्ध इति ॥ ७ ॥

एवं प्रमाणलक्षणविचारस्य निष्प्रयोजनतामनुपायतां चोपदर्श्योपसंहारतः प्रक्रान्तां धर्मवादस्यैव विधेयतां दर्शयन्नाह ॥

तस्माद्यथोदितं वस्तु, विचार्यं रागवर्जितैः ॥ धर्मार्थिभिः प्रयत्नेन, तत इष्टार्थसिद्धितः ॥ ८ ॥

(वृत्तिः) 'यस्मात्' प्रमाणादिलक्षणविचारः प्रयोजनादिविरहितः 'तस्मात्' हेतोः, 'यथोदितं' पूर्वोक्तवस्तुनोऽनिवृत्तम्, "क्व खल्वेतानि युज्यन्त" इत्यादिरूपम्, 'वस्तु' धर्मसाधनस्वरूपमर्थजातम्, 'विचार्यं' विवेचनीयम्, किंविधैः कैरित्याह 'रागवर्जितैः' स्वदर्शनपक्षपातरहितैः, उपलक्षणत्वाच्चास्य परदर्शनद्वेषवियुक्तैरित्यपि दृश्यम्, 'धर्मार्थिभिः' धर्मप्रयोजनवद्भिः (निभिः) तदन्यैस्तु वस्त्वन्तरमपि विचारणीयं स्यादिति विशेषणफलम्, कथं, 'प्रयत्नेन' आदरेण,

किमित्येवमित्याह, 'ततो' धर्मसाधनविषयविचारात्, 'इष्टार्थसिद्धितो' धर्मलक्षणवाञ्छितार्थप्राप्तेः कारणादिति ॥ ८ ॥

॥ त्रयोदशाष्टकविवरणम् समाप्तम् ॥ १३ ॥

## ॥ अथ चतुर्दशमेकान्तनित्यपक्षखण्डनाष्टकम् ॥

अनन्तराष्टके स्व तन्त्रे तत्तन्त्रनीत्या अहिंसादीनि युज्यन्ते क वा नेति विचारणीयमित्यभिहितम्, अथ तदेव तथैव विचारयन्नाह ॥

तत्रात्मा नित्य एवेति, येषामेकान्तदर्शनम् ॥ हिंसादयः कथं तेषां, युज्यन्ते मुख्यवृत्तितः ॥ १ ॥

(वृत्तिः) 'तत्र' धर्मसाधनविषये विचारे प्रस्तुते,अतति सततं गच्छति अपरापरपर्यायानिति'आत्मा'जीवः,'नित्य एव' अप्रच्युतानुत्पन्नस्थिरैकरूप एव, न पुनः कथञ्चिदनित्योऽपि, 'इति' अनेन प्रकारेण, 'येषां' नैयायिकवैशेषिकसाङ्ख्योपनिषदिकादीनाम्, 'एकान्तेन'नित्यानित्योभयात्मके वस्तुनि नित्यत्वलक्षणेनैकविभागेनावलम्बनभूतेन'दर्शनं' दृष्टिर्मतम् 'एकान्तदर्शनं', तत्येषामस्ति, 'हिंसादयः' प्राणिवधादयः, आदिशब्दादसत्यादयो वधविरतिकर्तृत्वं भोक्तृत्वं जन्मादयश्च, 'कथं' केन प्रकारेण, 'युज्यन्ते घटन्ते, न कथञ्चिदित्यर्थः ॥ अथ नित्येऽप्यात्मनि युज्यन्त एव ते, यदाहुस्तद्वादिनः, " ज्ञानयत्नादिसम्बन्धः, कर्तृत्वं तस्य वर्ण्यते ॥ सुखदुःखादिसंवित्ति-समवायस्तु भोक्तृता ॥१॥ निकायेन विशिष्टाभि-रपूर्वाभिश्च सङ्गतिः ॥ बुद्धिभिर्वेदनाभिस्तु, तस्य जन्माभिधीयते ॥२॥ प्रागात्ताभिर्वियोगस्तु, मरणं जीवनं पुनः ॥ सदेहस्य मनोयोगो, धर्माधर्माभिसंस्कृतः॥३॥एवं मरणादियोगेन,हिंसा युक्त्याऽवसीयते॥तत्प्रतिपक्षभूतापि(च), किमहिंसा न युज्यते

॥४॥ सत्यादीन्यपि तेनैव, घटन्ते न्यायसङ्गतेः ॥ एवं हिंसादयो ज्ञेया, वैशेषिकविकल्पिताः ॥५॥ ” साङ्ख्यानां चायं विशेषः, “प्रतिबिम्बोदयन्याया-देव तस्योपभोक्तृता ॥ न जहाति स्वरूपं तु, पुरुषोऽयं कदाचन ॥ १ ॥” इत्याशंक्याह, ‘मुख्यवृत्तितः’ अनुपचरितत्वेन न युज्यन्ते, उपचारतस्तु युज्यन्तेऽपि, केवलं नासौ तत्त्वचिन्तायां सम्मतः, औप-
१९ ॥ चारिकत्वं चैषां हिंसादीनामेकान्तनित्यस्यात्मनः पूर्वोपात्तबुद्धिवेदनावियोगादीनामसम्भवात्तदसम्भवश्च नित्यस्यैक-रूपत्वादिति ॥ १ ॥ अथ कथमत्र मुख्यवृत्त्या हिंसादयो न युज्यन्त इत्याह ॥

निष्क्रियोऽसौ ततो हन्ति, हन्यते वा न जातुचित् ॥ कश्चित् केनचिदित्येवं, न हिंसाऽस्योपपद्यते ॥ २ ॥ श्लो० २

(वृत्तिः) ‘ निर्गतः ’ क्रियायाः कार्यकरणादिति ‘निष्क्रियः,’ ‘असौ’ एकान्तनित्य आत्मा, एकान्तनित्यत्वादेव,तथाहि, नित्यः क्रमेण वा कार्यं करोति यौगपद्येन वा, न तावत् क्रमेण कार्यं करोति, यतोऽसावेककार्यकरणकाले कार्यान्तरकरणे समर्थः स्यादसमर्थो वा, नासमर्थः, नित्यस्यैकरूपत्वेन सर्वदैवासमर्थत्वप्रसङ्गात्, नापि समर्थः, कालान्तरभाविसकल-कार्यकरणप्रसङ्गात्, न ह्यविकलसामर्थ्यं सदपि कारणं कार्यं न करोतीति वक्तुं युक्तम्,विवक्षितकार्यस्याप्यकरणप्रसङ्गात्, अथ सहकारिकारणाभावात् कार्यान्तरं न करोति, ननु सहकारी तमुपकुर्वन् वा स्यादनुपकुर्वन् वा, नानुपकुर्वन् वन्ध्या-पुत्रादेरपि सहकारित्वप्रसङ्गात्, अथोपकुर्वन्निति पक्षस्तदा तस्मादुपकारं भिन्नं करोत्यभिन्नं वा, भिन्नोपकारकरणे नित्योऽनुपकृत एव, अभिन्नोपकारकरणे च स एव कृतः स्यात्तथा च नित्यत्वक्षतिरिति नित्यस्य न क्रमेण कार्यकर-णम्, नापि यौगपद्येन, वर्तमानसमय एतज्जन्यसकलकालालीनकार्यकरणप्रसङ्गात्तथानुपलम्भाच्च, तदेवमक्रियो नित्यः, अथवा नित्यात्मवादिभिः कैश्चिदकर्तृकत्वं तस्याभ्युपगम्यते ॥ अतो निष्क्रियोऽसौ, ‘ततः’ तस्मान्निष्क्रियत्वात्, ‘हन्ति’

न कश्चिद् इति व्यवहितेन सम्बन्धः 'हन्यते' व्यापाद्यते, 'वाशब्दो' विकल्पार्थः, 'न जातुचित्' न कदाचित, व्यापादकात्मनो निष्क्रियत्वात्, हननीयस्य वा सर्वथा नित्यत्वात्, 'केनचिद्' इत्यनेन सम्बन्धः, 'कश्चित्' सूक्ष्मबादरादिभेदं प्राणिनम्, 'केनचित्' घातकपुंसा कर्तृभूतेन दण्डादिना वा करणभूतेन मनःप्रभृतिना वा, 'इतिशब्दो' हेत्वर्थः, 'एवंशब्दश्चोपदर्शनार्थः,' ततश्चेत्येवमन्यूनाधिकादनन्तरोदिताद् घातकहननीयाभावलक्षणाद्धेतोः, 'न' नैव, 'हिंसा' व्यापत्तिः, 'अस्य' सर्वथानित्यात्मनः, उपपद्यते घटत इति ॥ २ ॥ तथा सति किं सत्यादित्याह ॥

अभावे सर्वथैतस्या, अहिंसापि न तत्त्वतः । सत्यादीन्यपि सर्वाणि, नाहिंसासाधनत्वतः ॥ ३ ॥

(वृत्तिः) 'अभावे' अविद्यमानत्वे, 'सर्वथा' सर्वप्रकारैः, 'एतस्या' हिंसायाः, 'अहिंसापि' हिंसानिवृत्तिलक्षणा, 'न' नैव, 'तत्त्वतः' परमार्थेन, उपपद्यते इत्यनुवर्तते, न केवलमात्मनो निष्क्रियत्वाद्धिंसा नोपपद्यते तदभावेऽहिंसापि नोपपद्यत इत्यपिशब्दार्थः ॥ अथ मोपपद्यतामहिंसा, सत्यादीनि धर्मसाधनानि भविष्यन्तीत्याशङ्कानिराकरणायाह, न केवलमहिंसा नोपपद्यते 'सत्यादीन्यपि' मृषावादनिवृत्त्यादीन्यपि, आदिशब्दाच्छेषधर्मसाधनसङ्ग्रहः, 'सर्वाणि' निरवशेषाणि, 'न' नैव, उपपद्यन्त इत्यनुवर्त्तते, कुत इत्याह, 'अहिंसासाधनत्वतः' अहिंसाप्रसाधकत्वात्तेषाम्, साध्याभावे हि साधनानुष्ठानमनर्थकमेव, न हि व्योमारविन्दसंरक्षणाय प्राकारादियत्नाः कर्तुं युज्यन्ते, अहिंसासाधनानि च सत्यादीनीति सर्वास्तिकानां सम्मतमेव, विशेषतो जैनानाम् ॥ यथोक्तम् ॥ "एकं चिय इत्थ वयं, निद्दिट्ठं जिणवरेहिं सव्वेहिं ॥ पाणाइवायविरमण-मवसेसा तस्स रक्खट्ठा"[२] ॥१॥ इति ॥३॥ यदि सत्यादीन्यपि हिंसाया अभावान्नोपपद्यन्ते ततः किमित्याह ॥

---

१२ एकमेवात्र व्रतं निर्दिष्टं जिनवरैस्सर्वैः ॥ प्राणातिपातविरमणमवशेषाणि तस्य रक्षार्थाय इति ॥ १ ॥

ततः सन्नीतितोऽभावा-दमीषामसदेव हि ॥ सर्वं यमाद्यनुष्ठानं, मोहसङ्गतमेव वा ॥ ४ ॥

(वृत्तिः)'ततः' इत्युपसंहारे,तस्मादेवं स्थिते सति,'सन्नीतितः'शोभनन्यायान्निष्क्रियोऽसावित्यादिनोक्तलक्षणात्,'अभावात'अविद्यमानत्वात्,'अमीषाम्',अहिंसादीनाम्,'असदेव'अविद्यमानमेव न साद्भाविकम्, 'हिशब्दो' वाक्यालङ्कारे, 'सर्वम्' अशेषम्, 'यमाद्यनुष्ठानं' यमनियमासेवनम्,आपद्यत इति शेषः,तत्र यमा हिंसादिनिवृत्तयः, नियमास्तु शौचसंतोषतपःस्वाध्यायेश्वरप्रणिधानानि, अथोपचारात् सत्तादिष्यते तत्राह,'मोहसङ्गतमेव वा',उपचारात् सदपि तदज्ञानयुक्तमेव, न पुनर्ज्ञानसङ्गतम्, तथाहि,एकस्वभावस्यात्मनो मुक्तेरसम्भवात्तदर्थमनुष्ठानमज्ञानसङ्गतमेव,'वाशब्दो'विकल्पार्थ इति॥४॥

नित्यात्माऽभ्युपगमे दूषणान्तरमाह ॥

शरीरेणापि सम्बन्धो, नात एवास्य सङ्गतः ॥ तथा सर्वगतत्वाच्च, संसारश्चाप्यकल्पितः ॥ ५ ॥

(वृत्तिः) न केवलमहिंसादयो नित्ये सत्यात्मनि न सङ्गच्छन्ते,'शरीरेणापि' देहेनापि सह,'सम्बन्धः'संयोगः, 'न' नैव,-'अत एव' निष्क्रियत्वादेव हेतोः, निष्क्रियस्य हि सम्बन्धक्रिया नोपपद्यते,अथवा, 'अत'एवेति' नित्यत्वादेवेत्यर्थः, नित्यस्य हि शरीरसम्बन्धः पूर्वरूपत्यागे वा स्यादत्यागे वा, अत्यागे चेत्तदा शरीरेणासम्बद्ध एवासौ स्याच्छरीरासम्बद्धत्वलक्षणस्य पूर्वरूपस्य तदवस्थत्वात्, त्यागे चेत्तदा तदनित्यत्वम् स्वभावत्यागस्यानित्यत्वलक्षणा (णत्वा) त्, 'अस्य' इति नित्यात्मनः,'न'नैव,'सङ्गतो' युक्तः ।'तथा' इति वाक्यान्तरोपक्रमार्थः, 'सर्वगतत्वात्' सकलभुवनव्यापकत्वात्,इष्यते च कैश्चिदात्मनो विभुत्वम् ॥ यदाह॥ "मदीयेनात्मना युक्तं, दूरदेशादिवर्त्यपि ॥ क्षित्यादि मूर्तिमत्त्वादे-रस्मदीयशरीरवत् ॥१॥"चकारान्नि (रो नि) ष्क्रियत्वान्नित्यत्वाद्वा,किमित्याह,'संसारश्चापि,'न केवलं शरीरसम्बन्धोऽस्य न सङ्गतः, संसारश्चापि

तिर्यङ्नरनारकनाकिनिकायसंसरणलक्षणो न सङ्गतः, संसरणं ह्यसर्वव्यापकस्यैव युज्यते सक्रियस्य कथञ्चिदनित्यस्य चेति, 'चापि' इति निपातद्वयमपि समुच्चयार्थम्, अपि च इत्यादिवत्, तथाहि, सर्वगतत्वे निष्क्रियत्वे नित्यत्वे वा सत्यात्मनः सर्वत्र सर्वदा च भावान्न संसारः सङ्गतः, किं सर्वथा न सङ्गत इत्यत आह, 'अकल्पितः' तात्त्विकः, कल्पितस्तु सङ्गच्छमानोऽपि न हेयोपादेयकोटिमारोहति नभोम्भोरुहवदिति ॥५॥ एवं च विभुत्वेन संसाराभावे सति यदापन्नं तदाह ॥

ततश्चोर्ध्वगतिर्धर्मा-दधोगतिरधर्मतः ॥ ज्ञानान्मोक्षश्च वचनं, सर्वमेवौपचारिकम् ॥ ६ ॥

(वृत्तिः) 'ततश्च' एवं संसाराभावे सति, 'ऊर्ध्वगतिः' स्वर्गाद्यवाप्तिलक्षणा, 'धर्मात्' अहिंसाद्यनुष्ठानलक्षणात्, तथा, 'अधोगतिः' नारकाद्यवाप्तिरूपा, 'अधर्मतो'ऽधर्माद्धिंसाद्यनुष्ठानरूपात्, तथा, 'ज्ञानात्' पञ्चविंशतितत्त्वावबोधरूपात्, 'मोक्षो' निखिलकर्मनिर्मुक्तिलक्षणः, 'चशब्दः' उक्तसमुच्चये, इतिशब्दोऽत्र लुप्तो द्रष्टव्यस्तेन 'इतिवचनम्' एतदर्थप्रतिपादनम्, किमित्याह, 'सर्वमेव' निरवशेषमेव, 'औपचारिकं' काल्पनिकमपारमार्थिकमित्यापन्नम्, अभ्युपगम्यते चोर्ध्वगतिर्धर्मादित्यादि साङ्ख्यैः ॥ आह च ईश्वरकृष्णः ॥ "धर्मेण गमनमूर्ध्वं, गमनमधस्ताद्भवत्यधर्मेण ॥ ज्ञानेन चापवर्गो, विपर्ययादिष्यते बन्धः ॥ १ ॥" तथा "पञ्चविंशतितत्त्वज्ञो, यत्र तत्राश्रमे रतः ॥ जटी मुण्डी शिखी वापि, मुच्यते नात्र संशयः ॥२॥" इति ॥ ६ ॥ अथ विभुत्वेन संसरणाभावेऽपि यदोर्ध्वलोके स्वहेतोरेव भोगायतनमस्य भवति तदोर्ध्वगतिरपदिश्यते यदा त्वधस्तदाधोगतिरित्येवं भोगायतनद्वारेणोर्ध्वगत्यादिरात्मनो भविष्यतीत्याशङ्कायामाह ॥

भोगाधिष्ठानविषये-प्यस्मिन् दोषोऽयमेव तु ॥ तद्भेदादेव भोगोऽपि, निष्क्रियस्य कुतो भवेत् ॥ ७ ॥

(वृत्तिः) भोगो विषयप्रतिभासिनो मनस आत्मनि स्फटिकोपाधिन्यायेन प्रतिबिम्बनम्, तथा चोक्तं विन्ध्यवासिना ॥

"पुरुषोऽविकृतात्मैव,स्वनिर्भासमचेतनम्। मनः करोति सान्निध्या-दुपाधिः स्फटिकं यथा ॥१॥" स्वनिर्भासमिति स्वाकारवन्तं पुरुषं मनः कर्तृभूतं करोतीति ॥ "तस्मिंश्चिद्दर्पणे स्फारे समस्ता वस्तुदृष्टयः"... "तत्रश्चेद्रूपरिणतौ,बुद्धौ भोगोऽस्य कथ्यते ॥ प्रतिबिम्बोदयः स्वच्छे, यथा चन्द्रमसोऽम्भसि ॥१॥" तस्य भोगस्याधिष्ठानमायतनं भोगाधिष्ठानम् यत्र बुद्ध्यहङ्कारेन्द्रियादौ प्रकृतिविकारे सति पुरुषस्य भोगो भवति तद्भोगाधिष्ठानं शरीरम्,तद्विषयो यत्र संसारे स तथा,तत्रापि 'भोगाधिष्ठानविषयेऽपि,'न केवलं भोगायतनकल्पनारहिते इत्यपिशब्दार्थः, 'अस्मिन्' इति संसारे, 'दोषो'दूषणम्,'अयमेव' एष एवानन्तरोदित ऊर्ध्वगत्यादिसंसारापारमार्थिकत्वलक्षणः, यतो भोगाधिष्ठानं शरीरमेव, तेन च सह सम्बन्धो निष्क्रियत्वेनात्मनो न युक्तः,तदभावात्तद्द्वारकः संसार औपचारिक एवेति, 'तुशब्दः' पादपूरणे,तथा भोगाधिष्ठानकल्पनमसङ्गतमेव, भोगस्यैवात्मनोऽयुज्यमानत्वादित्येतदाह, 'तद्भेदादेवेति,' इह तच्छब्देन क्रिया परामृश्यते, ततः क्रियाभेदादेव क्रियाविशेषत्वादेव भोगस्य, भोगो हि क्रियाविशेष एव अतः, 'भोगोऽपि'विषयोपभोगोऽपि,न केवलं भोगाधिष्ठानविषयः संसार इत्यपिशब्दार्थः, 'निष्क्रियस्य' सकलक्रियाकलापविप्रहीणस्यात्मनः, 'कुतः' कस्माद्धेतोः, 'भवेत्' जायेत, न कुतोऽपीति भाव इति ॥७॥

अथाहिंसादीनां शरीरसम्बन्धस्य भोगस्य चाभावलक्षणदोषभयात् सक्रियत्वमात्मनोऽभ्युपगम्यते तत्राह ॥

**इष्यते चेत्क्रियाप्यस्य, सर्वमेवोपपद्यते ॥ मुख्यवृत्त्यानघं किन्तु, परसिद्धान्तसंश्रयः ॥ ८ ॥** श्लो० ८

(वृत्तिः) 'इष्यते' अभ्युपगम्यते, 'चेत्' यदि,'क्रियापि'काचित् शरीरसम्बन्धनादिका, क्रिया तावदिष्टैवेति प्रतिपादनार्थोऽपिशब्दः, 'अस्य' नित्यात्मनः, इह तदेति शेषो द्रष्टव्यः, ततश्च तदा,'सर्वमेव'निःशेषमेव यत्पूर्वमहिंसादिकमनुपपद्यमानतया प्रतिपादितं तत्, 'उपपद्यते' घटते, कथमित्याह, 'मुख्यवृत्त्या' पारमार्थिकतया,न पुनः क्रियानभ्युपगमे इवामुख्य-

वृत्त्या, 'अनघं' निर्दोषम, अनुपचारवृत्त्योपपद्यमानत्वात्, 'किन्तु' केवलमेतावान् दोषो यदुत, 'परसिद्धान्तसंश्रयः' जैनाभ्युपगतपरिणामवादाश्रयणमिति, न चैतन्निग्रहस्थानमप्यतिदुष्करमनभिनिवेशिनां मुमुक्षूणामिति, तदेवमेकान्तनित्यात्मवादिमतेऽहिंसादीनि न घटन्त इति स्थितमिति ॥ ८ ॥ चतुर्दशाष्टकविवरणं समाप्तम् ॥ १४ ॥

## ॥ अथ पञ्चदशैकान्तानित्यपक्षखण्डनाष्टकम् ॥१५॥

अनन्तरं द्रव्यास्तिकनयमते यथाहिंसादीनि धर्मसाधनानि धर्मवादविषयभूतानि न घटन्ते तथा प्रतिपादितम्, अथ पर्यायास्तिकनयमते यथा तानि न युज्यन्ते तथाह ॥

**क्षणिकज्ञानसन्तान-रूपेऽप्यात्मन्यसंशयम् ॥ हिंसादयो न तत्त्वेन, स्वसिद्धान्तविरोधतः ॥ १ ॥**

(वृत्तिः) क्षणः परमनिकृष्टः कालः, सोऽस्यास्तीति क्षणिकम्, तच्च तज्ज्ञानं च चैतन्यं क्षणिकज्ञानम्, तस्य सन्तानः प्रवाहः स एव रूपं यस्य स तथा, तत्र 'क्षणिकज्ञानसन्तानरूपेऽपि,' न केवलं नित्यरूपे,केत्याह,'आत्मनि'जीवे, 'असंशयं' निःसन्देहं यथा भवति, 'हिंसादयः' प्राणिवधादयः,'न' नैव,'तत्त्वेन'निरुपचरितवृत्त्या,घटन्ते इति गम्यते,किं वाङ्मात्रेण, नेत्याह, 'स्वसिद्धान्तविरोधतः' स्वकीयागमविरोधादिति ॥ १ ॥ स्वसिद्धान्तविरोधमेव दर्शयन्नाह ॥

**नाशहेतोरयोगेन, क्षणिकत्वस्य संस्थितिः ॥ नाशस्य चान्यतोऽभावे, भवेद्धिंसाप्यहेतुका ॥ २ ॥**

(वृत्तिः) 'नाशहेतोः' क्षयकारणस्य, 'अयोगेन' अयुज्यमानत्वेन,'क्षणिकत्वस्य'क्षणक्षयित्वस्य, 'संस्थितिः' व्यवस्था प्रतिष्ठेत्यर्थः ॥ तथाहि, क्षणवादिभिरभिधियते,मुद्गरादिना नाशहेतुना घटादेर्नाशो विधीयमानो भिन्नस्तस्माद्विधीयते अभिन्नो वा, भिन्नश्चेद्घटादेस्तादवस्थ्यं स्यात्, अथाभिन्नस्तदा घटादिरेव कृतः स्यात, स च स्वकीयकारणकलापेनैव

कृत इति न तस्य किञ्चित् करणीयमस्तीत्येवं नाशहेतोरयुज्यमानत्वेन नाशिनो भावाः स्वभावत एव नश्यन्ति स्वभाव-नाशिनः पुनरुदयानन्तरापवर्गिण एव भवन्तीति नाशहेतोरभावाद्यदि क्षणिकत्वव्यवस्था ततः किमित्याह, 'नाशस्य च' विनाशस्य पुनः,'अन्यतः'स्वभावव्यतिरिक्तान्नाशहेतोः सकाशात्,'अभावे' अभवने,सर्वनाशानां निर्हेतुकत्वाभ्युपगमात्, 'भवेत्' जायेत, 'हिंसापि' वधोऽपि, न केवलं घटादिक्षयः, 'अहेतुका' स्वरूपलाभातिरिक्तनिमित्तशून्यैवेत्यर्थः ॥ २ ॥

निर्हेतुकत्वे चास्या दोषमाह ॥

ततश्चास्याः सदा सत्ता, कदाचिन्नैव वा भवेत् ॥ कादाचित्कं हि भवनं, कारणोपनिबन्धनम् ॥३॥

(वृत्तिः) यस्मादियमहेतुका, 'ततश्च' तस्मात्पुनर्हिंसाया निर्हेतुकत्वात्,'अस्या'हिंसायाः,'सदा'सर्वदा, 'सत्ता'सद्भावः, भवेदिति योगः, 'कदाचित्' क्वचिदपि काले, 'नैव' न खलु,'वाशब्दो' विकल्पार्थः,'भवेत्,' जायेत,सत्तेति वर्तते, कुत एतदेवमित्याह,कदाचिद्भवं'कादाचित्कम्,' 'हिशब्दो'यस्मादर्थः,'भवनं' प्रादुर्भावः, 'कारणोपनिबन्धनं' हेतुनिबन्धनम्, यतोऽभिधीयते ॥ " नित्यं सत्त्वमसत्त्वं वा-ऽहेतोरन्यानपेक्षणात् ॥ अपेक्षातो हि भावानां,कादाचित्कत्वसम्भवः ॥१॥ इति॥३॥ ननु जनक एव हिंसकोऽतः कथं निर्हेतुकत्वं हिंसायाः,कथं वा निर्हेतुकत्वाश्रयो नित्यसत्त्वादिको दोष इत्यत्रोच्यते, ननु योऽयं जनक एव हिंसकः कल्प्यते स किं सन्तानस्य क्षणिकस्य वेति विकल्पद्वयम्, तत्राद्यविकल्पं दूषयन्नाह ॥

न च सन्तानभेदस्य, जनको हिंसको भवेत् ॥ सांवृतत्वान्न जन्यत्वं, यस्मादस्योपपद्यते ॥ ४ ॥

(वृत्तिः) 'न च' नैव, भिद्यत इति भेदः सन्तानश्चासौ भेदश्च सन्तानभेदः तस्य 'सन्तानभेदस्य' क्षणप्रवाहविशेषस्य हिंस्यमानहरिणक्षणसन्तानच्छेदेनोत्पत्स्यमानमनुष्यादिक्षणसन्तानस्य, 'जनक'उत्पादको लुब्धकादिः ,'हिंसको' हिंसा-

कारी, 'भवेत्' जायेत, कुत एतदित्याह, संवृतौ कल्पनायां भवः सांवृतः, तस्य भावस्तत्त्वं तस्मात्, 'न' नैव, 'अन्यत्वम्' उत्पादनीयत्वम्, 'यस्मात्' कारणात्, 'अस्य' सन्तानभेदस्य, 'उपपद्यते' घटते ॥ प्रयोगश्चैवम्, यज्जन्यं न भवति तस्य जनको नास्ति वियदम्भोजस्येव, अजन्यश्च सन्तानभेद इति न तस्य जनकोऽस्ति, तदभावाच्च हिंसकाभावः, न चाजन्यत्वं सन्तानस्यासिद्धम्, सांवृतत्वात्, यत्सांवृतं तदजन्यं वियदिन्दीवरवत्, सांवृतश्च सन्तान इत्यजन्यः; सांवृतत्वं च सन्तानस्य सन्तानिभ्यो भेदाभेदविकल्पद्वारेण चिन्त्यमानस्यायुज्यमानत्वादिति ॥ ४ ॥ द्वितीयविकल्पदूषणायाह ॥

न च क्षणविशेषस्य, तेनैव व्यभिचारतः ॥ तथा च सोऽप्युपादान–भावेन जनको मतः ॥ ५ ॥

(वृत्तिः) 'न च' नापि, 'क्षणविशेषस्य' म्रियमाणसूकरादिक्षणानन्तरमुत्पित्सुमनुष्यादिक्षणस्य, जनको हिंसकः भवेदिति वर्तते, कुत एतदित्याह, 'तेनैव' म्रियमाणहरिणादेरन्त्यक्षणेन, 'व्यभिचारतो' विसंवादात्, 'तथा च' इति व्यभिचारस्यैवोपदर्शनार्थः, 'सोऽपि' यो म्रियमाणहरिणादेरन्त्यः क्षणः सोऽपि, न केवलं लुब्धकक्षण एव जनक इति योगः, कथं जनक इत्याह, 'उपादानभावेन' परिणामिकारणत्वेन, 'जनक' उत्पादकः, 'मतः' अभीष्टः, म्रियमाणान्त्यक्षणलुब्धकक्षणयोर्जनकत्वं प्रत्युपादानसहकारिभावकृत एव यदि परं विशेष इति भावना, एवं चोपादानक्षणस्यापि हिंसकत्वमासक्तमिति ॥ ५ ॥ आसज्यतां नामोपादानक्षणस्य हिंसकत्वं का नो बाधेत्याशङ्क्याह ॥

तस्यापि हिंसकत्वेन, न कश्चित्स्यादहिंसकः ॥ जनकत्वाविशेषेण, नैवं तद्विरतिः क्वचित् ॥ ६ ॥

(वृत्तिः) 'तस्यापि' म्रियमाणस्य हरिणादेरन्त्यक्षणस्यापि, आस्तां व्याधस्य, 'हिंसकत्वेन' व्यापादकत्वेन, 'न' नैव, 'कश्चित्' कोऽपि बोधिसत्त्वादिरपि, 'स्यात्' भवेत्, 'अहिंसकः' अव्यापादकः, कथमेतदित्याह, 'जनकत्वाविशेषेण' बुद्धादेर्लुब्धकादेश्च

अनन्तरक्षणस्योत्पादकत्वेऽविशिष्टत्वात्, उपादानसहकारिभावेन तयोर्यदि परं विशेषस्तत्र च यदि सहकारितयापि हिंसकत्वं तदोपादानभावेन सुतरां तद्भविष्यतीति, अथ भवतु नामाविशेषेण हिंसकत्वं को दोष इत्याशङ्क्याह, 'नैवं' नामुना प्रकारेणाविशेषेण जनकहिंसकत्वाभ्युपगमलक्षणेन, 'तद्विरतिः' हिंसानिवृत्तिः, 'क्वचित्' देशान्तरे कालान्तरे पुरुषान्तरेऽवस्थान्तरे विषयान्तरे वेति ॥ ६ ॥ मा भूदहिंसा का नो हानिर्भविष्यतीति चेदत आह ॥

**उपन्यासश्च शास्त्रेऽस्याः, कृतो यत्नेन चिन्त्यताम् ॥ विषयोऽस्य यमासाद्य, हन्तैष सफलो भवेत् ॥७॥**

(वृत्तिः) 'उपन्यासश्च' उपादानं पुनः, 'कृत' इति सम्बन्धः, यदि उपन्यासं नाकरिष्यत्तदा हानिरपि नाभविष्यदिति भावः, क्वासौ कृत इत्याह, 'शास्त्रे' सौगतशासने, यदाह ॥ "सर्वे त्रसन्ति दण्डेन, सर्वेषां जीवितं प्रियम् ॥ आत्मानमुपमां मत्वा, नैव हिंसेन् न घातयेत् ॥१॥" 'अस्याः' अहिंसायाः, 'कृतो' विहितः, इत्यतो 'यत्नेन' आदरेण, 'चिन्त्यतां' पर्यालोच्यतां त्वया क्षणवादिना, कोसावित्याह, 'विषयो' गोचरः, 'अस्य' शास्त्रे अहिंसोपन्यासस्य, किम्भूतो विषयश्चिन्त्यताम्, 'यं' विषयम्, 'आसाद्य' प्राप्य, 'हन्त' इति प्रत्यवधारणार्थः कोमलामन्त्रणार्थो वा, 'एष' शास्त्रोपन्यासः, 'सफलः' सप्रयोजनः, 'भवेत्' जायेत इति ॥ ७ ॥ अथ अहिंसाया अघटनेऽपि सत्यादीनि धर्मसाधनानि भविष्यन्तीत्याह ॥

**अभावेऽस्या न युज्यन्ते, सत्यादीन्यपि तत्त्वतः ॥ अस्याः संरक्षणार्थं तु, यदेतानि मुनिर्जगौ ॥ ८ ॥**

(वृत्तिः) 'अभावे' अविद्यमानत्वे, 'अस्या' अहिंसायाः, 'न युज्यन्ते' न घटन्ते, 'सत्यादीन्यपि' मृषावादविरमणादीन्यपि, अहिंसा तावन्न युज्यत एव इत्यपिशब्दार्थः, 'तत्त्वतः' परमार्थतः, कुत एतदेवमित्यत आह, 'अस्याः' अहिंसायाः, 'संरक्षणार्थं तु' परिपालनायैव, 'तुशब्द' एवकारार्थः, 'यत्' यस्मात्, 'एतानि' सत्यादीनि, 'मुनिः' जगतो मन्ता जिनः, 'जगौ'

गदितवान्, न हि सस्यादिपालनीयाभावे वृतौ विद्वान् यतत इति ॥ ८ ॥ पञ्चदशाष्टकविवरणं समाप्तम् ॥ १५ ॥

## ॥ अथ षोडशं नित्यानित्यपक्षमण्डनाष्टकम् ॥

यद्येकान्तेन नित्येऽनित्ये वाऽऽत्मनि हिंसादयो न घटन्ते तर्हि क्व घटन्त इत्यत आह ॥

**नित्यानित्ये तथा देहाद्, भिन्नाभिन्ने च तत्त्वतः ॥ घटन्त आत्मनि न्याया-द्धिंसादीन्यविरोधतः॥ १ ॥**

(वृत्तिः) नित्यश्चासावनित्यश्चेति नित्यानित्यः, तत्र 'नित्यानित्ये' 'आत्मनि' अभ्युपगम्यमाने,हिंसादीन घटन्त इति सम्बन्धः । न हि एकान्तेन नित्यमनित्यं वा वस्तु किमपि कस्यापि कार्यस्य करणक्षमम्, तथाहि, मृत्पिण्डस्य कार्यं घटो न भवति, एकरूपत्वेनानतिक्रान्तमृत्पिण्डभावत्वात्, मृत्पिण्डवत्, मृत्पिण्डत्वातिक्रमे चानित्यत्वप्राप्तेः,तथा मृत्पिण्डस्य कार्यं घटो न भवति, सर्वथैवानुगमाभावेनानतिक्रान्तमृत्पिण्डत्वलक्षणपर्यायत्वात्,पटवत्, मृत्पिण्डत्वलक्षणपर्यायातिक्रमाभ्युपगमे चानुयायित्वेन नित्यानित्यत्वं वस्तुनः स्यादिति। आह च ॥ "घटः कार्यं न पिण्डस्य, पिण्डभावानतिक्रमात् ॥ पिण्डवत्पटवच्चेति, स्यात् क्षयित्वादिरन्यथा"॥१॥ तदेवं नित्यानित्यमेव वस्तु कार्यकरणक्षममिति ॥ ननु नित्यानित्यत्वधर्मयोर्विरुद्धत्वात्कथमेकाधिकरणत्वम् । अत्रोच्यते । यथा ज्ञानस्य भ्रान्तत्वाभ्रान्तत्वे परमार्थसंव्यवहारापेक्षया न विरुद्धे एवं द्रव्यतो नित्यत्वं पर्यायतश्चानित्यत्वं न विरुद्धम्, न च द्रव्यपर्याययोः परस्परं भेदः, यतः,यदेव वस्त्वनपेक्षितविशिष्टरूपं द्रव्यमिति व्यपदिश्यते तदेवापेक्षितविशिष्टरूपं पर्याय इति ॥ 'तथा' इति वाक्यान्तरोपक्षेपार्थः, 'देहात्' शरीरात्, किमित्याह, 'भिन्नः' व्यतिरिक्तः स चासावभिन्नश्चाव्यतिरेकी 'भिन्नाभिन्नस्तत्र,' भिन्नाभिन्न एव च जीवः शरीरात्, तथैवोपलभ्यमानत्वात्। तथा हि, जीवस्यामूर्तत्वाद्देहस्य च मूर्तत्वान्मूर्तामूर्तयोश्चात्यन्तविलक्षणत्वाद्भेदस्तयोः,

देहस्य स्पर्शने च जीवस्य वेदनोत्पत्तेरभेदश्चेति, ॥आह च,॥"जीवसरीराणं पि हु,भेयाभेओ तहोवलम्भाओ ॥ मुत्तामुत्तत्तणओ, छिक्कंमि य वेयणाओ य[९३] ॥१॥" सर्वथा भेदे हि शरीरकृतकर्मणो भवान्तरेऽनुभवानुपपत्तिः 'स्यात्, अभेदे च परलोकहानिः शरीरनाशे जीवनाशादिति॥ 'चशब्दः' अनुक्तसमुच्चये। ततश्च सदसती इत्याद्यपि द्रष्टव्यम्। आह च॥ 'सन्तस्स सरूवेणं, पररूवेणं तहा असन्तस्स ॥ हंदि विसिट्ठत्तणओ,होन्ति विसिट्ठा सुहाईया[९४] ॥१॥" विशिष्टाः प्रतिप्राणिवेद्याः। 'तत्त्वत' इति परमार्थतो नित्यानित्यादौ न पुनः कल्पनया, पारमार्थिकत्वं च नित्यानित्यत्वादीनां दर्शितमेव। 'घटन्ते' युज्यन्ते। 'आत्मनि' जीवे। 'न्यायात्' परिणामिस्वरूपस्यात्मनोऽपरापरपर्यायसंपदुपपत्तिलक्षणया नीत्या। 'हिंसादीनि' आश्रवसंवरबन्धमोक्षसुखादीनि। कथमित्याह। 'अविरोधतः' अविरोधेन, एकान्तपक्षे ये हिंसादिष्वभ्युपगम्यमानेषु विरोधादर्शितास्तत्परिहारेणेति भाव इति ॥१॥ आत्मनः परिणामित्वे हिंसाया अविरोधदर्शनायाह॥

पीडाकर्तृत्वयोगेन, देहव्यापत्त्यपेक्षया ॥ तथा हन्मीतिसङ्क्लेशा-द्धिंसैषा सनिबन्धना ॥ २ ॥

(वृत्तिः)पीडा दुःखवेदना तस्याः कर्ता विधाता तद्भावः पीडाकर्तृत्वं तस्य तेन वा योगः सम्बन्धस्तेन 'पीडाकर्तृत्वयोगेन,' तथा, देहस्य शरीरस्य व्यापत्तिर्विनाशो देहव्यापत्तिस्तस्या अपेक्षा निश्रा 'देहव्यापत्त्यपेक्षा तया,' 'तथेति' नबन्धनान्तरसमुच्चये, 'हन्मि' मारयामि प्राणिनमित्येवंरूपात् 'सङ्क्लेशात्' चित्तकालुष्यात्, 'हिंसा' प्राणव्यपरोपणा या परिणामवादिभिरभ्युपगतेति गम्यम्, 'एषा' इयं हिंसा, 'सनिबन्धना' सनिमित्ता। परिणामवादे हि पीडकस्य पीडनीयस्य

९३ जीवशरीरयोरपि खलु भेदाभेदस्तथोपलम्भात्। मूर्त्तामूर्त्तत्वतः स्पर्शे च वेदनातश्च ॥१॥
९४ सतः स्वरूपेण पररूपेण तथाऽसतः। हंदि विशिष्टत्वाद्भवन्ति विशिष्टाः सुखादिकाः ॥२॥

च परिणामित्वात् पीडाकर्तृत्वमुपपद्यते देहविनाशसङ्क्लेशौ च, एकान्तवादे तु पीडाकर्तृत्वादीनां पूर्वोक्तन्यायेनायुज्यमानत्वात् हिंसा निर्निबन्धनेति ॥ २॥ यच्चोच्यते नाशहेतुना देहाद्भिन्नो नाशः क्रियते अभिन्नो वा, यदि भिन्नस्तदा देहस्य तादवस्थ्यं स्यात्, अथ अभिन्नस्तदा देह एव कृतो भवतीति, तदयुक्तम्, अभिन्ननाशकरणे हि वस्तु नाशितमेव भवति न कृतम्, यथाऽभिन्नोत्पादकरणे उत्पादितमेव भवतीति। अनेन च श्लोकेन स्थानान्तरप्रसिद्धस्त्रिविधो वधो निर्दिष्टः॥तथा च॥ "तप्पज्जायविणासो, दुक्खुप्पाओ य संकिलेसो य॥एस वहो जिणभणिओ, वज्जेयव्वो पयत्तेणं९५॥१"॥ ननु अस्माद् घातकान्मरणमनेन देहिना प्राप्तव्यमित्येवंफलात् स्वकृतकर्मणो वशाद्धिंसा भवति अन्यथा वा, यदि आद्यः पक्षस्तदाहिंसकस्याहिंसकत्वमेव स्वकर्मकृतत्वात् हिंसायाः, पुरुषान्तरकृतहिंसायामिव, तथा कर्मनिर्जराहेतुत्वेन हिंसकस्य वैयावृत्त्यकरस्येव कर्मक्षयावाप्तिलक्षणो गुणः स्यात्, अथ अन्यथेति पक्षस्तदा निर्विशेषत्वात्सर्वं हिंसनीयं स्यात्, तथा स्वर्गसुखादयोऽपि स्वकृतकर्मानापादिता एव स्युरिति कर्माभ्युपगमोऽनर्थक इत्येवमार्हतानामपि हिंसाया असम्भव एवेत्याशङ्क्याह ॥

हिंस्यकर्मविपाकेऽपि, निमित्तत्वनियोगतः ॥ हिंसकस्य भवेदेषा, दुष्टा दुष्टानुबन्धतः ॥ ३ ॥

(वृत्तिः) हिंस्यते मार्यते इति हिंस्यस्तस्य यत्कर्म तस्य विपाक उदयो 'हिंस्यकर्मविपाकः' तत्रापि, हिंस्यकर्मविपाकरूपत्वेऽपि हिंसायां, आस्तां हिंस्यकर्मविपाकाभावकल्पनायाम्, 'निमित्तत्वस्य' निमित्तकारणभावस्य, 'नियोगो'ऽवश्यंभावो निमित्तत्वनियोगः तस्मात् 'निमित्तत्वनियोगतः,' 'हिंसकस्य' व्यापादकस्य, 'भवेत्' जायेत, 'एषा' हिंसा' । अयमभिप्रायः।

९५ तत्पर्यायविनाशो दुःखोत्पादश्च संक्लेशश्च । एष वधो जिनभणितो वर्जयितव्यः प्रयत्नेन ॥

यद्यपि प्रधानहेतुभावेन कर्मोदयाद्धिंस्यस्य हिंसा भवति, तथापि हिंसकस्य तस्यां निमित्तभावेनोपयुज्यमानत्वात्तस्यासौ भवतीत्युच्यते, न च वाच्यं हिंस्यकर्मणैव हिंसकस्य हिंसायां प्रेरितत्वात्तस्य न दोष इति, अभिमरादेः परप्रेरितस्यापि लोके दोषदर्शनादिति । ननु यदि निमित्तभावेऽपि हिंसा स्यादितीष्यते तदा वैद्यानामपि तत्प्रसङ्गः, सत्यम्, केवलं सा तेषां न दुष्टा, अदुष्टाभिसंधित्वात्, एतदेवास्यातिरेकेणाह, 'दुष्टा' दोषवती, कर्मबन्धनिबन्धनत्वात्, 'दुष्टानुबन्धतो' दुष्टचित्ताभिसन्धेः, भवति । यदाह ॥ "जो उ पमत्तो पुरिसो, तस्स उ जोगं पडुच्च जे सत्ता ॥ वावज्जन्ती नियमा, तेसिं सो हिंसओ होई[९६] ॥१॥" न शुभाभिसन्धेः ॥यदाह॥"जा जयमाणस्स भवे, विराहणा सुत्तविहिसमग्गस्स ॥ सा होइ निज्जरफला, अज्झत्थविसोहिजुत्तस्स[९७]॥२॥" एतेन च यदुक्तं वैयावृत्त्यकरस्येव हिंसकस्य कर्मनिर्जरणसहायत्वान्निर्जरालाभ इति, तदपि परिहृतम्, यतो न 'हिंसको' वैयावृत्त्यकरवत् शुभाभिसन्धिः, शेषं त्वभ्युपगमान्निरस्तमिति । अधिकृत-श्लोकार्थसंवादिनी चेयं गाथा॥"नियकयकम्मुवभोगे वि, संकिलेसो धुवं वहंतस्स ॥ तत्तो बन्धो तं खलु, तव्विरईए विवज्जन्ति[९८] ॥१॥" ॥३॥ एवं परिणामिन्यात्मनि हिंसायाः सम्भवमाविर्भाव्याहिंसायास्तमाह ॥

ततः सदुपदेशादेः, क्लिष्टकर्मवियोगतः ॥ शुभभावानुबन्धेन, हन्तास्या विरतिर्भवेत् ॥ ४ ॥

(वृत्तिः) यतः परिणामिन्यात्मनि सति हिंसा घटते ततस्तस्माद्धिंसाघटनात्, 'अस्या विरतिर्भवेदिति योगः' "सतां' ज्ञान-

९६ यस्तु प्रमत्तः पुरुषस्तस्य तु योगं प्रतीत्य ये सत्त्वाः ॥ व्यापद्यन्ते नियमात्तेषां स हिंसको भवति ॥
९७ या यतमानस्य भवेद्विराधना सूत्रविधिसमग्रस्य ॥ सा भवति निर्जराफला, अध्यात्मविशुद्धियुक्तस्य ॥
९८ निजकृतकर्मोपभोगेऽपि संक्लेशो ध्रुवं वधतः ॥ ततो बन्धस्तं खलु तद्विरत्या विवर्जयन्ति ॥ ३ ॥

गुरूणां जिनादीनां, 'उपदेशो' हिंसाहिंसयोः स्वरूपफलादिप्रतिपादनं 'सदुपदेशः,' सतां वा भावानामुपदेशः, सन् वा शोभन उपदेशः, स आदिर्यस्य स तथा तस्मात्, आदिशब्दात् ज्ञानश्रद्धानपरिग्रहोऽभ्युत्थानादिपरिग्रहो वा ॥ आह च ॥ :"अब्भुट्ठाणे विणए, परक्कमे साहुसेवणाए य ॥ सम्मद्दंसणलंभो, विरयाविरई य विरई य९९॥१॥" तथा क्लिष्टकर्मणां दीर्घस्थितिकज्ञानावरणादीनां वियोगः क्षयोपशमस्तस्मात् 'क्लिष्टकर्मवियोगतः' ॥ आह च, "सत्तण्हं पयडीणं, अब्भिन्तरओ उ कोडिकोडीए ॥ काऊण सागराणं, जइ लहइ चउण्हमन्नयरम्१००॥१॥" "शुभभावानुबन्धेन' प्रशस्ताध्यवसायाव्यवच्छेदेन इत्येवंकारणपरम्परया, 'हन्त' इति प्रत्यवधारणार्थः कोमलामन्त्रणार्थो वा, 'अस्याः' परिणाम्यात्माहिंसायाः, 'विरति'-र्निवृत्तिः, 'भवेत्' जायते घटत इत्यर्थ इति ॥ ४ ॥ ततः किं जातमित्याह ॥

अहिंसैषा मता मुख्या, स्वर्गमोक्षप्रसाधनी ॥ एतत्संरक्षणार्थं च, न्याय्यं सत्यादिपालनम् ॥ ५ ॥

(वृत्तिः) 'अहिंसा' अव्यापादनम्, 'एषा' अनन्तरोक्तोपपत्तिका हिंसाविरतिः, 'मता' इष्टा विदुषाम्, 'मुख्या' निरुपचरिता, इयं च प्रासङ्गिकप्रधानफलापेक्षया क्रमेण 'स्वर्गमोक्षप्रसाधनी' देवलोकनिर्वाणहेतुभूता । अथैतस्या एव स्वर्गादिसाधनत्वात् किं सत्यादिपालनेनेत्याशङ्क्याह । 'एतत्संरक्षणार्थं' अनन्तरोदिताहिंसाव्रतपरित्राणार्थम्, 'चशब्दः' पुनरर्थोऽवधारणार्थो वा, 'न्याय्यं' न्यायादनपेतं उपपन्नमित्यर्थः, 'सत्यादिपालनं' मृषावादादिनिवृत्तिनिर्वाहणम्, अहिंसासस्यसंरक्षणे वृतिकल्पत्वात्सत्यादिव्रतानामिति ॥ ५ ॥ अथ पूर्वोक्तस्यात्मनो नित्यानित्यत्वस्य देहाद्भिन्नाभिन्नत्वस्य च

९९ अभ्युत्थाने विनये पराक्रमे साधुसेवनायां च ॥ सम्यग्दर्शनलाभो विरताविरतेश्च विरतेश्च ॥
१०० सप्तानां प्रकृतीनामभ्यन्तरतस्तु कोटिकोट्याः ॥ कृत्वा सागराणां यदि लभते चतुर्णामन्यतरत् ॥

साधने प्रमाणोपदर्शनायाह ॥

स्मरणप्रत्यभिज्ञान-देहसंस्पर्शवेदनात् ॥ अस्य नित्यादिसिद्धिश्च, तथा लोकप्रसिद्धितः ॥ ६ ॥ श्लो० ६

(वृत्तिः) 'स्मरणं' पूर्वोपलब्धार्थानुस्मृतिः, 'प्रत्यभिज्ञानं' सोऽयमित्येवंरूपः प्रत्यवमर्शः, तथा 'देहस्य' शरीरस्य, 'संस्पर्शो' वस्त्वन्तरेण स्पर्शनं तस्य, वेदनं अनुभवनम्, देहसंस्पर्शेन वा वेदनं स्पर्शनीयवस्तुपरिज्ञानं देहसंस्पर्शवेदनमिति, पदत्रयस्यास्य समाहारद्वन्द्वः तस्मात्, 'अस्य' आत्मनः,' 'नित्यादिसिद्धिः' नित्यानित्यत्वदेहाद्भिन्नाभिन्नत्वप्रतिष्ठा, 'चशब्दः' पुनःशब्दार्थः, नित्यानित्यत्वादिविशेषणे आत्मनि अहिंसादिसिद्धिः, नित्यानित्यत्वादिसिद्धिः पुनः स्मरणादेरिति भावः ॥ प्रयोगश्चात्र, नित्यानित्य आत्मा, स्वयंनिहितद्रव्यादिसंस्मरणान्यथानुपपत्तेः ॥ तथाहि न तावदेकान्तनित्ये स्मरणसम्भवः, तस्यैकरूपतयानुभवस्यैव स्पष्टरूपेणानुवर्तनादितरथा नित्यताहानेः, नापि अनित्यत्वे स्मरणसम्भवोऽनुभवकालानन्तरक्षण एव कर्तुर्विनष्टत्वात्कस्य स्मरणमस्तु, न हि अन्येनानुभूतमन्यः स्मरति ॥ अथानुभवक्षणसंस्कारात्तथाविधः स्मरणक्षणः समुत्पद्यते, नैवम्, यतोऽनुगमलेशेनापि विवर्जितानामत्यन्तविलक्षणानामतिक्रमे जायमानस्य स्मरणक्षणस्य पूर्वकालीनानुभवक्षणसंस्कारो यदि परं श्रद्धानगम्यो न युक्तिप्रत्याय्यः, प्राक्तनानुभवक्षणस्य चिरतरनष्टत्वादपान्तरालक्षणेषु च संस्कारलेशस्याप्यनुपलब्धेः, सहसैवानन्तरक्षणविलक्षणस्मरणक्षणोत्पादोपलब्धेरिति ॥ परिणामपक्षे तु प्राक्तनानुभवक्षणेनाहितसंस्कारानुगमवत्तत्क्षणप्रवाहरूपान्नानाविधधर्मसमुदयस्वभावात्मनः सकाशात्स्मरणक्षणोत्पादो युक्तियुक्त इति ॥ न च वाच्यमपान्तरालक्षणेष्वनुभवसंस्कारो नोपलभ्यत इति कथं तत्सत्तेति, नवीनत्वेन स्मरणस्यानुपपत्तिप्रसङ्गात् इति ॥ तथा नित्यानित्य आत्मा, प्रत्यभिज्ञानान्यथानुपपत्तेः, तथाहि, एकान्तनित्यत्वेऽ

नुभवस्य च साक्षादनुवृत्तेर्न प्रत्यभिज्ञानसम्भवः, अनित्यत्वे तु अनित्यत्वादेव पूर्वद्रष्टुः पूर्वदृष्टवस्तुनश्च नष्टत्वादपूर्वयोश्चोत्पन्नत्वान्न प्रत्यभिज्ञानसम्भवः, न चादृष्टवतोऽदृष्टे प्रत्यभिज्ञानमस्ति तथा अप्रतीतेरिति, अथ ब्रूषे लूनपुनर्जातकेशादिष्वपि प्रत्यभिज्ञानमस्तीति ग्राह्यं प्रति तस्य व्यभिचारित्वेनाप्रमाणतया सर्वत्राप्रामाण्यम्, नैवम्, प्रत्यक्षस्यापि क्वचिद्व्यभिचारात् सर्वत्राप्रामाण्यप्रसङ्गादिति ॥ तथा देहाद्भिन्नाभिन्न आत्मा, स्पर्शवेदनान्यथानुपपत्तेः, तथा हि, यद्यसौ देहाद्भिन्नो भवेत् तदा देहेन स्पृष्टस्य वस्तुनो न संवेदनं स्यात,देवदत्तस्पृष्टवस्तुन इव यज्ञदत्तस्य,नाप्यभिन्नो देहमात्रत्वेन तस्य परलोकाभावप्रसङ्गात् , अवयवान्तरहानौ चैतन्यहानिप्रसङ्गाच्चेति ॥ ' तथेति ' समुच्चये, ' लोकप्रसिद्धितो ' जनप्रतीतेर्नित्यानित्यमात्मादि वस्त्विति गम्यते, यतस्तदेव वस्त्वेवं परिणतमिति वदन् वस्तुत्वाविच्छित्तिमवस्थान्तराप्तिं च प्रतिपद्यमानो जनो लक्ष्यते, न च लोकप्रतीतिविरुद्धमर्थमुपकल्पयत्प्रमाणं प्रमाणतामासादयतीति ॥६॥ आत्मनो विभुत्वे पूर्व दोष उक्तोऽथासर्वगतत्वेऽस्य गुणमाह ॥

देहमात्रे च सत्यस्मिन्, स्यात्सङ्कोचादिधर्मिणि ॥ धर्मादेरूर्ध्वगत्यादि, यथार्थं सर्वमेव तत् ॥७॥

(वृत्तिः) देह एव शरीरमेव मात्रा परिमाणं यस्य स देहमात्रस्तस्मिन् 'देहमात्रे' देहमात्रता चास्य देह एव तद्गुणोपलब्धेः ॥ 'चशब्दः' पुनरर्थः नित्यानित्यादिधर्म्मके आत्मनि हिंसादिरुपपद्यते 'देहमात्रे पुनः,' 'सति' भवति,'अस्मिन्'आत्मनि, 'स्यात्' भवेत्, 'सर्वं यथार्थमिति' सम्बन्धः,किम्भूतेः तत्र,'सङ्कोचादिः'सङ्कोट(च)नादिरादिशब्दात् प्रसरणं धर्मः स्वभावो यस्य स तथा तस्मिन्, सङ्कोचादिधर्मत्वं 'चास्य' सूक्ष्मेतरशरीरव्याप्तेः, किं तत्स्यादित्याह, 'धर्मादेरूर्ध्वगत्यादि,' "धर्मेण गमनमूर्ध्वं, गमनमधस्ताद्भवत्यधर्मेण ॥ ज्ञानेन चापवर्गः (गों विपर्ययादिष्यते सर्गः) ॥ १ ॥ इत्यादिकं वचनमिति

गम्यते, 'यथार्थं' निरुपचरितम्, 'सर्वमेव,' निरवशेषमेव, 'तुशब्दः' पूरण इति ॥ ७ ॥ उपसंहरन्नाह ॥

विचार्यमेतत्सद्बुद्ध्या, मध्यस्थेनान्तरात्मना ॥ प्रतिपत्तव्यमेवेति, न खल्वन्यः सतां नयः ॥ ८ ॥

(वृत्तिः) 'विचार्यं' विचारणीयम्, 'एतत्' यत् अनन्तरमहिंसादि विचारितं सर्वमेव, 'सद्बुद्ध्या' शोभनप्रज्ञया, 'मध्यस्थेन' अपक्षपतितेन, 'अन्तरात्मना' जीवेन मनसा वा, न केवलं विचार्यं तथा 'प्रतिपत्तव्यमेव' न तु न स्वीकर्तव्यम्, 'इति शब्दो' विवक्षितार्थपरिसमाप्तौ, अथ कस्मात्प्रतिपत्तव्यमेवेत्याह, 'न खलु' नैव,' 'अन्य' उक्तनयविलक्षणः, 'सतां' सत्पुरुषाणां, 'नयो' न्याय इति ॥ ८ ॥ षोडशाष्टकविवरणं समाप्तम् ॥ १६ ॥

## ॥ अथ सप्तदश मांसभक्षणदूषणाष्टकम् ॥

धर्मवादमुपदर्शयता सूरिणा यथा हिंसादीनि तत्तत्तन्त्रव्यपेक्षया युज्यन्ते न युज्यन्ते च तथा विचारितम्, अथ मांसभक्षणादिकं हिंसादिनिवृत्तैरपि कुतीर्थिकैरदोषतयाभ्युपगतं तत्तत्तन्त्रव्यपेक्षया धर्मवादोपदर्शनार्थमेव विचारयितुमुपक्रमते, तत्र मांसभक्षणमधिकृत्य तावदाह ॥

भक्षणीयं सता मांसं, प्राण्यङ्गत्वेन हेतुना ॥ ओदनादिवदित्येवं, कश्चिदाहातितार्किकः ॥ १ ॥

(वृत्तिः) 'भक्षणीयं' भोक्तव्यम्, 'सता' विदुषा, 'मांसं' पिशितम्, इति प्रतिज्ञा, केन हेतुनेत्याह, 'प्राण्यङ्गत्वेन हेतुना' जीवावयवत्वाद्धेतोः, 'ओदनादिवदिति' भक्तप्रभृतिकं यथा, इति अन्वयदृष्टान्तः, 'इतिशब्दः' प्रयोगार्थसमाप्तौ ॥ प्रयोग-

श्चैवम्, यद्यत्प्राण्यङ्गं तत्तद्भक्ष्यं दृष्टम्, ओदनवत्, प्राण्यङ्गं च मांसमिति, मांसस्य च प्राण्यङ्गतया प्रत्यक्षसिद्धत्वान्नासिद्धो हेतुः, ओदनस्य चैकेन्द्रियप्राण्यङ्गत्वेन प्रतीतत्वाश्च हेतुविकलो दृष्टान्तः ॥ 'एवं' इत्यनन्तरोक्तप्रकारेण, 'कश्चित्' कोऽपि सौगत इत्यर्थः, अतिशयवांस्तार्किकः प्रामाणिकोऽ'तितार्किक' इति उपहासवचनम्, प्रायः शुष्कतर्कप्रधानत्वात्तस्य, अधिकृतप्रमाणस्य वा प्रमाणाभासत्वादिति ॥ १ ॥ शुष्कतार्किकतां चास्य पूर्वपक्षदूषणत आह ॥

भक्ष्याभक्ष्यव्यवस्थेह, शास्त्रलोकनिबन्धना ॥ सर्वैव भावतो यस्मा—त्तस्मादेतदसाम्प्रतम् ॥ २ ॥

(वृत्तिः) ननु भक्षणीयं मांसं प्राण्यङ्गत्वादित्येतत् स्वतन्त्रसाधनं प्रसङ्गसाधनं वा ॥ स्वतन्त्रसाधनपक्षे ओदनादिव-दित्ययं 'साधनविकलो दृष्टान्तः,' वनस्पत्याद्येकेन्द्रियाणां बौद्धस्य प्राणित्वेनासिद्धत्वात्, ततश्च दृष्टान्ते प्राण्यङ्गत्व-लक्षणसाधनस्य भक्ष्यत्वलक्षणसाध्येन व्याप्तत्वासिद्धेरसिद्धान्वयाभिधानोऽनैकान्तिको हेतुः ॥ प्रसङ्गसाधनपक्षे त्विदमुच्यते, 'भक्ष्यं' भक्षणीयमोदनादि,'अभक्ष्यं' मधुमांसपलाण्ड्वादि,तयो 'र्व्यवस्था' मर्यादा, 'भक्ष्याभक्ष्यव्यवस्था,' उपलक्षणत्वादस्य पेयापेयगम्यागम्यादिपरिग्रहः, 'इह' 'अस्मिँल्लोके,' 'शास्त्रं' आप्तवचनम्, 'लोको' लोकव्यवहारः, तौ 'निबन्धनं' हेतुर्यस्याः सा तथा, न तु प्राण्यङ्गेतरमात्रनिबन्धना, 'सर्वैव' निरवशेषैव, न तु काचिदेव, 'भावतः' पार-मार्थ्येन, 'यस्मात्' कारणात्, 'तस्मात्' 'एतत्' अनन्तरोक्तं भक्षणीयं सता मांसमित्यादिसाधनम् 'असाम्प्रतं' अयुक्त-मिति ॥ २ ॥ असाम्प्रतत्वमेव हेतोरनैकान्तिकतोपदर्शनतो भावयन्नाह ॥

तत्र प्राण्यङ्गमप्येकं, भक्ष्यमन्यत्तु नो तथा ॥ सिद्धं गवादिसत्क्षीर—रुधिरादौ तथेक्षणात् ॥ ३ ॥

(वृत्तिः) 'तत्रेति'तयोः शास्त्रलोकयोः, वाक्योपक्षेपमात्रार्थो वा 'तत्रशब्दः,' 'प्राण्यङ्गमपि' जीवावयवोऽपि, आस्तामप्राण्य-

ङ्गमप्येकं किञ्चित्, 'भक्ष्यं' भोज्यम्, 'अन्यत्तु' परं पुनः, 'नो तथा' तेन प्रकारेण अभक्ष्यमित्यर्थः, 'सिद्धं' प्रतिष्ठितम्, कुतः सिद्धमित्याह, 'गवादीनाम्' आदिशब्दात् मातृप्रभृतीनाम्, 'सत्' शोभनम्' अभिनवप्रसवधेनुसत्कादन्यत्, क्षीरं च पयो 'रुधिरं' च लोहितमादिर्यस्य तत्तथा, तत्र 'गवादिसत्क्षीररुधिरादौ विषये,' आदिशब्दात् गवादिमूत्रमांसादौ च, 'तथा' तेन भक्ष्याभक्ष्यादिप्रकारेण, 'ईक्षणात्' अवलोकनात, तथाहि, "गवां क्षीरं मूत्रं वा पेयतया शास्त्रे लोके च न नषिध्यते रुधिरमांसे तु नानुमन्येते" ततश्च प्राण्यङ्गं सद्भक्ष्यं चाभक्ष्यं चोपलब्धमतः सपक्षविपक्षवृत्तित्वादनैकान्तिको हेतुरिति ॥३॥ किञ्च प्रसङ्गसाधनं हि पराभ्युपगमानुसारेण भवति,न चास्माकं प्राण्यङ्गमिति कृत्वा मांसमभक्ष्यमित्यभ्युपगमः, किन्तु तद्गुत्थजीवापेक्षयेति दर्शयितुमाह ॥

प्राण्यङ्गत्वेन न च नो-भक्षणीयन्त्विमिदं मतम् ॥ किन्त्वन्यजीवभावेन, तथा शास्त्रप्रसिद्धितः ॥४॥

(वृत्तिः) प्राण्यङ्गत्वेन जीवावयवतया हेतुना, 'न च' नैव, नोऽस्माकम्, 'अभक्षणीम्' अभोज्यम्, 'इदं' मांसम्, 'मतं सम्मतम्, किन्तु किं पुनः, 'अन्यजीवभावेन' मांसस्वामिव्यतिरिक्तप्राणिसमुत्पादेन हेतुना, अभक्षणीयमिदं मतत्यावर्तते ॥ अन्यजीवभाव एव कुतः सिद्ध इत्यत्राह,'तथा'तेन प्रकारेण जीवसंसक्तिलक्षणेन,'शास्त्रप्रसिद्धितः'आप्तागमप्रतिष्ठितेः, प्रसिद्धं ह्यागमे मांसस्य जीवसंसक्तिनिमित्तत्वम्, यदाह ॥ " आमासु य पक्कासु य, विपच्चमाणासु मांसपेसीसु ॥ आयन्तियमुववाओ,भणिओ य निगोयजीवाणं॥ १॥"एतेन च श्लोकेन परस्य परमतानभिज्ञतापादनतोऽधिकृतप्रमाणस्य प्रसङ्गसाधनता निराकृतेति ॥ ४ ॥ अथाधिकृतहेतोरेवानिष्ठार्थसाधकतां दर्शयन्नाह ॥

१ आमासु च पक्वासु च विपच्यमानासु मांसपेशीषु । आत्यन्तिकमुपपातो भणितो निगोदजीवानाम् ॥

भिक्षुमांसनिषेधोऽपि, न चैवं युज्यते क्वचित् ॥ अस्थ्याद्यपि च भक्ष्यं स्या-त्प्राण्यङ्गत्वाविशेषतः ॥५॥

(वृत्तिः) भिक्षोर्बौद्धविशेषस्य, मांसं पिशितम्, तस्य निषेधो वर्जनं 'भिक्षुमांसनिषेधः,' स किल भवन्मतेन भिक्षोरतिपूज्यत्वादवश्यं युक्तो भवति, सोऽपि, आस्तां गवादिमांसनिषेधः, 'न च' नैव, एवं प्राण्यङ्गत्वेन मांसभक्षणाभ्युपगमे सति, 'युज्यते' घटते, 'क्वचित्' कुत्रचित्, देशान्तरे कालान्तरे पुरुषान्तरे वा, अस्यैवाभ्युच्चयमाह, 'अस्थि' कीकसम्, आदिर्यस्य तत्तथा अस्थ्यादि, तदपि च, न केवलं भिक्षुमांसादि, यत्किल 'भक्षयितुमशक्यमस्थिशृङ्गखुरादि' तदपि च 'भक्ष्यं' भक्षणीयम्, 'स्यात्' भवेत्, कुत इत्याह, 'प्राण्यङ्गत्वस्य' जीवावयवत्वस्य हेतोः, 'अविशेषः' तुल्यत्वं मांसे अस्थ्यादौ चेति प्राण्यङ्गत्वाविशेषस्तस्मात्, अतोऽभक्ष्यस्य भक्ष्यत्वापादनेन विरुद्धो हेतुरिति ॥ ५ ॥

अत्रैव दूषणान्तरमाह ॥

एतावन्मात्रसाम्येन, प्रवृत्तिर्यदि चेष्यते ॥ जायायां स्वजनन्यां च, स्त्रीत्वात्तुल्यैव साऽस्तु ते ॥ ६ ॥

(वृत्तिः) एतदेव एतत्परिमाणमेव एतावन्मात्रम्, तेन साम्यं सादृश्यं 'एतावन्मात्रसाम्यम्' तेन प्राण्यङ्गत्वमात्रसादृश्येनेत्यर्थः, 'प्रवृत्तिः' मांसभक्षणादौ प्रवर्तनम्, 'यदि' इत्यभ्युपगमे, 'चशब्दः' पुनरर्थः, 'इष्यते' भवताऽभिमन्यते, तदा किमस्त्वित्याह, 'जायायां' भार्यायाम्, 'स्वजनन्यां च' आत्मीयमातरि च, 'स्त्रीत्वात्' अङ्गनात्वेन हेतुना, 'तुल्यैव' समानैव, अभिगमरूपा पूजारूपा वा, 'सा' प्रवृत्तिः, 'अस्तु' भवतु, 'ते' तव, स्त्रीत्वाविशेषाद् द्वयोरपि, यथा प्राण्यङ्गत्वाविशेषान्मांसौदनयोरिति ॥ ६ ॥ प्रकरणार्थनिगमनायाऽऽह ॥

तस्माच्छास्त्रं च लोकं च, समाश्रित्य वदेद् बुधः ॥ सर्वत्रैवं बुधत्वं स्या-दन्यथोन्मत्ततुल्यता ॥ ७ ॥

ाष्टक
ाे० वृ०
६९ ॥

(वृत्तिः) यस्माद्भवदुक्तसाधनमनन्तरोक्तन्यायेन बहुदोषदुष्टं 'तस्मात्' कारणात्, 'शास्त्रं च' आप्तवचनम्, 'लोकं च' विशिष्टजनम्, 'समाश्रित्य' अङ्गीकृत्य, 'वदेत्' ब्रूयात्, कोऽसौ, 'बुधः' पण्डितः, क्व विषये इत्याह, 'सर्वत्र' न मांसभक्षणविषय एव, अपि तु 'सर्वत्र' सर्वस्मिन्नन्यस्मिन्नपि विषये, अन्यथा हि ब्रुवाणस्य लोकरूढिनिराकृतादयः पक्षदोषाः प्रसंजेयुः, एवं ब्रुवाणस्य को गुण इत्याह, 'एवम्' अनेन प्रकारेण लोकशास्त्रसमाश्रयणपूर्वकवदनलक्षणेन, 'बुधत्वं' पण्डितत्वम्, 'स्यात्' भवेत्, विपर्यये किं स्यादित्याह, 'अन्यथा' अन्येन प्रकारेण लोकशास्त्रानपेक्षतावदनलक्षणेन, 'उन्मत्ततुल्यता' ग्रहगृहीतसमानता, स्यादिति गम्यते, आह च॥ "सतां पथा प्रवृत्तस्य, तेजोवृद्धी रवेरिव ॥ यदृच्छया प्रवृत्तस्य, रूपनाशोऽस्ति वायुवत् ॥१॥" इति ॥ ७ ॥ बौद्धाभ्युपगताप्तप्रवचननिषिद्धत्वं मांसभक्षणस्य दर्शयन्नुपसंहारार्थमाह ॥ श्लो० ८

शास्त्रे चाप्तेन वोऽप्येत-न्निषिद्धं यत्नतो ननु ॥ लङ्कावतारसूत्रादौ, ततोऽनेन न किञ्चन ॥ ८ ॥

(वृत्तिः) न केवलं लोके अस्मच्छास्त्रे चेदं निषिद्धम्, 'शास्त्रे' च आगमे च, 'आप्तेन' क्षीणरागादिदोषेण सुगतेन, वोऽपि युष्माकमपि, न केवलमस्माकमेव, 'एतद्' मांसभक्षणम्, 'निषिद्धं' निवारितम्, 'यत्नतः' आदरेण, 'ननु' इत्यक्षमायाम्, क्व शास्त्रे निषिद्धमित्याह, 'लङ्कावतारसूत्रादौ' निशाचरविनयनाय लङ्कायामवतारः सूत्र्यते तथागतस्य यत्र तल्लङ्कावतारसूत्रं तदादौ तत्र किलोक्तम्॥ "न प्राण्यङ्गसमुत्थं, मोहादपि शङ्खचूर्णमभीयात् ॥" आदिशब्दात् शीलपटलादिपरिग्रहः, 'ततः' इति यस्मादेवं तस्मात्, 'अनेन' मांसभक्षणसमर्थनेन, 'न किञ्चन' नास्ति भवतोऽपि कश्चन, प्रयोजनमिति शेष इति ॥ ८ ॥ सप्तदशाष्टकविवरणं समासम् ॥ १७ ॥

## ॥ अथ अष्टादशं मांसभक्षणदूषणाष्टकम् ॥

तदेवं मांसं न भक्षणीयं लोकशास्त्रविरोधादिति धर्मवादतो व्यवस्थापिते यः कश्चिदसहमान आह "न मांसभक्षणे दोष" इति तन्मतप्रस्तावनायाह ॥

**अन्योऽविमृश्य शब्दार्थं, न्याय्यं स्वयमुदीरितम् ॥ पूर्वापरविरुद्धार्थ-मेवमाहात्र वस्तुनि॥ १ ॥**

(वृत्तिः)'अन्यः' पूर्वं पूर्वपक्षीकृतबौद्धादपरो द्विज इत्यर्थः,'अविमृश्य' अपर्यालोच्य,'शब्दार्थं' मांसमित्यस्य ध्वनेरभिधेयम्, 'आह' इति 'सम्बन्धः,' किम्भूतं शब्दार्थमित्याह, 'न्याय्यं' न्यायादनपेतम्, तथा, 'स्वयं' आत्मना, 'उदीरितं' प्रतिपादितम्,"मां स भक्षयिता"इत्यादिना श्लोकेन,कथमाहेत्याह,'पूर्वस्य'पूर्वोक्तस्य "मां स भक्षयिता"इत्यादेर्मांसभक्षणनिषेधार्थस्य, 'अपरेण' अपरोक्तेन " न मांसभक्षणे दोषः" इत्यनेन "प्रोक्षितं भक्षयेन्मांसं"इत्यादिना वा, अथवा "न मांसभक्षणे दोषः" इत्यस्य पूर्वस्य "निवृत्तिस्तु महाफला" इत्यनेनापरेण सह, 'विरुद्धो' विसंवादी, 'अर्थो' अभिधेयो यत्र तत् 'पूर्वापरविरुद्धार्थम्,' क्रियाविशेषणं चेदम्, 'एवम्' इति वक्ष्यमाणप्रकारम्, 'आह'ब्रवीति, 'अत्र' मांसभक्षणे, 'वस्तुनि' पदार्थ इति ॥ १ ॥ यदाह तदेव दर्शयति ॥

**न मांसभक्षणे दोषो, न मद्ये न च मैथुने ॥ प्रवृत्तिरेषा भूतानां, निवृत्तिस्तु महाफला ॥ २ ॥**

(वृत्तिः)'न' नैव,'मांसभक्षणे'पिशिताशने,'दोष'इति दूषणम् कर्मबन्धलक्षणः,अस्यैव चाद्यपादार्थस्य पूर्वश्लोकेन प्रस्तावना कृता, तत्प्रसङ्गेन च शेषपादत्रयं श्लोकस्याधीतमिति, तस्य व्याख्या,तथा, 'न' नैव,'मद्ये' मधुनि,पीयमान इति गम्यते, 'न' नैव, 'चशब्दः' समुच्चयार्थः, 'मैथुने' अब्रह्मचर्ये, क्रियमाण इति गम्यते, कुत एतदेवमित्याह, यतः'प्रवृत्तिः'

स्वभावः, 'एषा' मांसभक्षणादिकाऽनन्तरोक्ता, 'भूतानां' प्राणिनाम्, 'निवृत्तिः' विरमणम्, पुनर्मांसभक्षणादिभ्य इति गम्यते, 'महत्' बृहत, 'फलं'साध्यमभ्युदयादिकं यस्याः सा महाफलेति ॥२॥ योऽसौ स्वयमुदीरितो मांसशब्दार्थस्तमाह ॥

मां स भक्षयिताऽमुत्र, यस्य मांसमिहाद्म्यहम् ॥ एतन्मांसस्य मांसत्वं, प्रवदन्ति मनीषिणः ॥३॥

(वृत्तिः) 'माम्' इति भक्षक आत्मानं निर्दिशति, 'स' इति भक्ष्यमाणो जीवः, 'भक्षयिता' इति श्वस्तनीप्रथमपुरुषैकवचननिर्देशः, ततो भक्षयिष्यत इत्यर्थः, न त्वयं शीलार्थिकः, 'अमुत्र' जन्मान्तरे, किंविधो य इत्याह, 'यस्य' पश्वादेः, 'मांसं' पिशितम्, 'इह' अस्मिन् जन्मनि, 'अद्मि' भक्षयामि, 'अहम्' इत्यात्मानं भक्षको निर्दिशति, 'एतद्' अनन्तरोदितम्, भक्षणेन भक्षणलक्षणम्, 'मांसस्य' पिशितस्य, 'मांसत्वं' मांसशब्दव्युत्पत्तिनिमित्तम्, निरुक्तमित्यर्थः, 'प्रवदन्ति' प्रतिपादयन्ति, 'मनीषिणः' निरुक्तविधिकुशला इति ॥ ३ ॥ एतेन च मांसभक्षणापायप्राप्तिप्रतिपादनेन मांसभक्षणे दोषोऽस्तीति वक्तव्यमेवोक्तमतः कथ (कि) मुक्तं "न मांसभक्षणे दोष" इत्येतदेवाह ॥

इत्थंजन्मैव दोषोऽत्र, न शास्त्राद्बाह्यभक्षणम् ॥ प्रतीत्यैष निषेधश्च, न्याय्यो वाक्यान्तराद् गतेः ॥ ४ ॥

(वृत्तिः) 'इत्थम्' अनेन प्रकारेण, भक्षकस्य भक्षणीयत्वप्राप्तिलक्षणेन, यद् 'जन्म' उत्पत्तिस्तद् , 'एव,' किमपरदोषगवेषणेन, 'दोषो' दूषणम्, अनर्थावाप्तिरित्यर्थः, 'अत्र' मांसभक्षणे, ततः कथ(कि) मुक्तम् "न मांसभक्षणे दोषः" इति हृदयम् ॥ अत्र किल परः प्राह, 'न' नैव, यद्भक्षकस्य भक्षणीयत्वप्राप्तेर्मांसभक्षणे दोष इति, कुत इत्याह, यतः, 'शास्त्राद्' आगमात्, 'बाह्यभक्षणं' बहिर्भूतमांसादनम्, 'प्रतीत्य' आश्रित्य, 'एषो'ऽनन्तरोक्तः इत्थंजन्मलक्षणो दोषः, न पुनः शास्त्रीयमांसभक्षणे, तथा, 'निषेधश्च' मांसभक्षणप्रतिषेधोऽपि, " मां स भक्षयिता" इत्यादिनिरुक्तबलप्रापितः,

शास्त्राद्वाह्यभक्षणमेव प्रतीत्य, 'न्याय्य' उपपन्नः, कथं 'वाक्यान्तरात्' "मां स भक्षयिता" इत्यादिवाक्यापेक्षया यदन्यद् वाक्यं तद्वाक्यान्तरं तस्मात्, 'गतेः' परिच्छित्तेः, मांसभक्षणस्येति गम्यम् ॥ अथवा, इत्थं 'जन्मैव दोषोऽत्र' इत्येकं तावदूषणम्, तथा अपरम्, 'न' नैव, 'शास्त्राद्वाह्यभक्षणं प्रतीत्य,' 'एषो'ऽनन्तरोक्तः "न मांसभक्षणे दोषः" इत्येवंलक्षणः, 'निषेधो' मांसभक्षणे दोषप्रतिषेधः,'चशब्दो' दूषणान्तरसमुच्चयार्थः, 'न्याय्यः' सङ्गतः, वक्ष्यमाणप्रोक्षितादिविशेषणमांसादन एव दोषनिषेधो न्याय्यः, शास्त्रोक्तत्वादेव, न पुनः सामान्येनेति भावः ॥ कुत एतदिति चेदित्यत आह, 'वाक्यान्तराद्गतेः' इति, "न मांसभक्षणे दोषः" इत्येवंविधात् सामान्यत एव मांसादनदोषाभावप्रतिपादनपराद् वाक्याद् यदन्यत् "प्रोक्षितं भक्षयेत"इत्यादि वक्ष्यमाणं वा वाक्यं 'तद् वाक्यान्तरम्,' तस्मात्,'गतेः'परिच्छित्तेः,शास्त्रोक्तत्वेन मांसादनविशेषस्य निर्दोषतयावगमादित्यर्थ इति ॥ ४ ॥ 'एतदेव' वाक्यान्तरमाह ॥

प्रोक्षितं भक्षयेन्मांसं, ब्राह्मणानां च काम्यया ॥ यथाविधि नियुक्तस्तु, प्राणानामेव वाऽत्यये ॥ ५ ॥

(वृत्तिः) 'प्रोक्षितं' वैदिकमन्त्राभ्युक्षितम्, 'भक्षयेत्,' अश्नीयात्, 'मांसं' पिशितम्, 'ब्राह्मणानां' द्विजानाम्,'चशब्दो' विशेषणसमुच्चये, 'काम्यया' इच्छया, द्विजभुक्तावशेषं प्रति तदनुज्ञया, 'विधि'र्न्यायः,या यत्र यागश्राद्धप्राघूर्णकादौ प्रक्रिया तस्या नातिक्रमेण'यथाविधि,'तत्र यागविधिः पशुमेधाश्वमेधादिविधायकशास्त्रविहितः, श्राद्धविधिस्तु मांस विशेषापेक्षोऽयम्॥ "औरभ्रेणेह चतुरः, शाकुनेन तु पञ्च वै ॥ षण्मासांश्छागमांसेन,पार्षतीयेन सप्त वै ॥१॥ अष्टावेणस्य मांसेन, शौकरेण नवैव तु ॥ दश मासांस्तु तृप्यन्ति, वराहमहिषामिषैः ॥२॥ कूर्मशशकमांसेन, मासानेकादशैव तु ॥ संवत्सरं तु तृप्यन्ति, पयसा पायसेन तु ॥ ३ ॥ " प्राघूर्णकविधिस्तु याज्ञवल्क्योक्तोऽयम्, "महोक्षं वा महाजं वा,

श्रोत्रियाय प्रकल्पयेत्, " इति, तथा, 'नियुक्तस्तु' गुरुभिर्व्यापारित एव, नियुक्तशब्दस्य वा यथाविधीति विशेषणम्, तुशब्द एवकारार्थः, तथा, 'प्राणानामेव' इन्द्रियादीनामेव,' न तु द्रव्यादीनाम्, 'वा शब्दः' पक्षान्तरद्योतकः, 'अत्यये' विनाशे, उपस्थिते इति शेषः, मांसं भक्षयेदित्यनुवर्तते, आत्मा हि रक्षणीयः, यदाह, "सर्वत एवात्मानं गोपयेत्," इति ॥ ५ ॥ परोक्तमेवार्थमनुवादद्वारेणाशंक्य दूषयन्नाह, द्वितीयव्याख्यापेक्षया पुनरुत्तरश्लोकस्यैवम्पातना, भवदापादित एव शास्त्रीयमांसभक्षणे दोषाभावोऽस्माभिरभिधीयते न सामान्येनेति परमतमाशंक्य दूषयन्नाह ॥

अत्रैवासावदोषश्चे-न्निवृत्तिर्नास्य सज्यते ॥ अन्यदाऽभक्षणादत्रा-भक्षणे दोषकीर्तनात् ॥ ६॥ श्लो० ६-७

(वृत्तिः) 'अत्रैव' अनन्तराभिहित एव प्रोक्षितादिविशेषणमांसभक्षणे, अन्यत्र तु दोष एव, 'असौ' यः "न मांसभक्षणे दोषः" इत्यनेन वचसाऽभ्युपगतः, 'अदोषो' दोषाभावः, 'चेद्' यद्येवं मन्यसे, तदेतिशेषः, किं दूषणमित्याह, 'निवृत्तिः' विरतिः, 'न' नैव, 'अस्य' मांसभक्षणस्य, 'सज्यते' प्राप्नोति, कुत इत्याह, 'अन्यदा' अन्यस्मिन् प्रोक्षितादिमांसविशेषणाभावकाले, 'अभक्षणात्' अनभ्यवहरणात्, उक्तविधिव्यतिरेकेण हि मांसं न भक्ष्यते अतो मांसभक्षणस्याप्राप्तेर्निवृत्तिर्नास्य प्रसज्यत इत्युच्यते, "प्राप्तिपूर्वको हि निषेधः सफलो भवतीति," अथ प्रोक्षितादिविशेषणसद्भावे निवृत्तिर्भविष्यतीति "निवृत्तिस्तु महाफला" इति वचः सफलीभविष्यतीत्यत्राह, 'अत्र' प्रोक्षितादिविशेषणसद्भावे, 'अभक्षणे' अनशने, मांसस्य, 'दोषकीर्तनात्' दूषणाभिधानात्, निवृत्तिर्नास्य प्रसज्यते इति प्रकृतमिति ॥६॥ दोषकीर्तनमेव दर्शयन्नाह ॥

यथाविधिनियुक्तस्तु, यो मांसं नात्ति वै द्विजः ॥ स प्रेत्य पशुतां याति, सम्भवानेकविंशतिम् ॥७॥

(वृत्तिः) यो यो विधिः शास्त्रीयन्यायो यथाविधि, तेन नियुक्तो युक्तो व्यापारितो वा गुरुभिः, 'यथाविधिनियुक्तः,' 'तुशब्दः'

पुनःशब्दार्थः,तस्य चैवं प्रयोगः,विधिना मांसमखादन्न निर्दोष एव,यथाविधिनियुक्तः पुनः,'य'अनिर्दिष्टनामा, 'मांसं'पिशितम्, 'न' नैव, 'अत्ति' भुङ्क्ते, 'वै' इति निपातो वाक्यालङ्कारार्थः, 'द्विजो' विप्रः,'स' इति द्विजः, 'प्रेत्य'परलोके'पशुतां' तिर्यग्भावम्, 'याति' प्राप्नोति, कियतो भवान् यावदित्याह, सम्भवनानि 'सम्भवा' जन्मानि, तान् 'सम्भवान्,''एकविंशतिम्',एकेनाधिका विंशतिस्तामिति ॥७॥ प्रोक्षितादिविशेषणाभावे मांसस्य भक्षणे प्रवृत्त्यभावेन निवृत्तेरफलत्वात् प्रोक्षितादिविशेषणस्य च तस्याभक्षणे दोषकीर्तनात् निवृत्तिर्नास्य सज्यत इति यदुक्तम्,तत्र परकीयं परिहारमाशंक्य परिहरन्नाह॥

पारिव्राज्यं निवृत्तिश्चे-द्यस्तदप्रतिपत्तितः ॥ फलाभावः स एवास्य, दोषो निर्दोषतैव न ॥ ८ ॥

(वृत्तिः)परिव्राजो भावः 'पारिव्राज्यम्,' मस्करित्वं गृहस्थभावत्याग इत्यर्थः, 'तदेव' निवृत्तिनिबन्धनत्वात् 'निवृत्तिः' मांसभक्षणोपरतिः, 'चेत्,' यद्येवं मन्यसे, अयमभिप्रायो गृहस्थतायां प्रोक्षितादिविशेषणं मांसं भक्षणीयमेव, तस्माच्च पारिव्राज्यप्रतिपत्तिद्वारेण निवर्तेत इत्येवं प्राप्तिपूर्विका निवृत्तिर्मांसभक्षणस्य स्यात्, सा च महाफलेति, अतो निवृत्तिर्नास्य सज्यते इत्याचार्यवचनं परेण दूषितम्, अतोत्र दूषणमाह, 'यः' कोपि, 'तदप्रतिपत्तितः' पारिव्रज्याप्रतिपत्तितः पारिव्राज्याप्रतिपत्तिमाश्रित्य,'फलाभावः' अभ्युदयादिप्रयोजनाप्राप्तिः, 'स एव' किमपरदोषगवेषणेन, 'अस्य' मांसभक्षणस्य,'दोषो' दूषणम्,ततः'किमित्याह 'निर्दोषता'निर्दूषणता, 'एव'शब्दस्यान्यत्र सम्बन्धात्, 'नैव' नास्त्येव, अतः कथमुच्यते"न मांसभक्षणे दोषः"इति,तथा "निवृत्तिस्तु महाफला"इति । अत्र विशेषेण किञ्चिदुच्यते,ननु निवृत्तिर्निरवद्याद्वस्तुनो विधीयमाना महाफला सावद्याद्वा, यदि निरवद्यात्तदा यत्याश्रमादेरपि निवृत्तिरङ्गीकर्तव्या,तस्य निरवद्यत्वात्, न चैतदिष्टम्,अथ द्वितीयपक्षस्तदा मांसभक्षणस्य सावद्यत्वेन सदोषताप्राप्तेरिति ॥८॥ अष्टादशाष्टकविवरणं समाप्तम् ॥

## ॥ अथ एकोनविंशतितमं मद्यपानदूषणाष्टकम् ॥

न मांसभक्षणे दोष इति निराकृतम्, अथ न मद्ये इत्येतन्निराकरणायाह ॥

**मद्यं पुनः प्रमादाङ्गं, तथा सच्चित्तनाशनम् ॥ सन्धानदोषवत्तत्र, न दोष इति साहसम् ॥ १ ॥**

श्लो० १

(वृत्तिः)मदयतीति 'मद्यं'शीधुः,'पुनः'शब्दः पूर्ववाक्यार्थापेक्षयोत्तरवाक्यार्थस्य विशेषद्योतनार्थः,तथाहि,मांसं जीवसंसक्तिनिमित्तं मद्यं पुनः, 'प्रमादाङ्गम्,' प्रमदनं प्रमादोऽशुभो जीवपरिणामविशेषः, तस्याङ्गं कारणम्, अथवा प्रमादो मद्यादिः॥ यदाह ॥ "मज्जं विसयकसाया,निद्दा विगहा य पंचमी भणिया ॥ एए पंच पमाया, जीवं पाडंति संसारे[२] ॥१॥" तस्याङ्गमवयवः, पञ्चावयवरूपत्वात्तस्य, 'तथेति' विशेषणसमुच्चये, सच्छुभं यच्चित्तं मनः तन्नाशयति प्रध्वंसयतीति 'सच्चित्तनाशनम्,' तथा सन्धाने जलमिश्रितबहुद्रव्यसंस्थापने ये दोषा जीवसंसक्त्यादयस्ते विद्यन्ते यत्र तत् 'सन्धानदोषवत्,'यदेवंविधं मद्यं'तत्र'मद्ये,'न' नास्ति, 'दोषो'दूषणं कर्मबन्धादि,'इति'एवं, वदत इति गम्यते, 'साहसं'धाष्टर्यम्। अथवा 'तत्र' मद्ये गुडधातक्यादिसन्धानरूपे न दोषोऽस्ति पापप्राप्तिलक्षणः, क इवेत्याह,'सन्धानदोषवत्'काञ्जिकादिसन्धानदोषवत्, अयमभिप्रायः, यथारनालादौ सन्धानवति पीयमाने कर्मबन्धलक्षणो दोषो नास्त्येवं मद्येऽपि दोषो नास्तीति, एतद्वचनस्य च साहसत्वं चित्तभ्रमनिबन्धनानामतिबहूनां मद्यपानदोषाणां प्रत्यक्षत एवोपलभ्यमानत्वात् ॥ यथोक्तम् ॥ "[१]वैरूप्यं [२]व्याधिपिण्डः [३]स्वजनपरिभवः [४]कार्यकालातिपातो, [५]विद्वेषो [६]ज्ञाननाशः [७]स्मृतिमतिहरणं[८] [९]विप्रयोगश्च सद्भिः ॥ [१०]पारुष्यं [११]नीचसेवा [१२]कुलबलतुलना[१३]धर्मकामार्थहानिः, [१४-१५-१६]कष्टं भोः षोडशैते निरुपचयकरा मद्यपानस्य दोषाः ॥ १ ॥ अथवा कियन्तस्ते दर्शयिष्यन्त इत्याह ॥

१०२ मद्यं विषयकषाया, निद्रा विकथा च पञ्चमी भणिता ॥ एते पञ्च प्रमादा जीवं पातयन्ति संसारे ॥१॥

किं वेह बहुनोक्तेन, प्रत्यक्षेणैव दृश्यते ॥ दोषोऽस्य वर्तमानेऽपि, तथाभण्डनलक्षणः ॥ २ ॥

(वृत्तिः)'किम्,'इति प्रतिषेधे,ततश्च न किञ्चित्प्रयोजनमित्यर्थः स्यात्,'वाशब्दो'ऽथवार्थः,इह मद्यपानदूषणविषये,'बहुना' प्रभूतेन,'उक्तेन'भणितेन,"मद्यं प्रमादाङ्गमित्यादिना,"यतः.'प्रत्यक्षेणैव'एवशब्दस्यापिशब्दार्थत्वात् अध्यक्षप्रमाणेनापि,न केवलमनुमानादिना, 'दृश्यते' उपलभ्यते, 'दोषो' दूषणम्, 'अस्य' मद्यपानस्य, 'वर्तमानेऽपि' काले न केवलमतीतकाले द्वारकावतीदाहादि श्रूयते, ' तथा' तत्प्रकारं सदर्पासमञ्जसवचनप्रसरमुपपतत्प्रभूतप्रहारमुपरममाणनरविसरं यद्'भण्डनं' संग्रामस्तदेव'लक्षणं'रूपं यस्य स तथेति ॥२॥ न केवलं प्रत्यक्षगोचरा मद्यपानस्यदोषाः श्रुतगोचरा अपोत्येतद्दर्शयितुमाह ॥

श्रूयते च ऋषिर्मद्यात्, प्राप्तज्योतिर्महातपाः ॥ स्वर्गाङ्गनाभिराक्षिप्तो, मूर्खवन्निधनं गतः ॥ ३ ॥

(वृत्तिः)'श्रूयते च'पुराणकथास्वाकर्ण्यते च,न केवलं भण्डनमेव दृश्यते,कोऽसौ श्रूयत इत्याह,ऋषिर्मुनिः,विसन्धिश्चेह विशेषलक्षणात्, 'मद्यात्' शीधुनः सकाशात्, निधनं गत इति सम्बन्धः, किंविशिष्टोऽसावित्याह,प्राप्तमवाप्तं ज्योतिस्तेजो ज्ञानरूपमष्टविधमहर्द्धिरूपं वा येन स'प्राप्तज्योतिः,'कथमित्याह,यतो'महातपा' उग्रतपाः,पुनः किम्भूतः सन्नित्याह,'स्वर्गाङ्गनाभिर्नाकनितम्बिनीभिः, 'आक्षिप्तः' आवर्जितः सन्, 'मूर्खवद्'बालिश इव, 'निधनं'विनाशम्,' गतः'प्राप्त इति ॥३॥

एतदेव दर्शयन् श्लोकपञ्चकमाह ॥

कश्चिदृषिस्तपस्तेपे, भीत इन्द्रः सुरस्त्रियः ॥ क्षोभाय प्रेषयामास, तस्यागत्य च तास्तकम् ॥४॥

विनयेन समाराध्य, वरदाभिमुखं स्थितम् ॥ जगुर्मद्यं तथा हिंसां, सेवस्वाब्रह्म वेच्छया ॥ ५ ॥

स एवं गदितस्ताभि-र्द्वयोर्नरकहेतुताम् ॥ आलोच्य मद्यरूपं च, शुद्धकारणपूर्वकम् ॥ ६ ॥

मद्यं प्रपद्य तद्भोगा-न्नष्टधर्मस्थितिर्मदात् ॥ विदंशार्थमजं हत्वा सर्वमेव चकार सः॥ ७ ॥
ततश्च भ्रष्टसामर्थ्यः, स मृत्वा दुर्गतिं गतः ॥ इत्थं दोषाकरो मद्यं, विज्ञेयं धर्मचारिभिः ॥ ८ ॥

(वृत्तिः)एषां गमनिका, 'कश्चित्' कोप्यनिर्दिष्टनामा, 'ऋषिः'बालतपस्वी,किल महाटव्यां वसन्, 'तपः'अनशनादिकं अतिघोररूपम्, 'तेपे' तप्यतेस्म, दिव्यं वर्षसहस्रं यावत्, ततो 'भीतो' महत्तपोऽनेन कृतं मामितो नाकिनिकायनायकपदात् पातयिष्यतीति भावनया भयमुपगतः, 'इन्द्रः' शतमखः, ततः, 'सुरस्त्रियः' नाकिनितम्बिनीस्तिलोत्तमाप्रमुखाः, 'क्षोभाय' क्षोभणनिमित्तम्, 'तस्य' इह सम्बन्धात्तस्य ऋषेः, 'प्रेषयमास' स्वर्गात्तत्राटव्यां प्रेषितवान्, ताश्च तत्तपस्तेजसा तद्वनप्रवेशं कर्तुमशक्नुवत्यो वनाद्बहिस्तदभिमुखकृतविकसितकुसुमप्रकरा मस्तकन्यस्तहस्तकुड्मलसम्पुटमतिप्रणत्य तद्गतगुणगानप्रधाननृत्यप्रबन्धं विदधुः, ततोऽसौ तदाक्षिप्तान्तःकरणश्चित्रलिखित इव बभूव, ततस्तास्तत्समीपमुपजग्मुः, 'आगत्य च' समीपीभूय च, 'ताः' सुरस्त्रियः, 'तकं'ऋषिम् ॥४॥ 'विनयेन' विविधचाटुवचनाञ्जलिकरणपादपतनादिना, 'समाराध्य'प्रसन्नमानसं विधाय,'वरस्य'अभिलषितार्थस्य दानं 'वरदानं'तस्य अभिमुखः प्रह्वो 'वरदाभिमुखः' तम्, 'स्थितं' सञ्जातम्, 'जगुः' नानाविधशपथदानपुरस्सरमुक्तवत्यः, यद्गुत, 'मद्यं' शीधु, तथेति समुच्चये, हिंसां प्राणिवधम्, 'सेवस्व' भजस्व, 'अब्रह्म वा' मैथुनं वा, 'वाशब्दो' विकल्पार्थः, 'इच्छया' इष्ट्या, यदेतेषु त्रिषु तुभ्यं रोचते तदित्यर्थः ॥ ५ ॥ 'स' ऋषिः, 'एवम्' अनेन प्रकारेण, 'गदितो'ऽभिहितः, 'ताभिः' सुरस्त्रीभिः, 'द्वयोः'हिंसाऽब्रह्मणोः, 'नरकहेतुतां' निरयनिबन्धनताम्, 'आलोच्य' स्वशास्त्रानुसारेण निश्चित्य, तथा, 'मद्यरूपं' मदिरास्वभावम्, 'चशब्दः' आलोच्येतिक्रियानुकर्षणार्थः, किंविधमित्याह, 'शुद्धानि' निर्दोषाणि, 'कारणानि' निमित्तानि गुडधातकीजलप्रभृतीनि,

'पूर्व' मद्यावस्थायाः प्राक्काले 'यस्य' तत्तथा ॥६॥ 'ततः,' 'मद्यं' मदिराम्, 'प्रपद्य' तत् पास्यामीत्यङ्गीकृत्य, तस्य विचित्रचित्रमणिखण्डमण्डिततपनीयभाजनन्यस्तस्य सौरभ्यातिशयसमाकृष्टषट्पदपटलावनद्धगगनमण्डलस्य करणषट्करणचक्रलांपत्यप्रकृष्टताकारकस्य ताभिः ससम्भ्रममुपनीतस्य मद्यस्य भोग आसेवनं तद्भोगस्तस्मात्, 'नष्टा' भ्रष्टा, 'धर्मस्य' कुशलानुष्ठानलक्षणस्य, 'स्थिति' र्व्यवस्था यस्य स तथा, ततश्च, 'मदात्' चित्तविप्लुतिलक्षणात, 'विदंशार्थे' मद्यपानोपदंशार्थम्, 'अजं' छागम्, 'हत्वा' विनाश्य, सर्वमेव निरवशेषमपि यत्ताभिरभिहितमनभिहितं च पापमजपिशितपचननिमित्तमिन्धनार्थमाराध्यदेवतादारुमयप्रतिमास्फोटनादि तत, 'चकार' कृतवान्, 'स' इत्यसावृषिः ॥ ७ ॥ 'ततश्च' मद्यासेवनानन्तरं पुनः, 'भ्रष्टसामर्थ्यो' निहततपोवीर्यः, 'स' ऋषिः, 'मृत्वा' प्राणान्परित्यज्य, दुर्गतिं नरकरूपाम्, 'गतः' प्राप्त इति दृष्टान्तः ॥ 'अथ' प्रकृतयोजनायाह, 'इत्थम्' अनेन प्रकारेण, 'दोषाकरो' दूषणोत्पत्तिभूमिः, 'मद्यं' मदिरा, विज्ञेयं ज्ञातव्यम्, 'धर्मचारिभिः' कुशलानुष्ठानसेवाशीलैरिति ॥ ८ ॥ एकोनविंशति(शा)तमाष्टकविवरणं समाप्तम् ॥ १९ ॥

——:०:——

## ॥ अथ विंशतितमं मैथुनदूषणाष्टकम् ॥

अथ यदुक्तं 'न च मैथुने दोषः' इति तन्निराचिकीर्षुराह ॥

**रागादेव नियोगेन, मैथुनं जायते यतः ॥ ततः कथं न दोषोऽत्र, येन शास्त्रे निषिध्यते ॥१॥**

(वृत्तिः) रागोऽभिष्वङ्गलक्षणः, अथवा स्नेहरागविषयरागदृष्टिरागभेदात्त्रिविधो रागः, तत्राद्यो पत्यादिषु, द्वितीयः पुंवेदादिरूपः, तृतीयो वादिनां स्वदर्शनपक्षपातरूपः, तत्र 'रागात्' कामोदयरूपात्, 'एवशब्दो' ऽनाभोगमाध्यस्थ्यादिव्यवच्छे-

दार्थः, 'नियोगेन' अवश्यम्भावेन, अनेन च मैथुने माध्यस्थ्येन प्रवृत्त्यसम्भवोपदर्शनेन मैथुनव्रतस्य निरपवादतामाह, आह च ॥ "न वि किंचि अणुन्नायं, पडिसिद्धं वा वि जिणवरिंदेहिं ॥ मुत्तुं मेहुणभावं, न तं विणा रागदोसेहिंति[३]॥१॥" मिथुनस्य प्रायः स्त्रीपुरुषद्वन्द्वस्य कर्म 'मैथुनम्,' 'जायते' उपपद्यते, 'यतो' यस्मात्, 'ततः' तस्मात्, 'कथं' केन प्रकारेण, 'न' नैव, 'दोषो' दूषणम्, रागलक्षणस्तज्जन्यकर्मबन्धलक्षणो वा, 'अत्र' एतस्मिन्मैथुने, 'येन' कारणेन, 'शास्त्रे' 'न च मैथुने दोषः' इत्येवंलक्षणे ग्रन्थे, 'निषिध्यते' निराक्रियते, त्वया दोष इति गम्यम्, अथवा चकारदर्शनात् येन च यतश्च शास्त्रे निषिध्यते मैथुनमतः कथं न दोषः अथवा यदि नाम रागाज्जायते मैथुनं तदा जायताम्, कुतोऽत्र दोषसद्भावः, उच्यते, येन कारणेन शास्त्रे निषिध्यते, राग इत्यनुवर्तते,आह च ॥ "को दुक्खं पाविज्जा,कस्स व सोक्खेहिं विम्हओ हुज्जा ॥ को व न लभेज्ज मोक्खं, रागद्दोसा जइ न होज्जा[४]॥१॥ "अतः शास्त्रनिषिद्धरागपूर्वकत्वान्मैथुने कथं न दोष इति हृदयम् ॥ प्रयोगोऽत्र, यद्रागजन्यं तत्सदोषम्, यथा हिंसाविशेषः, रागजन्यं च मैथुनम्, अतः सदोषमिति ॥१॥

अथ पक्षैकदेशासिद्धोऽयं हेतुरिति परमतमाशङ्कमान आह ॥

धर्मार्थं पुत्रकामस्य, स्वदारेष्वधिकारिणः ॥ ऋतुकाले विधानेन, यत्स्याद्दोषो न तत्र चेत् ॥२॥ 

(वृत्तिः) 'धर्मार्थं' पुण्यनिमित्तम्, 'पुत्रकामस्य' सुतार्थिनः, अपुत्रस्य हि धर्मो न भवति,यदुच्यते ॥"अपुत्रस्य गतिर्नास्ति,स्वर्गो नैव च नैव च॥तस्मात्पुत्रमुखं दृष्ट्वा पश्चाद्धर्मं चरिष्यति॥(समाचरेत्)॥१॥"इति॥'स्वदारेषु'स्वकलत्रे,न तु परकलत्र,

१०३ नापि किञ्चिदनुज्ञातं प्रतिषिद्धं वापि जिनवरेन्द्रैः । मुक्त्वा मैथुनभावं न तद्विना रागद्वेषाभ्यामिति ॥१॥

१०४ को दुःखं प्राप्नुयात् कस्य वा सौख्यैर्विस्मयो भवेत् । को वा न लभेत मोक्षं रागद्वेषौ यदि न भवेताम् ॥२॥

वेश्यायां वा, तदधिगमस्यानर्थहेतुत्वात्, यदाह ॥ "कुलानि पातयत्यष्टौ, परदारानधिगच्छति ॥ स्वयं च नष्टसंस्कारः, षण्ढत्वं लभते मृतः॥१॥" तथा "*वृषलीफेनपीतस्य, निःश्वासोपहतात्मनः॥ तस्याश्चैव प्रसूतेश्च, निष्कृतिर्नोपपद्यते ॥१॥" तस्याश्चैव प्रसूतेश्च वृषलीप्रसवस्य च निष्कृतिः प्रतिक्रिया शुद्धिरित्यर्थः । 'अधिकारिणो' गृहस्थस्य, न यतेः, तस्य कलत्राद्यभावात्, 'ऋतुकाले' आर्तवसम्भवावसरे, अन्यदा दोषसम्भवात्, यदाह ॥ "ऋतुकाले व्यतिक्रान्ते, यस्तु सेवेत मैथुनम् । ब्रह्महत्याफलं तस्य, सूतकं च दिने दिने ॥१॥" 'विधानेन' स्त्रीशरीरनवनीतदर्भाच्छादनदर्भमणिमूलबन्धनादिना स्मृतिमार्गाभिहितेन विधिना, 'यत्' मैथुनम्, 'स्यात्' भवेत्, दोषो दूषणम्, 'न' नैव, 'तत्र' मैथुने गतरागप्रवृत्तत्वाच्छेद-नादिकारणाश्रितभोजन इवेति, 'चेत्' यदि मन्यसे त्वं परः, अनेन च पक्षैकदेशासिद्धता हेतोर्दर्शिता न च मैथुने दोष इत्यस्य च पक्षस्य विषयविशेषोपदर्शनेनाव्याहतिरभिहितेति ॥ २ ॥ अत्राचार्य उत्तरमाह ॥

नापवादिककल्पत्वा-न्नैकान्तेनेत्यसङ्गतम् ॥ वेदं ह्यधीत्य स्नायाद्य-दधीत्यैवेति शासितम् ॥३॥

(वृत्तिः) धर्मार्थमित्यादिविशेषणोपेतमैथुने न दोष इति यदुक्तं तत्, 'न' नैव, कुत इत्याह, 'अपवादो' हि विशेषोक्ति-विधिः, तत्रापवादे भव आपवादिकः, स चासौ कल्पश्चाचार आपवादिककल्प आपवादिकप्रायं वाऽऽपवादिककल्पम्, तद्भावस्तत्त्वम्, तस्मात् 'आपवादिककल्पत्वात्,' व्यसनगतस्य स्वमांसभक्षणवदिति दृष्टान्तोऽभ्यूह्यः, अयमभिप्रायः, यद्यप्यपवादेन स्वमांसाद्यासेव्यते तथापि तत्स्वरूपेण निर्दोषं न भवति, प्रायश्चित्ताद्यप्रतिपत्तिप्रसङ्गात्, किं तर्हि गुणा-न्तरकारणत्वेन गुणान्तरार्थिना तदाश्रीयत इति, 'एवं' मैथुनं स्वरूपेण सदोषमप्याकौमाराद्यतित्वपालनासहिष्णुर्गुणा-

* पितुर्गेहे च या नारी रजः पश्यत्यसंस्कृता ॥ भ्रूणहत्या पितुस्तस्याः सा कन्या वृषली स्मृता ॥१॥

न्तरापेक्षी समाश्रयते, सर्वथा निर्दोषत्वे तु आकुमारत्वाद्यतित्वपालनोपदेशोऽनर्थकः स्यात् गार्हस्थ्यत्यागोपदेशश्च, इत्यतः साधूक्तं धर्मार्थादिविशेषणेन मैथुने दोषाभाव आपवादिककल्पत्वात्तस्येति, ततश्च, 'नैकान्तेन' सर्वथा मैथुने दोष इति यदुक्तं 'न च मैथुने' इत्यनेन वचनेन इत्येतत्, 'असङ्गतम्' अयुक्तम्, रागादिभावेन कथञ्चित् तस्य सदोषत्वात्, धर्मार्थिनोऽपि हि पुंसो मैथुने मेहनविकारकारिणः कामोदयस्य तथाविधारम्भपरिग्रहयोश्चावश्यम्भावित्वात्, न च कामोद्रेकं विना मेहनविकारविशेषः सम्भवति भयाद्यवस्थायामिवेति, 'आपवादिककल्पत्वात्' इति क्वचित्पठ्यते तत्रैकवाक्यतया व्याख्या कार्या, अथ कथमापवादिककल्पत्वं धर्मार्थादिविशेषणयुक्तमैथुनस्येत्याह, 'वेदं' ऋगादिकम्, 'हिशब्दो' वाक्यालङ्कारार्थः, 'अधीत्य' पठित्वा, 'स्नायात्' कलत्रसंग्रहाय स्नानं कुर्यात्, इत्यत्र वेदवाक्ये वेदव्याख्यातृभिः, 'यत्' इति यस्मात्, 'अधीत्यैव' वेदं पठित्वैव, नापठित्वा स्नायादित्येवमवधारणम्, 'शासितं' व्याख्यातमिति॥३॥

विपर्ययमाह ॥

स्नायादेवेति न तु य-त्ततो हीनो गृहाश्रमः ॥ तत्र चैतदतो न्याया-त्प्रशंसास्य न युज्यते ॥ ४ ॥

(वृत्तिः) वेदमधीत्य 'स्नायादेव' वेदाध्ययनानन्तरं कलत्रसंग्रहाय स्नानं कुर्यादेव, 'इति' एवं 'न तु' न पुनरवधारणं शासितम्, अत औत्सर्गिको मैथुनपरिहार आपवादिकं मैथुनमित्यभिहितम्, अनेन चापवादिकेऽपि तत्र रागभावसूचनातो रागजन्यत्वहेतोः पक्षैकदेशासिद्धता परिहृता, अथाधिकृतवाक्यार्थनिगमनायाह, 'यत्' इति यस्मादेवमवधारणविधिः, 'ततः' तस्मात्कारणात्, 'हीनो' जघन्यः, 'गृहाश्रमो' गृहस्थत्वम्, यत्याश्रमापेक्षयेति गम्यम्, ततः किमित्याह, 'तत्र' च तस्मिन् पुनर्गृहस्थाश्रमे 'एतत्' मैथुनं धर्मार्थादिविशेषणं सम्भवति, तत्रैव दारसंग्रहात् 'अत' एतस्मात्, 'न्यायात्' नीतेः,

'प्रशंसा' श्लाघा, 'अस्य' मैथुनस्य, 'न युज्यते' न घटते, यत्याश्रमापेक्षया हीनगृहाश्रमसम्भवित्वेन हीनत्वादस्येति भावः, यच्चोक्तं पुत्रार्थमित्यत्रापुत्रस्य गतिर्नास्तीति, तदयुक्तम्, परमतेनैव तस्य बाधितत्वात्, यदाह॥ "अनेकानि सहस्राणि, कुमारब्रह्मचारिणाम् ॥ दिवं गतानि विप्राणा-मकृत्वा कुलसंततिम्" ॥१॥ इति ॥ ४ ॥

अथ यदुक्तं प्रशंसास्य न युज्यते इत्यत्र परमतमाशङ्कमान आह ॥

**अदोषकीर्तनादेव, प्रशंसा चेत् कथं भवेत् ॥ अर्थापत्त्या सदोषस्य, दोषाभावप्रकीर्तनात् ॥ ५ ॥**

(वृत्तिः) अदोषो दूषणाभावस्तस्य कीर्तनं "न च मैथुने" इत्यनेन मनुवचनेन संशब्दनम् 'अदोषकीर्तनम्' 'तस्मादेव' निमित्तान्तरव्यवच्छेदार्थमवधारणम्, 'प्रशंसा' श्लाघा, मैथुनस्य युज्यत इति शेषः, 'चेत्' यद्येवं मन्यसे, तदा यो दोषस्तमाह, 'कथं' केन प्रकारेण, न कथञ्चिदित्यर्थः, 'भवेत्' जायेत, प्रशंसेति वर्तते,'अर्थापत्त्या'वेदं ह्यधीत्य स्नायादिति पूर्वोक्तप्रमाणेन, 'सदोषस्य' पापस्वरूपस्य मैथुनस्य, 'दोषाभावप्रकीर्तनात्' न च मै इत्येवं लक्षणाद्दोषाभावोक्तिमात्रादेवाप्रमाणकादिति, न हि यदर्थापत्त्या दोषवदिति निश्चितं तदप्रमाणकेन वचनमात्रेण नर्दोषमिति प्रतिपत्तुं शक्यमिति भावः ॥ अथवा प्रशंसाऽस्य न युज्यत इति यदुक्तं, तदयुक्तम्, यतो न मया तत्प्रशंसितम्, किन्तु निर्दोषमित्युक्तम्, इत्याशङ्क्य परिहरन्नाह, 'अदोषेत्यादि' अदोषकीर्तनमात्रादेव कथं प्रशंसास्य भवतीति चेदिति परमतं, सूरिराह, 'अर्थापत्त्या' भवति, अथ तामेवाह, 'सदोषस्य दोषाभावप्रकीर्तनात्' प्रशंसा कृता भवतीति ॥ ५ ॥

यदुक्तमदोषकीर्तनात् प्रशंसास्य युक्तेति तत्रादोषतोक्तेरेवाव्याप्यत्वमुपदर्शयन्नाह ॥

**तत्र प्रवृत्तिहेतुत्वा-त्त्याज्यबुद्धेरसम्भवात् ॥ विध्युक्तेरिष्टसंसिद्धे-रुक्तिरेषा न भद्रिका ॥ ६ ॥**

(वृत्तिः) 'उक्तिः' न मांसभक्षणे दोष इत्यादिभणनम्, 'एषा' अनन्तराभिहिता इति धर्मिनिर्देशः, 'न भद्रिका' न शोभना इति साध्यधर्मनिर्देशः,कुत इत्याह, 'तत्र' मैथुनेऽर्थापत्त्या प्रागुपदर्शितदोषे, 'प्रवृत्तिहेतुत्वात्'प्राणिनां प्रवर्तननिबन्धनत्वादिति हेतुः, प्रयोगश्चैवं या प्राणिनां सदोषपदार्थे प्रवृत्तिहेतुभूतोक्तिः सा न भद्रिका, यथा हिंसानिर्दोषतोक्तिः, सदोषमैथुनप्रवृत्तिहेतुश्चेयं न मांसेत्यादिकोक्तिरिति, प्रवृत्तिहेतुत्वमेव कुत इत्याह, 'त्याज्यबुद्धेरसम्भवात्' त्याज्यं मैथुनमेवम्भूता बुद्धिस्तस्या असम्भवात् अनुत्पादात्, न मैथुने दोष एतामुक्तिं श्रद्दधानस्य कस्य नाम त्याज्यमिदमित्येषा बुद्धिराविरस्तीति त्याज्यबुद्ध्यभावे च को नाम न तत्र प्रवर्त्तत इति ॥ त्याज्यबुद्ध्यसंभव एव कुत इत्याह विधिर्विधानमनुष्ठानं मैथुनस्य, तस्योक्तिर्भणितिर्विध्युक्तिस्ततो 'विध्युक्तेः,' को हि नाम मैथुने न दोषोऽस्तीति वचनाद्विधेयं मैथुनं न प्रतिपद्यत इति, नन्वनेन वचनेन दोषाभावमात्रमेव मैथुनस्योक्तमिति कथमियं विध्युक्तिः स्यादित्याह, इष्टस्य अनादिमहामोहवासनावासितमानसानां देहिनामभिलषितस्य मैथुनस्येतो· मैथुननिर्दोषताभिधायकवचनात् संसिद्धिर्निष्पत्तिः इष्टसंसिद्धिस्तत 'इष्टसंसिद्धेः,' को हि तस्य निर्दोषतामवगम्य तदिष्टं 'न निष्पादयति,' इष्टं चेदं सर्वप्राणभृतामिति, आह च॥ "कामिनीसन्निभा नास्ति, देवतान्या जगत्त्रये ॥यां समस्तोऽपि पुंवर्गो,धत्ते मानसमन्दिरे ॥१॥" अत उक्तिरेषा न भद्रिकेति व्याख्यातमेव ॥ अथवा उक्तिरेषा न भद्रिकेत्यस्यां प्रतिज्ञायां प्रवृत्तिहेतुत्वादयो भिन्नाश्चत्वारो हेतव इति ॥ ६ ॥ मैथुनं प्रकारान्तरेण दूषयन्नाह ॥

प्राणिनां बाधकं चैत-च्छास्त्रे गीतं महर्षिभिः ॥ नलिकातप्तकणक-प्रवेशज्ञाततस्तथा ॥ ७ ॥

(वृत्तिः) 'प्राणिनां' जीवानाम्, बाधकं उपघातकम्, चशब्दो दूषणान्तरसमुच्चयार्थः, 'एतत्' मैथुनम्, शास्त्रे व्याख्या-

प्रज्ञप्त्याख्यपञ्चमाङ्गे, 'गीतं' गदितम्, 'महर्षिभिः' महामुनिभिः, श्रीवर्धमानस्वामिप्रमुखैः, कथं बाधकं गीतमित्याह, नलिकायां वेणुपर्वादिरूपायां तप्तस्याग्निना दीप्तस्य कणकस्य लोहशलाकाविशेषस्य प्रवेशः प्रक्षेपः स एव ज्ञातमुदाहरणं ततो 'नलिकातप्तकणकप्रवेशज्ञाततः,' 'तथा' इति तत्प्रकारात्, रुतभृतनलिकेति विशेषणयुक्ता, तथाहि ॥ "मेहुणं भन्ते सेवमाणस्स केरिसए अस्संजमे कज्जइ? गोयमा से जहा नामए केइ पुरिसे बूरनलियं वा रूयनलियं वा तत्तेणं अओकणएणं समहिद्धंसेज्जा, मेहुन्नं सेवमाणस्स एरिसए णं अस्संजमे कज्जइ[५]" इति ॥७॥

दूषणान्तरमाप्तवचनप्रसिद्धं मैथुनस्य ब्रुवाणः प्रकरणोपसंहारायाह ॥

मूलं चैतदधर्मस्य, भवभावप्रवर्धनम् ॥ तस्माद्विषान्नवत्त्याज्य-मिदं मृत्युमनिच्छता ॥ ८ ॥

(वृत्तिः) 'मूलं' कारणम्, 'चशब्दः' समुच्चये, 'एतत्' मैथुनम्, 'अधर्मस्य' पापस्य, यत एवमत एव 'भवभावप्रवर्धनम्,' भवभावस्य संसारसत्तायाः, अथवा भवे संसारे ये भावा उत्पादास्तेषाम्, भवहेतूनां वा भावानां परिणामानां प्राणिवधादिक्रोधादीनाम्'प्रवर्धनम्' वृद्धिकरमिति विग्रहः,उक्तं च ॥"मूलमेयमहम्मस्स,महादोससमुस्सयं ॥ तम्हा मेहुणसंसग्गिं, णिग्गन्था वज्जयन्ति णं[६] ॥१॥" यस्मादेवम्, 'तस्मात्' कारणात्, 'विषान्नवत्' हालाहलमिश्रभोजनमिव,'त्याज्यं'

---

५. मैथुनं भदन्त सेवमानस्य(नेन) कीदृशोऽसंयमः क्रियते, गौतम, तद्यथा नाम कश्चित् पुरुषः बूरनलिकां वा रूतनलिकां वा तप्तेन अयःकणकेन समभिध्वंसयेत मैथुनं सेवमानस्य (नेन) ईदृशोऽसंयमः क्रियते ॥

६. मूलमेतदधर्मस्य महादोषसमुच्छ्रयः ॥ तस्मान्मैथुनसंसर्गं निर्ग्रन्था वर्जयन्ति ॥

परिहार्यम्, 'मृत्युं' मरणम्, 'अनिच्छता' अनभिलषता, अमुमूर्षुणा यथा विषान्नं त्यजनीयमेवं मैथुनं त्याज्यमिति भाव इति ॥ ८ ॥ विंशतितमाष्टकविवरणं समाप्तम्॥ २० ॥

---

## ॥ अथ एकविंशतितमं धर्मविचारे सूक्ष्मबुद्ध्याश्रयणाष्टकम् ॥

एवं कुतीर्थिकाननुशास्य स्वयूथ्याननुशासनार्थमाह ॥ अथवा सदोषमपि मांसाद्यासेवनं स्थूलबुद्धित्वात् कुतीर्थिकैरदोषतयावसितमिति प्रागुपदर्शितमथ स्थूलबुद्धित्वादेव धर्मार्थिनोऽपि धर्मव्याघातः स्यादिति धर्मविचारे सूक्ष्मबुद्धेराश्रयणीयतामुपदिशन्नाह ॥

**सूक्ष्मबुद्ध्या सदा ज्ञेयो, धर्मो धर्मार्थिभिर्नरैः ॥ अन्यथा धर्मबुद्ध्यैव, तद्विघातः प्रसज्यते॥ १॥**

(वृत्तिः) 'सूक्ष्मबुद्ध्या' निपुणमत्या, 'सदा' सर्वकालम्, 'ज्ञेयो' ज्ञातव्यः, कोऽसावित्याह,'धर्मो' दुर्गतिप्रपातरक्षणे हेतुः, कैरित्याह, 'धर्मार्थिभिः' धर्मश्रद्धालुभिः, 'नरैः' मानवैः, 'अन्यथा' स्थूलबुद्ध्या धर्मविवेचने कुतीर्थिकानामिव, 'धर्मबुद्ध्यैव' धर्माभिप्रायेणापि, 'तद्विघातो' धर्मव्याहतिः, 'प्रसज्यते' प्राप्नोतीति ।१ ॥ एतदेव दर्शयन्नाह ॥

**गृहीत्वा ग्लानभैषज्य-प्रदानाभिग्रहं यथा ॥ तदप्राप्तौ तदन्तेऽस्य, शोकं समुपगच्छतः॥ २ ॥**

(वृत्तिः) 'गृहीत्वा' आदाय, 'ग्लानाय' अशक्ताय 'भैषज्यप्रदाने' औषधवितरणविषये 'योऽभिग्रहः' प्रतिज्ञा, ग्लानाय मया भैषज्यं दातव्यमित्येवंरूपः, 'स' तथा तम्, 'यथा' इत्युदाहरणोपन्यासार्थः, 'तस्य' ग्लानत्वाभावेन ग्लानभैषज्यप्रदानस्य, 'अप्राप्तिः' असम्भवः 'तदप्राप्तिः' तस्याम्,तस्य ग्लानभैषज्यप्रदानाभिग्रहस्य अन्तः कालावधिपूर्त्यां पर्यवसानं

'तदन्तः' तत्र, 'शोकं' उद्वेगम्, 'समुपगच्छतो' व्रजतो अभिग्रहीतुर्धर्मबुद्ध्याप्यधर्मो भवति,तथा सर्वत्रेति प्रकृतमिति ॥ २ ॥ शोकमेव दर्शयति ॥

गृहीतोऽभिग्रहः श्रेष्ठो, ग्लानो जातो न च क्वचित् ॥ अहो मेऽधन्यता कष्टं, न सिद्धमभिवाञ्छितम् ॥३॥

(वृत्तिः) 'गृहीतः' आत्तः, 'अभिग्रहः' उक्तरूपा प्रतिज्ञा, 'श्रेष्ठः' अतिप्रशस्यः, 'ग्लानो' रोगवान्, 'जातो' भूतः, 'न च' न पुनः, 'क्वचित्' देशे काले वा, एवं चाभिग्रहस्य विफलतागमनात्, 'अहो' इति विस्मये आमन्त्रणे वा, 'मे' मम, धनं लब्धा धनं वा (अथवा) अर्हतीति धन्यस्तद्भावस्तत्ता तन्निषेधो 'अधन्यता,' 'कष्टं' इति खेदवचनम्, 'न सिद्धं' न निष्पन्नम्, 'अभिवाञ्छितं' अभिमतमिति ॥ ३ ॥ प्रकृतयोजनायाह ॥

एवं ह्येतत्समादानं, ग्लानभावाभिसन्धिमत् ॥ साधूनां तत्त्वतो यत्तद्, दुष्टं ज्ञेयं महात्मभिः ॥ ४ ॥

(वृत्तिः)'एवम्' अनेन प्रकारेणाभिग्रहविषयाप्राप्तौ शोकगमनलक्षणेन, हिशब्दोऽधिकृताभिग्रहस्य धर्मव्याघातरूपताभावनार्थः, एतस्य ग्लानभैषज्यप्रदानाभिग्रहस्य समादानं ग्रहणं 'एतत्समादानम्' यच्छब्दोऽत्र द्रष्टव्यः, 'यत्' यस्मात्, ग्लानभावे रोगवत्त्वेऽभिसन्धिरभिप्रायो "यदि कश्चित्साधुर्ग्लानो भवति तदा शोभनं स्यादस्मदभिग्रहस्य सफलत्वप्राप्तेः" इत्येवं लक्षणो विद्यते यत्र तत् 'ग्लानभावाभिसन्धिमत्' 'साधूनां' मुनीनाम्, एतत्समादानमिति योगः, अथवा साधूनां ग्लानभावाभिसन्धिमदिति योगः, 'तत्त्वतः' परमार्थवृत्त्या, 'तत्' इति तस्मात्कारणात्, 'दुष्टं' दोषवत्, ग्लानभावाभिसन्धिमत्त्वेन कर्मबन्धहेतुत्वात्, 'ज्ञेयं' ज्ञातव्यम्, 'महात्मभिः' प्रशस्यस्वभावैरिति ॥४॥

एवमर्थापत्त्या दोषप्राप्तिरन्यैरप्युपलब्धेति दर्शयन्नाह ॥

लौकिकैरपि चैषोऽर्थो, दृष्टः सूक्ष्मार्थदर्शिभिः ॥ प्रकारान्तरतः कैश्चि-दत एतदुदाहृतम् ॥ ५ ॥

(वृत्तिः) लोके विदिता 'लौकिकाः' वाल्मीकिप्रभृतयः, तैरपि च, न केवलं जैनैरेव, 'एषो'ऽनन्तरोदितः, 'अर्थो' अर्थापत्तिजनितदोषलक्षणः, 'दृष्टः' उपलब्धः, किम्भूतैरित्याह, 'सूक्ष्मार्थदर्शिभिः'पटुदृष्टिभिः ज्ञेयवस्तुविवेचकैः न वै ह्यतिस्थूलबुद्धयोऽर्थापत्तिगम्यानेवंविधानर्थान् ज्ञातुमलं भवन्ति, ननु मिथ्यादृशां कथं सूक्ष्मार्थदर्शित्वम्, उच्यते, मत्यज्ञानावरणादिक्षयोपशमविशेषात्, अज्ञानं तर्हि तेषां कथम्, अत्राप्युच्यते सदसतोरविशेषात्, आह च, "सयसयविसेसणाओ" गाहा ॥" (अष्टक ९ श्लो० ६ वृत्तौ)'प्रकारान्तरतः' अस्मदुक्तप्रकारात् ग्लानभैषज्यदानाभिग्रहलक्षणादन्येन प्रकारेण, 'कैश्चित्' वाल्मीक्यादिभिरेव, न सर्वैः, कथं तैर्दृष्टोऽयमित्यवसितमित्याह, 'यतो' यस्मात्, 'एतत्' वक्ष्यमाणम्, 'उदाहृतं' अभिहितमिति ॥५॥



अङ्गेष्वेव जरां यातु, यत्त्वयोपकृतं मम ॥ नरः प्रत्युपकाराय, विपत्सु लभते फलम् ॥ ६ ॥

(वृत्तिः) किल सुग्रीवेण तारावाप्तौ रामदेव एवमुक्तः, अङ्गेष्वेव मदीयगात्रेष्वेव, 'जरां' जरणपरिणामम्, 'यातु' गच्छतु, मा प्रत्युपकारद्वारेण तियातनीयं भवत्वित्यवधारणार्थः, किं तत्, वालेः सकाशात् तारां विमोच्य मम तदर्पणेन, 'त्वया' भवता, 'उपकृतम्' उपकारः कृतः, 'मम' इत्यात्मानं सुग्रीवो निर्दिशति, तस्मात् किमित्येवमित्याह, 'नरः' उपकारकारिमानवः, उपकारं प्रतीत्याश्रित्योपकारः तस्मै 'प्रत्युपकाराय' उपकृतनरेण क्रियमाणाय, सम्पद्यते यत् फलम्, 'विपत्सु' व्यसनेषु सत्सु, 'लभते' प्राप्नोति, तत् 'फलम्' उपकारकारिक्रियायाः साध्यम्, अयमभिप्रायः, उपकारको व्यसनगत एव उपकारक्रियायाः फलमुपकृतेन कृतं लभते, न पुनरन्यदा व्यसनाभावे निरवसरत्वेन तदसम्भवादिति

किमुक्तं भवति, मा त्वमापदं प्राप यस्यामहं भवन्तमुकपरोमीति । अन्ये त्वाहुः, ' नरः ' उपकृतमानवः ' प्रत्युपकारार्थं' विपत्सु'उपकारकारिव्यसनेषु,'लभते फलं'फलहेतुत्वादवसरमिति ॥६॥ एवं तावद्धर्मार्थप्रवृत्तावपि धर्मव्याघातो भवत्यनिपुणबुद्धीनां ग्लानभैषज्याभिग्रहप्रवृत्ताविवेति समर्थितम्, अधुनैवमेव सर्वास्वपि प्रवृत्तिष्विति दर्शयन्नाह ॥

एवं विरुद्धदानादौ, हीनोत्तमगतेः सदा ॥ प्रव्रज्यादिविधाने च, शास्त्रोक्तन्यायबाधिते ॥ ७ ॥

द्रव्यादिभेदतो ज्ञेयो, धर्मव्याघात एव हि ॥ सम्यग्माध्यस्थ्यमालम्ब्य, श्रुतधर्मव्यपेक्षया ॥ ८ ॥

(वृत्तिः)यथाग्लानभैषज्यदानाभिग्रहे धर्मबुद्ध्या कृतेऽपि बुद्धिदोषात् धर्मव्याघातःप्रसज्यते (जति),'एवं'अनेनैव न्यायेन, विरुद्धस्य शास्त्रे विनिवारितस्य जीवोपघातहेतुत्वाद्वे(द्दे)यद्रव्यस्याधाकर्मादिदोषदूषितस्य माष(मांस)तिलादेर्वा, विरुद्धाय वा सदोषत्वेन शास्त्रनिराकृताय पात्राय, दानं वितरणं विरुद्धदानम्, तदादिर्यस्य शीलतपोभावनाधर्मस्य गुरुविनयदेवतापूजनादेर्वा स 'विरुद्धदानादिः' तत्र, द्रव्यादिभेदतो धर्मव्याघात एव ज्ञेय इति योगः,कुत इत्याह,हीनस्य गुणवियुक्तस्य देयद्रव्यस्य पात्रस्य वा उत्तमं प्रधानं एतदिति गतिरवगमो बोधो हीनोत्तमगतिः ततो'हीनोत्तमगतेः,' 'सदा' सर्वदा, शास्त्रनिराकृतत्वेन हि हीनमपि देयं पात्रं चोत्तममिति बोधविपर्ययादनवगच्छन् यदा दाने प्रवर्तते तदा धर्मस्य व्याघातः स्फुट एवेति ॥ दातव्यद्रव्यविरुद्धता च ॥ "अन्नाईणं सुद्धाण, कप्पणिज्जाण देसकालजुयं ॥ दाणं जईणमुचियं,गिहीण सिक्खावयं भणियं७॥१॥"इत्येतद्दानविशेषणविपर्ययादवसेया ॥पात्रविरुद्धता पुनरेवम्॥ "सीलव्वयरहियाणं, दाणं,जं दिज्जई कुपत्ताणं ॥ तं खलु धोवइ वत्थं,रुहिरकयं लोहितेणेव८ ॥ "तथा प्रव्रज्यादीनां सर्वविरति-

७. अन्नादीनां शुद्धानां कल्पनीयानां देशकालयुतम् । दानं यतिभ्य उचितं गृहिणां शिक्षाव्रतं भणितम् ॥

८. शीलव्रतरहितानां (तेभ्यो) दानं यद्दीयते कुपात्राणाम् (त्रेभ्यः) । तत् खलु धाव्यते वस्त्रं रुधिरकृतं लोहितेनैव ॥

प्रतिपत्तिप्रभृतीनां विधानं करण 'प्रव्रज्यादिविधानम्,' आदिशब्दाद्देशविरत्यादिग्रहः, 'तत्र च' न केवलं विरुद्धदानादावेव, किम्भूते प्रव्रज्यादिविधान इत्याह, 'शास्त्रोक्तन्यायबाधिते' आगमाभिहितनयनिराकृते, हीनोत्तमगतेरिति हेतुरिहापि वर्तते धर्मव्याघातो ज्ञेय इत्येतदत्रापि सम्बन्धनीयम्,तत्र प्रव्रज्यादिविधाने शास्त्रोक्तोऽयं न्यायः: ॥ "नियसहावालोयण-जणवायावगमजोगसुद्धीहिं ॥ उचियत्तं नाऊणं,निमित्तओ सइ पवट्टेज्जा[9]॥१॥"तथा "पव्वज्जाए जोग्गा, आरियदेसम्मि जे समुप्पन्ना ॥ जाइकुलेहिं विसिट्ठा, तह खीणप्पायकम्ममला[10] ॥१॥" इत्यादि ॥ देशविरतौ पुनः ॥ गुरुमूले सुयधम्मो,संविग्गो इत्तरं व इयरं वा॥वज्जेत्तु तओ सम्मं, वज्जेइ इमे अईयारे[11]॥१॥"जिनदीक्षायां तु "दीक्खाए चेव रागो, लोगविरुद्धाण चेव चागोत्ति ॥ सुंदरगुरुजोगो वि य, जस्स तओ एत्थ उचिओत्ति[12]॥१" ॥

एतद्बाधा च एतद्विपर्ययादिति,'द्रव्यादिभेदतो'द्रव्यक्षेत्रकालभावविशेषानाश्रित्य,विरुद्धदानादौ प्रव्रज्यादिविधाने च,'ज्ञेयो' ज्ञातव्यः,'धर्मव्याघात एव' धर्मबाधैव,न तु धर्माराधनम्,तत्र विरुद्धदाने द्रव्यतो धर्मव्याघातो यथैषणीयत्वेनाविरुद्धे द्रव्ये कूरादौ साधुसंस्तरणहेतौ सत्यपि अनेषणीयतया विरुद्धमत एव हीनमुत्तममिति बुद्ध्या ददतः,एवं क्षेत्रतोऽकान्तारादिक्षेत्रे कालतः सुभिक्षकाले, भावतस्तु अग्लानावस्थायाम्, उक्तं च ॥ "संथरणम्मि असुद्धं, दोण्ह वि गेण्हन्तदेन्तयाणहियं ॥

९. निजकस्वभावालोचनजनवादावगमयोगशुद्धिभिः ॥ उचितत्वं ज्ञात्वा निमित्ततः सदा प्रवर्तेत ॥
१०. प्रव्रज्याया (यै) योग्याः आर्यदेशे ये समुत्पन्नाः । जातिकुलैर्विशिष्टाः तथा क्षीणप्रायकर्ममलाः ॥
११. गुरुमूले श्रुतधर्मः संविग्न इत्वरं वा इतरं (सर्वकालं) वा । वर्जयित्वा ततः सम्यग् वर्जयति इमानतिचारान् ॥
१२. दीक्षायामेव रागो लोकविरुद्धानामेव त्याग इति । सुन्दरगुरुयोगोऽपि च यस्य सोऽत्रोचित इति ॥१॥

आउरदिट्ठन्तेणं, तं चेव हियं असंथरणे[13] ॥१॥'' तथा प्रव्रज्यादिविधाने औत्सर्गिकशास्त्रबाधिते द्रव्यतो धर्मव्याघातो यथा, शास्त्रनिराकृतं नपुंसकादिकं जीवद्रव्यं प्रव्राजयतः, क्षेत्रतोऽकान्तारादिक्षेत्रे, कालतः सुभिक्षकाले, भावतः स्वस्थावस्थायामिति, हिशब्दः स्फुटार्थः, कथं धर्मव्याघातो ज्ञेय इत्याह, 'सम्यक्' अविपरीतम्, 'माध्यस्थ्यं' अनाग्रहत्वम्, 'आलम्ब्य' आश्रित्य, तदपि न स्वरुच्या किन्तु 'श्रुतधर्मव्यपेक्षया' आगमापेक्षया, न तु तदनपेक्षया इति ॥ ८ ॥

॥ एकविंशतितमाष्टकविवरणं समाप्तम् ॥२१ ॥

## ॥ अथ द्वाविंशतितमं भावशुद्धिविचाराष्टकम् ॥

अथ विरुद्धदानादावपि भावशुद्धेर्धर्म एव न तु तद्व्याघात इत्यत आह ॥

**भावशुद्धिरपि ज्ञेया, यैषा मार्गानुसारिणी ॥ प्रज्ञापनाप्रियात्यर्थं, न पुनः स्वाग्रहात्मिका ॥१॥**

(वृत्तिः) 'भावशुद्धिः' मनसोऽसंक्लिश्यमानता या परैर्विरुद्धदानादौ धर्मव्याघातपरिहारनिबन्धनतया कल्पिता सापि, न केवलं धर्मव्याघात एव ज्ञेय इति 'अपि'शब्दार्थः, ज्ञेया ज्ञातव्या, 'या एषा' वक्ष्यमाणस्वरूपा नान्या, तामेवाह, मार्गं जिनोक्तज्ञानादिकं मोक्षपथमनुसरत्यनुगच्छतीत्येवंशीला 'मार्गानुसारिणी,' अथ परो ब्रूयात्, सैषा ममेत्यत्राह, प्रज्ञापना आगमार्थोपदेशनं सा प्रिया वल्लभा यस्यां भावशुद्धौ सा 'प्रज्ञापनाप्रिया,' 'अत्यर्थं' अतिशयेन, उक्तस्यैवार्थस्य व्यतिरेकमाह, 'न' नैव, पुनःशब्दः पूर्वोक्तार्थापेक्षया प्रकृतार्थविलक्षणताप्रतिपादनार्थः, स्वः स्वकीयो न तु शास्त्रीयः,

---

१३. संस्तरणेऽ शुद्धं द्वयोरपि गृह्णद्ददतोरहितम् । आतुरदृष्टान्तेन तदेव हितमसंस्तरणे ॥१॥

स चासावाग्रहश्चार्थाभिनिवेशः स्वाग्रहः स एवात्मा स्वभावो यस्याः सा 'स्वाग्रहात्मिकेति॥१॥ अथ कस्मात् स्वाग्रहात्मिकापि'भावशुद्धिर्न भवतीति,अत्रोच्यते,भावशुद्धिविपर्ययभूतभावमालिन्यरूपत्वात्स्वाग्रहस्येत्येतत् श्लोकत्रयेणदर्शयन्नाह॥

**रागो द्वेषश्च मोहश्च, भावमालिन्यहेतवः ॥ एतदुत्कर्षतो ज्ञेयो, हन्तोत्कर्षोऽस्य तत्त्वतः ॥ २ ॥**

(वृत्तिः)रागोऽभिष्वङ्गलक्षणः, द्वेषोऽप्रीतिरूपः, 'मोहश्च' अज्ञानलक्षणश्च, 'चशब्दौ समुच्चयार्थौ, एते त्रयोपि 'भावमालिन्यहेतवः' आत्मपरिणामाशुद्धिनिबन्धनानि स्वाग्रहादिभावकारणानीति गर्भः, एतेषां रागादीनां उत्कर्ष उपचय एतदुत्कर्षस्तत 'एतदुत्कर्षतो, 'ज्ञेयो' ज्ञातव्यः, 'हन्त' इति प्रत्यवधारणार्थः कोमलामन्त्रणार्थो वा, 'उत्कर्ष' उपचयः, 'अस्य' भावमालिन्यस्य स्वाग्रहादिरूपस्य, 'तत्त्वतः' परमार्थवृत्त्येति ॥ २ ॥ ततः किमित्याह ॥

**तथोत्कृष्टे च सत्यस्मिन्, शुद्धिर्वै शब्दमात्रकम् ॥ स्वबुद्धिकल्पनाशिल्प-निर्मितं नार्थवद्भवेत् ॥३ ॥**

(वृत्तिः)'तथा' तेन प्रकारेण रागाद्युत्कर्षलक्षणेन, 'उत्कृष्टे' उत्कटे, 'चशब्दः' पुनरर्थः, 'सति'भवति,'अस्मिन् रागादिहेतुके स्वाग्रहादिरूपे भावमालिन्ये,'शुद्धिः' शुद्धत्वम्, भावस्येति गम्यते, वैशब्दो वाक्यालङ्कारार्थः,शब्द एवाभिधानमेव शब्दमात्रं तदेव कुत्सितम् 'शब्दमात्रकं' निरभिधेयमित्यर्थः, मालिन्योत्कर्षे सति नास्ति भावशुद्धिर्मालिन्यस्य तद्विरुद्धरूपत्वादग्निसद्भावे शीतवदिति भावना। अथ मालिन्ये सत्यपि शुद्धिरिष्यते ततः कथं शब्दमात्रत्वमस्या इत्यत्राह, स्वबुद्ध्या प्रमाणापरतन्त्रया मत्या कल्पना क्लृप्तिः सैव शिल्पं चित्रादिकौशलं तेन निर्मितं विरचितं' स्वबुद्धिकल्पनाशिल्पनिर्मितं' यच्छब्दरूपं तदिति गम्यम्, 'न' नैव, 'अर्थवत्' साभिधेयम्, 'भवेत्' जायेतेति ॥ ३ ॥

अथ स्वाग्रहस्य भावमालिन्यरूपतां स्पष्टयन्नाह ॥

न मोहोद्रिक्तताऽभावे, स्वाग्रहो जायते क्वचित् ॥ गुणवत्पारतन्त्र्यं हि, तदनुत्कर्षसाधनम् ॥ ४ ॥

(वृत्तिः) 'न'नैव,मोहस्याज्ञानस्योपलक्षणत्वात् रागद्वेषयोश्चोद्रिक्तता उद्रेकस्तस्या अभावः अविद्यमानता मोहोद्रिक्तताऽभावस्तत्र 'मोहोद्रिक्तताभावे,' स्वाग्रहोऽनागमिकार्थाभिनिवेशो भावशुद्धिविपर्ययलक्षणः, 'जायते' भवति, 'क्वचित्' कुत्रचिदपि वस्तुनि । इदमुक्तं भवति, मोहोत्कर्षजन्यत्वात्'स्वाग्रहो' भावमालिन्यम्,मोहोत्कर्षजन्यत्वं चास्य " रागो द्वेषश्च" (श्लो०–२) इत्यादिवचनप्रामाण्यात्, तदेवं स्वाग्रहस्य भावमालिन्यरूपत्वाद्भावशुद्धिर्न तदात्मिकेति स्थितम् । अथ मोहह्रासस्य स्वाग्रहाभावहेतोः क उपाय इत्याह, गुणवतां विद्यमानसम्यग्ज्ञानक्रियागुणानां पारतन्त्र्यमधीनत्वं 'गुणवत्पारतन्त्र्यम्,' हिशब्दः' पुनरर्थः, गुणवत्पारतन्त्र्यं पुनः तस्य मोहस्यानुत्कर्षो ह्रासस्तस्य साधनं कारणं 'तदनुत्कर्षसाधनम्,' दृश्यते ह्यागमस्यागमविदां वा पारतन्त्र्यान्मोहानुत्कर्ष इति

गुणवत्पारतन्त्र्यस्य मोहानुत्कर्षसाधकत्वमागमज्ञाऽऽचरितेन समर्थयन्नाह ॥

अत एवागमज्ञोऽपि, दीक्षादानादिषु ध्रुवम् ॥ क्षमाश्रमणहस्तेने-त्याह सर्वेषु कर्मसु ॥ ५ ॥

(वृत्तिः) यत एव कारणात् गुणवत्पारतन्त्र्यं मोहानुत्कर्षस्य साधकम्,'अत एव'एतस्मादेव कारणात्, 'आगमज्ञोऽपि' आप्तवचनवेद्यपि सन्, आस्तामनागमज्ञः, 'दीक्षादानादिषु' प्रव्रज्यावितरणप्रभृतिषु, आदिशब्दादुद्देशसमुद्देशादिषु, कर्मस्विति योगः, 'ध्रुवं' निश्चितम्, 'क्षमाश्रमणहस्तेन' सद्गुरुकरेण, न स्वातन्त्र्येण, 'इति' एवंरूपमभिलापम्, 'आह' ब्रूते, दीक्षादिदाता मोहानुत्कर्षार्थमेव, 'सर्वेषु', समस्तेषु 'कर्मसु'व्यापारेष्विति, तस्माद्गुणवत्पारतन्त्र्यादेव मोहानुत्कर्षलक्षणा भावशुद्धिर्नान्यथेति ॥ ५ ॥ एतदेवाह ॥

इदं तु यस्य नास्त्येव, स नोपायेऽपि वर्तते ॥ भावशुद्धेः स्वपरयो-र्गुणाद्यज्ञस्य सा कुतः ॥ ६ ॥

(वृत्तिः) 'इदम्' अनन्तरोदितं गुणवत्पारतन्त्र्यम्, 'तुशब्दः' पुनरर्थः, 'यस्य' प्राणिनः, 'नास्त्येव' न विद्यत एव, 'स' प्राणी, 'न' नैव, 'उपायेऽपि' हेतावपि, 'वर्तते,' आस्तां भावशुद्धौ, गुणवत्पारतन्त्र्यस्यैव तदुपायत्वात्, कस्या 'नोपायेऽपि वर्तत' इत्याह, 'भावशुद्धेः' परिणामशुद्धेः, कुत एतदित्याह, यस्मात् 'स्वपरयोः' आत्मेतरयोर्विषये 'गुणाद्यज्ञस्य' 'सा' भावशुद्धिः, 'कुतः,' न कुतोऽपि, नास्तीत्यर्थः, अयमभिप्रायः, यो हि गुणवत्पारतन्त्र्ये न वर्तते स गुणवद्गुणान् स्वगतगुणदोषांश्च न जानाति, कथमन्यथा गुणवत्परतन्त्रो न भवति, यश्च तान्न जानाति तस्य मोहोपहतबुद्धित्वान्नास्ति भावशुद्धिस्तस्या मोहानुत्कर्षरूपत्वादिति ॥ ६ ॥ अथ यादृश्यां भावशुद्धौ धर्मव्याघातो न भवति तां लक्षयितुमाह ॥

तस्मादासन्नभव्यस्य, प्रकृत्या शुद्धचेतसः ॥ स्थानमानान्तरज्ञस्य, गुणवद्बहुमानिनः ॥ ७ ॥
औचित्येन प्रवृत्तस्य, कुग्रहत्यागतो भृशम् ॥ सर्वत्रागमनिष्ठस्य, भावशुद्धिर्यथोदिता ॥ ८ ॥

(वृत्तिः) यस्माद् गुणदोषानभिज्ञस्य भावशुद्धिर्न भवति, 'तस्मात्' कारणात्, अथवा तस्माद् गुणवत्पारतन्त्र्यात्, आसन्नो मुक्तेर्निकटवर्ती स चासौ भव्यश्च मुक्तिगमनयोग्य 'आसन्नभव्यः' तस्य, भावशुद्धिरिति सम्बन्धः, तथा, 'प्रकृत्या' सद्भावेनैव 'शुद्धचेतसो' असंक्लिष्टमानसस्य, रागादीनामपचीयमानत्वात्, तथा, स्थानं चाचार्योपाध्यायादिकं गुणास्पदं, मानश्चैतस्यैव पूजा स्थानमानौ तयोः स्वजात्यपेक्षया अन्तरं विशेषस्तं जानातीति तज्ज्ञस्तस्य 'स्थानमानान्तरज्ञस्य', इदमुक्तं भवति आचार्योपाध्यायादिकस्य स्थानस्य च तथा तद्विषये मानस्य च यो विशेष उत्तमोत्तमतरमहाफलतरादि-लक्षण इदमस्योचितमिदं चास्येत्येवंरूपस्य (श्च) तज्ज्ञस्य, अत एव 'गुणवद्बहुमानिनः' सद्गुणपक्षपातिनः, तथा स्थानमानान्त-

रङ्गस्य गुणवद्बहुमानिनोऽपि सतः 'औचित्येन' यथागुणं यथायोग्यमिति यावत्, 'प्रवृत्तस्य' व्यापृतस्य विधेयानुष्ठानेषु, 'कुग्रहत्यागतो,' मिथ्यावासनाव्यपोहेन, 'भृशम्' अत्यर्थम्, 'सर्वत्र' समस्तेषु द्रव्यक्षेत्रकालभावेषु विधिषु, 'आगमनिष्ठस्य' आप्तवचनप्रमाणस्य, किमित्याह, 'भावशुद्धिः' परिणामशुद्धता, 'यथोदिता' पारमार्थिकी, भवति, य या(था) धर्मव्याघातो न जायते, उक्तविशेषणाभावे तु या सा पुनरयथोदितेति ॥ ७–८ ॥ द्वाविंशतितमाष्टकविवरणं समाप्तम् ॥

॥ अथ त्रयोविंशतितमं शासन(त्र)मालिन्यनिषेधाष्टकम् ॥

धर्मार्थिना सा भावशुद्धिर्विधेयेत्युक्तम्, अथ तामिच्छता शासनमालिन्यं सर्वथा रक्षणीयमन्यथा महानर्थ इति दर्शयन्नाह॥

यः शासनस्य मालिन्ये-ऽनाभोगेनापि वर्त्तते ॥ स तन्मिथ्यात्वहेतुत्वा-दन्येषां प्राणिनां ध्रुवम् ॥१॥

बध्नात्यपि तदेवालं, परं संसारकारणम् ॥ विपाकदारुणं घोरं, सर्वानर्थविवर्धनम् ॥ २ ॥

(वृत्तिः) 'यः' कोऽपि श्रमणादिः, 'शासनस्य' जिनप्रवचनस्य, 'मालिन्ये' लोकविरुद्धाचरणेनोपघाते, आह च॥ छक्कायदयावन्तो वि,संजतो दुल्लभं कुणइ बोहिं ॥ आहारे नीहारे,दुगुंछिए पिंडगहणे य[१४]॥१॥" 'अनाभोगेनापि' अज्ञानेनापि किंपुनराभोगेनापि,'वर्त्तते'व्याप्रियते,'स'प्राणी,तेन।जिनशासनमालिन्येन करणभूतेन मिथ्यात्वहेतुर्विपर्यस्तबोधजनकः'तन्मिथ्यात्वहेतुः'तत्त्वम्, अथवा तस्मिन् जनशासनविषये मिथ्यात्व भावहेतुत्वं मिथ्यात्वजनकत्वं'तन्मिथ्यात्वहेतुत्वं' तस्मात्'तन्मिथ्यात्वहेतुत्वात्,'केषां मिथ्यात्वहेतुत्वात् ? केषां मिथ्यात्वजनकत्वादित्याह,'अन्येषां'आत्मव्यति-

१४. षट्कायदयावानपि, संयतः दुर्लभं करोति बोधिम् ॥ आहारे नीहारे जुगुप्सिते पिण्डग्रहणे च ॥१॥

रिक्तानां ये हि तस्यासदाचारेण जिनशासनं हीलयन्ति तेषाम्, 'प्राणिनां' जीवानाम्, 'ध्रुवं' अवश्यतया, 'बन्धात्यपि' स्वात्मप्रदेशेषु सम्बन्धयत्यपि न केवलं, तेषां तज्जनयति, 'तदेव' मिथ्यात्वमोहनीयकर्मैव यदन्यप्राणिनां जनितं न त्वन्यच्छुभं कर्मान्तरम्, 'अलं' अत्यर्थम्, निकाचनादिरूपेण, 'परं' प्रकृष्टम्, 'संसारकारणं' भवहेतुम्, 'विपाकदारुणं' दारुणविपाकम्, 'घोरं' भयानकम्, 'सर्वानर्थविवर्धनं' निखिलप्रत्यूहहेतुम् ॥ ननु सम्यग्दृष्टिर्न मिथ्यात्वं बध्नाति मिथ्यात्वहेतुकत्वात् मिथ्यात्वप्रकृतेः,. अत्रोच्यते,शासनमालिन्योत्पादनावसरे मिथ्यात्वोदयान्मिथ्यादृष्टिरेवासावतो मिथ्यात्वबन्ध इति ॥१-२॥उक्तविपर्यये गुणप्रतिपादनायाह ॥

यस्तून्नतौ यथाशक्ति, सोऽपि सम्यक्त्वहेतुताम् ॥ अन्येषां प्रतिपद्येह, तदेवाप्नोत्यनुत्तरम् ॥३॥

(वृत्तिः) 'यस्तु' यः पुनः प्राणी, 'उन्नतौ' प्रभावनायाम्, शासनस्येति वर्त्तते, 'यथाशक्ति' सामर्थ्यानुरूपम्, वर्त्तते इत्यनुवर्त्तते, तत्र साधुः प्रावचनिकत्वादिना शासनोन्नतौ वर्त्तते, यदाह ॥ " पावयणी[1]धम्मकही[2],वादी[3]नेमित्तिओ[4] तवस्सी[5]य ॥ विज्जा[6]सिद्धो[7]य कवी[8],अट्ठेव पभावगा भणिया[15]॥१॥"श्रावकस्तु कार्पण्यपरिहारतो विधिमता जिनबिम्बस्थापनयात्राकरणेन जिनभवनगमनजिनपूजनादिना साधुसाधर्मिककृपणाद्युचितकरणपुरस्सरभोजनादिना वेति, 'सोऽपि' शासनप्रभावकः प्राणी, न केवलं शासनमालिन्यकारी स्वव्यापारानुरूपं फलमासादयति शासनप्रभावकोऽपि स्वव्यापारानुरूपमेव फलमवाप्नोतीत्यपिशब्दार्थः, 'सम्यक्त्वहेतुतां' शासनोन्नतिकरणेन सम्यग्दर्शनलाभस्य निमित्तभावम्, 'अन्येषां' आत्मव्यतिरिक्तप्राणिनां समुपजनितशासनपक्षपातानाम्, 'प्रतिपद्य' स्वीकृत्य, 'इह' इत्यस्मिन् जन्मनि,

१५. प्रवचनी धर्मकथी वादी नैमित्तिकस्तपस्वी च । विद्यावान् सिद्धश्च कविरष्टैव प्रभावका भणिताः ॥

'तदेव'सम्यक्त्वं न तु मिथ्यात्वम्, 'आप्नोति'आसादयति, 'अनुत्तरं'सर्वोत्तमं क्षायिकमित्यर्थ इति॥३॥सम्यक्त्वस्वरूपमाह॥

प्रक्षीणतीव्रसंक्लेशं, प्रशमादिगुणान्वितम् ॥ निमित्तं सर्वसौख्यानां, तथा सिद्धिसुखावहम् ॥ ४ ॥

(वृत्तिः) 'प्रक्षीणो' निःसत्ताकतां गतः, 'तीव्र' उत्कटः, 'संक्लेशो'अनन्तानुबन्धिकषायोदयलक्षणो यस्मिँस्तत्तथा, यतोऽनन्तानुबन्ध्युदये तन्न भवतीति, यदाह॥"पढमिल्लुयाण उदए, नियमा संजोयणाकसायाणं॥ सम्मद्दंसणलम्भं, भवसिद्धीया वि न लहन्ति[१६]॥१॥ "(आवश्यकनिर्युक्तौ) प्रशमादिगुणान्वितं प्रशमसंवेगनिर्वेदानुकम्पास्तिक्यलक्षणसङ्गतम्, यदाह"उवसम[१]संवेगो[२]वि य, निव्वेआ[३]तह य होइ अणुकम्पा[४]॥अत्थिक्कं(त्तं)[५]चियएए, भवन्ति सम्मत्तलिङ्गाइं[१७]॥१"॥ भवन्ति च सम्यग्दृष्टेः सद्बोधसामर्थ्यात् प्रशमादयो गुणाः विशिष्टक्रोधादीनामभावात्। आह च॥"तन्नास्य विषयतृष्णा, प्रभवत्युच्चैर्न दृष्टिसंमोहः॥ अरुचिर्न धर्मपथ्ये, न च पापा क्रोधकण्डूतिः॥१॥"आदिशब्दादन्येषामपि जिनशासनकुशलतादिगुणानां परिग्रहः। तथाहि॥"जिणसासणे कुसलया, पभावणाययणसेवणा थिरया॥ भत्ती य गुणा सम्म-त्तदीवगा उत्तमा पञ्चत्ति[१८]॥१॥" तथा 'निमित्तं' कारणम्, 'सर्वसौख्यानां' समस्तनरामरभवसम्भवानन्दविशेषाणाम्, आह च॥"सम्मत्तम्मि उ लद्धे, ठइयाइ नरयतिरियदाराइं॥ दिव्वाणि माणुसाणि य, मोक्खसुहाइं सहीणाइं[१९]॥१॥"(उपदेशमालायां)

---

१६. प्राथमिकानामुदये नियमात् संयोजना(अनन्तानुबन्धि)कषायाणाम्। सम्यग्दर्शनलाभं भवसिद्धिका अपि न लभन्ते॥

१७. उपशमः संवेगोऽपि च निर्वेदस्तथा च भवति अनुकम्पा॥ आस्तिक्यमेव एते भवन्ति सम्यक्त्वलिङ्गानि॥

१८ जिनशासने कुशलता प्रभावना आयतनसेवना स्थिरता। भक्तिश्च गुणाः सम्यक्त्वदीपका उत्तमाः पञ्चेति॥

१९. सम्यक्त्वे तु लब्धे स्थगितानि नरकतिर्यग्द्वाराणि। दिव्यानि मानुषाणि च मोक्षसुखानि स्वाधीनानि॥

२६. शासनमालिन्यनिषेधाष्टकम्

श्लो० ५-६-७

'तथा' इति समुच्चये 'सिद्धिसुखावहं' निर्वाणसौख्यप्रापकम् । 'ननु' मोक्षसुखं न सम्यक्त्वमात्राद्भवति अपि तु सम्यग्दर्शनादित्रयात् ॥ यदाह ॥ सम्यग्दर्शनज्ञानचारित्राणि मोक्षमार्गः"॥ततः कथं सम्यक्त्वं सिद्धिसुखावहमिति?,अत्रोच्यते, ससहायस्य सम्यग्दर्शनस्य सिद्धिसुखसाधकत्वात् सामग्र्यन्तर्भावेन तदावहता न विरुद्धा, बीजादिसामग्र्यन्तर्भाविनो वर्षस्येवाङ्कुरहेतुतेति ॥ ४॥ अथ पूर्वोक्तस्य प्रवचनमालिन्यस्य वर्जनमुपदिशन्नाह ॥

अतः सर्वप्रयत्नेन, मालिन्यं शासनस्य तु ॥ प्रेक्षावता न कर्तव्यं, प्रधानं पापसाधनम् ॥ ५ ॥

(वृत्तिः) यतोऽनाभोगविहितमपि शासनमालिन्यं घोरसंसारकारणभूतमिथ्यात्वकर्मनिबन्धनं भवति,'अत' एतस्मात्कारणात्, 'सर्वप्रयत्नेन' सर्वादरेण, 'मालिन्यं' दूषणम्, 'शासनस्य' प्रवचनस्य, 'तुशब्दो'ऽवधारणार्थः तस्य च प्रयोगं दर्शयिष्यामः, 'प्रेक्षवता' बुद्धिमता, 'न कर्तव्यं' नैव विधातव्यम्, कुत इत्याह 'प्रधानम्' उत्कृष्टम्, 'पापसाधनम्' अशुभकर्मनिबन्धनं यत इति गम्यमिति ॥ ५ ॥ कुत एतदेवमित्याह ॥

अस्माच्छासनमालिन्या-ज्जातौ जातौ विगर्हितम् ॥ प्रधानभावादात्मानं, सदा दूरीकरोत्यलम् ॥ ६ ॥

(वृत्तिः) 'अस्मात्' अनन्तरोदितमिथ्यात्वबन्धनफलात्, 'शासनमालिन्यात्' प्रवचनापभ्राजनात्, 'जातौ जातौ' भवे भवे,वीप्सावचनं(नेन)मालिन्यकारिणोऽनन्तं भवसन्तानं दर्शयति, 'विगर्हितं'जात्यादिहीनतयोत्पत्तेर्विशेषेण निन्दितम् आत्मानमिति योगः,'प्रधानभावात्'प्रभुत्वात्,'आत्मानं' स्वम्,'सदा' सर्वकालम्,'दूरीकरोति'अनासन्नं विदधाति अप्रासव्यप्रभुत्वं करोतीत्यर्थः,'अलम्'अतिशयेनेति॥६॥शासनस्य मालिन्यं वर्जनीयमित्युपदिश्य तस्यैव यद्विधेयं तदुपदिशन्नाह॥

कर्तव्या चोन्नतिः सत्यां, शक्ताविह नियोगतः ॥ अवन्ध्यं बीजमेषा य-त्तत्त्वतः सर्वसम्पदाम् ॥ ७॥

(वृत्तिः) न केवलं शासनस्य मालिन्यं वर्जनीयम्, 'कर्तव्या च' विधेया च, 'उन्नतिः' प्रभावना, 'सत्यां' विद्यमानायाम्, 'शक्तौ' सामर्थ्ये, 'इह' इति प्रक्रान्ते जिनशासने, नयोगतो' नियमेन, कस्मादेवमित्याह, 'अवन्ध्यं' फलसाधकम्, बीजमिव 'बीजं' कारणम्, 'एषा' शासनप्रभावना, 'यत्' यस्मात्कारणात्, 'तत्त्वतः' परमार्थतः, 'सर्वसम्पदां' समस्तश्रियामिति ॥ ७ ॥ कथमित्याह ॥

अत उन्नतिमाप्नोति, जातौ जातौ हितोद्याम् ॥ क्षयं नयति मालिन्यं, नियमात्सर्ववस्तुषु ॥८॥

(वृत्तिः) 'अत' एतस्माज्जिनशासनोन्नतिकरणात्, 'उन्नतिं' जातिकुलरूपविभवादिगुणैरुन्नतत्वम्, 'आप्नोति' आसादयति, 'जातौ जातौ' भवे भवे, 'हितः' शुभानुबन्ध 'उदय' उद्गमो यस्याः सा तथा तां 'हितोदयां' कल्याणानुबन्धिनीमित्यर्थः, एतेनार्थप्रासिकारित्वमुक्तं शासनोन्नतिकरणस्य, अथ अनर्थप्रतिघातकत्वमाह, 'क्षयम्' अपुनर्भावेन विनाशम्, 'नयति' प्रापयति, 'मालिन्यं' दूषणभावम्, आत्मन इति गम्यते, नियमात्' अवश्यतया, 'सर्ववस्तुषु' जातिकुलबुद्ध्यादिसमस्तभावविषये, अतः कर्तव्योन्नतिरिति ॥ ८ ॥ अन्ये तु चतुर्थादीनां श्लोकानां स्थाने अमून्पञ्च श्लोकान्पठन्ति, यः शासनस्योन्नतौ प्रवर्तते सोऽन्येषां जीवानां सम्यक्त्वहेतुतां प्रतिपद्य तदेव सम्यक्त्वमनुत्तरमवाप्नोतीति तृतीयश्लोकेऽभिहितम्, अथ यथासौ सम्यक्त्वहेतुतां प्रतिपद्यते तथा दर्शयन्नाह ॥

तत्तथा शोभनं दृष्ट्वा, साधु शासनमित्यदः॥ प्रतिपद्यन्ते तदैवैके, बाजमन्येऽस्य शोभनम् ॥ ४ ॥

(वृत्तिः) 'तत्' इति प्रवचनोन्नतिहेतुभूतं पूजाद्यनुष्ठानम्, 'तथा' तेन विशिष्टौदार्यादिना प्रकारेण, 'शोभनं' शासनान्तरासम्भवित्वेन प्रधानम्, 'दृष्ट्वा' अवलोक्य, 'साधु' प्रधानम्, 'शासनम्' आर्हतप्रवचनम्, यत्रैवंविधमत्युदारमनवद्यमनु-

ष्ठानम्, 'इति' एवममुतो बोधादित्यर्थः, 'अदः' एतदनन्तरश्लोकोपात्तं सम्यक्त्वम्, 'प्रतिपद्यन्ते' समाश्रयन्ते, 'तदैव' तस्मिन्नेव काले यदा जिनशासनं प्रति पक्षपात उत्पद्यते, 'एके' केचन भव्याः, बीजमिव 'बीजं' कारणं शासनपक्षपातरूपं, प्रतिपद्यन्त इति वर्त्तत एवेति, 'अन्ये' सम्यग्दर्शनप्रतिपत्तृभ्योऽपरे, 'अस्य' सम्यग्दर्शनस्य, 'शोभनम्' अवन्ध्यं कालान्तरे अवश्यं सम्यग्दर्शनफलजननादिति ॥ ४ ॥ अथ सम्यक्त्वबीजस्य हेतुतां प्रतिपद्यमानः कथं सम्यक्त्वहेतुतां प्रतिपद्यत इत्यभिधीयतेत्, ए इति ? अत्रोच्यते बीजस्य कालान्तरे सम्यक्त्वजननादेतदेवाह ॥

२१. शासनमालिन्यनिषेधाष्टकम्

श्लो० ५—६

सामान्येनापि नियमा-द्वर्णवादोऽत्र शासने ॥ कालान्तरेण सम्यक्त्व-हेतुतां प्रतिपद्यते ॥ ५ ॥

(वृत्तिः) 'सामान्येनापि' अविशेषेणापि, जिनशासनमपि साधु इत्येवंपरिणाम आस्तां पुनर्विशेषेण जिनशासनमेव साध्वित्येवं शासनान्तरव्यपोहेनापि, 'नियमात्' अवश्यंभावेन, 'वर्णवादः' श्लाघा सम्यग्दर्शनबीजमित्यर्थः, 'अत्र' इति प्रत्यासन्ने जैन इत्यर्थः लोके वा, 'शासने' प्रवचने, कालान्तरेण वर्णवादकरणकालादन्यः कालः कालान्तरं तेन, कियताप्यागामिकालेनेत्यर्थः,, 'सम्यक्त्वहेतुतां' सम्यग्दर्शननिमित्तताम्, 'प्रतिपद्यते' भजते सम्यक्त्वं जनयतीत्यर्थ इति ॥ ५ ॥ एतदेव दृष्टान्तेन भावयन्नाह ॥

चौरोदाहरणादेवं, प्रतिपत्तव्यमित्यदः ॥ कौशाम्ब्यां स वणिग्भूत्वा, बुद्ध एकोऽपरो न तु ॥ ६ ॥

(वृत्तिः) 'चौरोदाहरणात्' स्तेनयोर्ज्ञातात्, 'एवम्' अनेन प्रकारेण कालान्तरसम्यक्त्वहेतुतालक्षणेन, 'प्रतिपत्तव्यं' प्रत्येतव्यम्, 'इतिशब्दो' वाक्यपरिसमाप्तौ वक्ष्यमाणदृष्टान्तार्थोपदर्शनार्थो वा, 'अद' एतद्वर्णवादरूपबीजस्वरूपम्, चौरोदाहरणं भावयन्नाह, 'कौशाम्ब्यां' नगर्याम्, 'स' शासनवर्णवादकारी चौरः, 'वणिक्' वाणिजको, 'भूत्वा' उत्पद्य, 'बुद्धो बोधिं

प्राप्तः, 'एकः,' 'अपरः' अन्यो, 'न तु' नैवेत्यक्षरार्थः॥ भावार्थः कथानकगम्यस्तच्चेदम्॥कौशाम्ब्यां नगर्यां धनयक्षाभिधानयोः श्रेष्ठिनोर्धनपालवसुपालाभिधानावन्योन्यमतिस्नेहवन्तौ स्नेहवशादेव प्रायः समचित्तौ समशीलौ समधनौ सुतावभूवताम्। अन्यदा श्रीमन्महावीरवर्धमानस्वामी तत्र विहरन्नाजगाम। ततोऽसावमरवरविनिर्मितस्य रत्नादिप्रभापटलविपुलजलमध्यगस्य विचित्रपत्रपङ्क्तित्रयोपेतसहस्रपत्रोपमस्य रजततपनीयमणिमयविशालशालवलयत्रयस्य मध्यगतः केसरनिकराकारकायो मधुकरनिकरकल्पाशोकानोकहनिरुद्धगगनाभोगः गगनतलोपनिपतत्कलहंसयुगलकल्पोपलीयमाननिर्मलधवलचामरयुगो मत्तमधुकरनिकरझङ्काररवरम्यतममहाध्वनिः जगज्जननियन्त्रकमोहवरत्रात्रटत्त्रोटनपटीयांसं सुरनिवहसङ्कुलसंसदि सद्धर्माऽकुण्ठकुठारमुपदिशतिस्म। ततस्तत्रत्यनरपतिः समवगतपारगतागमनवार्तोऽन्तःपुरपुरजनादिपरिवृतो भक्तिभरावर्जितमानसो जिनान्तिकमाजगाम। तावपि नैगमनायकतनयौ भक्तिकौतुकाभ्यां तत्रागतौ। ततो भगवताभिहिते जन्तुसन्तानस्य कर्मबन्धहेतौ, वर्णिते मुक्तिकारणे, दर्शिते भवनैर्गुण्ये, प्रकटिते निर्वाणसुखानन्त्ये, मोहनिद्राविद्रवणेन दिनकरकरनिकरैरिवाम्भोजराजयो भगवद्वचनैः प्रतिबुद्धा भूयांसो भव्यजन्तवः। ततस्तयोरपि वणिग्नन्दनयोर्ज्येष्ठस्य सम्पन्ना बोधिः, द्वितीयस्य तु वज्रतण्डुलस्येव दुर्भेदत्वेन बोधिर्नाभवत्। ततो ज्येष्ठस्य हर्षोऽजनि, अहो धन्योऽहं येन मयाऽनर्वाक्पारभवजलनिधिनिमग्नेन सद्धर्मयानपात्रमेवंविधमवाप्तम्। इतरस्य तु क्लिष्टकर्मणा माध्यस्थ्यमेवाभवत्। ततः परस्परस्याभिप्रायमवगतवन्तौ, यथावयोर्धर्मपरिणतिविशेषे भेदोऽभूत्। ततो ज्येष्ठो भगवन्तं पप्रच्छ, यद्रुत भगवंस्तुल्यस्नेहयोरावयोस्तुल्य एव विभूतिरूपविनयादिसम्बन्धोऽभवत्, अधुना पुनर्मुक्तिफलकल्पतरुकल्पसम्यक्त्वविभूतिप्राप्तावतुल्यता जाता, मम मित्रस्य तद्विकलत्वात्, तत् किमत्र कारणम्। ततो भगवानुवाच, भो

भद्र! भवन्तौ जन्मान्तरे ग्राममहत्तरसुतावभूताम्, ततो व्यसनोपहतौ चौर्यपरायणावभवताम्, अन्यदा ग्रामान्तरं गत्वा गा अपहृतवन्तौ, ततस्ताः स्वस्थानं नयन्तौ दण्डपाशिकान् पश्चाल्लग्नान् विज्ञाय तद्भयात्पलायमानौ गिरिगह्वरे प्राविशताम्, शैलगुहायां चातापयन्तं महातपस्विनमपश्यताम्, ततस्त्वं संवेगमागतोऽवोचः, यथा सुलब्धमस्य जन्म योऽयं परित्यक्तसकलपुत्रकलत्रमित्रादिसम्बन्धः संतोषसुखसागरावगाढो धर्मनिरतचित्तो विषयविरतः स्वर्गापवर्गसंसर्गाय तपस्यति, मादृशास्त्वधन्या उभयलोकगर्हितमनर्थफलं क्लेशबहुफलं च चौर्यमाश्रिता इत्येवंविधा साधु साधुप्रशंसा भवतो बोधिबीजमजनि, इतरस्य तु यतिद्वेषो बोधिबीजदाही सञ्जातः। इदं भवतोर्बोधेर्भावाभावकारणमिति ॥६॥ उपसंहरन्नाह ॥

इति सर्वप्रयत्नेनो-पघातः शासनस्य तु ॥ प्रेक्षावता न कर्तव्य, आत्मनो हितमिच्छता ॥ ७ ॥

स्पष्टः ॥ ७ ॥ कर्तव्यं च किमित्याह ॥

कर्तव्या चोन्नतिः सत्यां, शक्ताविह नियोगतः ॥ प्रधानं कारणं ह्येषा, तीर्थकृन्नामकर्मणः ॥ ८ ॥

स्पष्ट एवेति ॥ ८ ॥ त्रयोविंशतितमाष्टकविवरणं समाप्तम् ॥ २३ ॥

---

## ॥ अथ चतुर्विंशतितमं पुण्यानुबन्धिपुण्यादिविवरणाष्टकम् ॥ २४ ॥

शासनोन्नतिकरणाद्धितोदयामुन्नतिमाप्नोतीत्युक्तम्, तत्र किमहितोदयाप्युन्नतिरस्ति येनासौ सविशेषणाभिधीयते, उच्यते, अस्ति, यतः पुण्यजन्योन्नतिः। पुण्यापुण्यविचारे च चत्वारो भङ्गा भवन्ति, तद्यथा, पुण्यानुबन्धिपुण्यमित्येकः, पापानुबन्धिपुण्यमिति द्वितीयः, पापानुबन्धिपापमिति तृतीयः, पुण्यानुबन्धिपापमिति चतुर्थः, तत्राद्यभङ्गकप्रतिपादना-

याह॥ पाठान्तरापेक्षया पुनरेवं सम्बन्धः॥ तीर्थकृन्नामकर्मण इति प्रागुक्तं, तच्च पुण्यं, पुण्यादिविचारे च प्रागुक्ता एव चत्वारो भङ्गका भवन्ति। तत्राद्यभङ्गकाभिधानायाह॥

गेहाद् गेहान्तरं कश्चि-च्छोभनादधिकं नरः॥ याति यद्वत्सुधर्मेण, तद्वदेव भवाद्भवम्॥ १॥

(वृत्तिः) 'गेहाद्गेहान्तरं कश्चित्' अनिर्दिष्टनामा नर इति योगः, किम्भूताद्गेहात् 'शोभनात्' रमणीयात्, किम्भूतं गेहान्तरं 'अधिकं' शोभनतरम्, 'नरो' मानवः, नरग्रहणं चेह विशिष्टचरणसाध्यपुण्ययोग्यत्वेन तस्य प्राधान्यख्यापनार्थम्, 'याति' गच्छति, 'यद्वत्' यथेति दृष्टान्तः, 'सुधर्मेण' पुण्यानुबन्धित्वाच्छोभनः कूपादिधर्मजन्यत्वाद्धर्मश्चेति सुधर्मस्तेन, पुण्यानुबन्धिपुण्यकर्मणेत्यर्थः, 'तद्वदेव' तथैव, 'भवात्' मनुष्यादिजन्मनः शोभनस्वभावात्सकाशात्, 'भवं' देवादिभवं शोभनतरस्वभावम्, यातीति प्रकृतम्, यत्किल शुभमनुष्यादेर्जीवस्य पूर्वभवप्रपञ्चितं कर्म मानुष्यत्वादिशुभभावानुभवहेतुर्भवति तदनन्तरं देवादिगतिपरम्पराकारणं च तत्पुण्यानुबन्धिपुण्यमुच्यते, एतच्च ज्ञानपूर्वकनिर्निदानकुशलानुष्ठानाद्भवति, भरतादेरिवेति॥ १॥ अथ द्वितीयभङ्गकमाह॥

गेहाद् गेहान्तरं कश्चि-च्छोभनादितरन्नरः॥ याति यद्वदसद्धर्मा-त्तद्वदेव भवाद्भवम्॥ २॥

(वृत्तिः) 'गेहाद्गेहान्तरं कश्चिन्नरो यद्वद्याति' इति सम्बन्धः, किम्भूतात् किम्भूतं 'शोभनात्' रमणीयात्, 'इतरत्' अशोभनम्, 'तद्वदेव' तथैव, 'असद्धर्मात्' असन्नशोभनः पापानुबंधित्वात् धर्मश्च दयादिधर्मजन्यत्वादित्यसद्धर्मस्तस्मात् पापानुबन्धिपुण्यादित्यर्थः, 'भवात्', शोभनान्मनुष्यादेः, 'भवं' अशोभनं नारकादिकमिति, यत्किल शुभमनुष्यादेर्जीवस्य पूर्वभवार्जितं कर्म मानुषत्वादिशुभभावानुभूतिहेतुर्भवति तदनन्तरं नारकादिभवपरम्पराकारणं च तत् पापानुबन्धि-

पुण्यमित्युच्यते, तच्च निदानादिदूषिताद्धर्मानुष्ठानाद्भवति, ब्रह्मदत्तादेरिवेति ॥ २ ॥ अथ तृतीयभङ्गकमाह ॥

गेहाद् गेहान्तरं कश्चि-दशुभादधिकं नरः । याति यद्वन्महापापा-त्तद्वदेव भवाद्भवम् ॥ ३ ॥

(वृत्तिः) 'गेहाद्गेहान्तरं यद्वत्कश्चिन्नरो याति,' किंविधात्किंविधमित्याह, 'अशुभात्' अरमणीयात्, 'अधिकं' अशुभतरम्, 'तद्वदेव महापापात्' महच्च तत्पापानुबन्धित्वात्पापं चाशुभकर्मेति महापापं तस्मात्पापानुबन्धिपापादित्यर्थः, 'भवात्' अशुभात्तिर्यगादेः 'भवं' अशुभतरं नारकादिकमिति,यत्किल तिर्यगादेर्जीवस्य पूर्वजन्मोपात्तं कर्म तिर्यक्त्वाद्यशुभभावानुभवनिमित्तभूतं भवति तदनन्तरं नारकाद्यशुभगतिपरम्पराकारणं च तत् पापानुबन्धिपापमुच्यते, तथाविधबिडालादेरिव, तच्च महाप्राणातिपातादिहेतुकमिति ॥ ३ ॥ चतुर्थभङ्गकमधुना प्राह ॥

गेहाद् गेहान्तरं कश्चि-दशुभादितरन्नरः ॥ याति यद्वत्सुधर्मेण, तद्वदेव भवाद् भवम् ॥ ४ ॥

(वृत्तिः) 'गेहाद्गेहान्तरं कश्चिन्नरो यद्वद्याति,' किंविधात्किंविधमित्याह, 'अशुभात्' अकमनीयात्, 'इतरत्' शोभनम्, 'तद्वदेव सुधर्मेण' अकुशलानुष्ठानमिश्रनिर्निदानादिकुशलानुष्ठानलक्षणेन, 'भवात्' अशुभतिर्यगादेः, 'भवं' शुभमनुष्यादिकमिति, यत्किल तिर्यगादेर्जीवस्य प्राग्भवार्जितं कर्म तिर्यक्त्वाद्यशुभभावानुभूतिनिमित्तभूतं भवति तदनन्तरं-देवादिशुभगतिपरम्पराहेतुश्च तत्पुण्यानुबन्धिपापमुच्यते, चण्डकौशिकादेरिव ॥ इह च भङ्गकनिर्देशो यद्यपि पापं प्रधानम्, तथापि पुण्यानुबन्धहेतुत्वात् पुण्यानुबन्धकारिणि पापे शुभधर्मतामुपचर्य सुधर्मेण तद्वदेवेत्याद्युक्तमिति ॥ ४ ॥

एवं फलतश्चतुर्धा कर्म व्यवस्थाप्योपदेशमाह ॥

शुभानुबन्ध्यतः पुण्यं, कर्तव्यं सर्वथा नरैः ॥ यत्प्रभावादपातिन्यो, जायन्ते सर्वसम्पदः ॥ ५ ॥

२४. पुण्यानुबन्धिपुण्यादिविवरणाष्टकम्

श्लो० ४—६

(वृत्तिः) शुभं पुण्यं कर्मानुबध्नात्यनुसन्धत्ते यदेवंशीलं तत् 'शुभानुबन्धि,' 'अत' इति यतो गेहाद्गेहान्तरमित्यादि-दृष्टान्तप्रतिपादितं शुभाशुभं कर्मफलमस्ति एतस्मात् कारणात्, 'पुण्यं'शुभकर्म, 'कर्तव्यं'विधेयम्, 'सर्वथा' सर्वप्रकारैः, 'नरैः' मानवैः,' किम्भूतं तदित्याह, 'यत्प्रभावात्' यस्य सामर्थ्यात्, 'अपातिन्यः'अपतनशीला अविनश्वर्यः, 'जायन्ते' भवन्ति, 'सर्वसम्पदः' समस्तनरामरनिर्वाणश्रियः ॥ इति ॥ ५ ॥ तत्पुनः शुभानुबन्धिपुण्यं कथं क्रियत इत्याह ॥

सदागमविशुद्धेन, क्रियते तच्च चेतसा ॥ एतच्च ज्ञानवृद्धेभ्यो, जायते नान्यतः क्वचित् ॥ ६ ॥

(वृत्तिः) 'सदा' सर्वकालं अथवा सदागमस्त्रिकोटीदोषवर्जितत्वेन शोभनं शास्त्रं तेन विशुद्धं निर्मलीकृतं यत्तत्तथा तेन 'सदागमविशुद्धेन,' 'चेतसा' इति योगः, 'क्रियते' विधीयते, 'तच्च' तत्पुनः शुभानुबन्धि पुण्यम्, 'चेतसा' मनसा, 'एतच्च' एतत्पुनः सदागमविशुद्धं चेतः, 'ज्ञानवृद्धेभ्यः' श्रुतस्थविरेभ्यः सम्यगुपासितेभ्यः, 'जायते' सम्पद्यते, 'नान्यतो' न पुनरन्यस्मात् कारणान्तरात्,'कचित्' देशे काले पात्रे वेति, यद्यपि कालस्वभावनियतिकर्मपुरुषकाराणां कारणभावः सर्वत्र, तथापि कर्मक्षयोपशमे चित्तविशुद्धेरान्तरकारणे ज्ञानवृद्धसम्पर्कस्य प्रधानकारणत्वात्, 'एतच्च ज्ञानवृद्धेभ्य' इत्युक्तमिति ॥ ६ ॥ यदि विशुद्धं चित्तं न भवति तदा किं स्यादित्याह ॥

चित्तरत्नमसंक्लिष्ट-मान्तरं धनमुच्यते ॥ यस्य तन्मुषितं दोषै-स्तस्य शिष्टा विपत्तयः ॥ ७ ॥

(वृत्तिः) चित्तं मनस्तद्रत्नमिव 'चित्तरत्नं' निर्मलस्वभावत्वोपाधिजनितविकारत्वादिसाधर्म्यात्, 'असंक्लिष्टं' रागादिसंक्लेशवर्जितम्, 'आन्तरं' आध्यात्मिकम्, 'धनं' वसु, 'उच्यते' अभिधीयते, 'यस्य' देहिनः, 'तत्' चित्तरत्नम्, 'मुषितं' अपहृतम्, 'दोषैः' रागादिभिः 'तस्य' देहिनः, 'शिष्टा' उद्धरिताः 'विपत्तयो' व्यसनानि, असंक्लिष्टचित्तरत्नाभावे हि

हर्षविषादादिरूपाः कुमार्गगमनरूपा वा विपद एवावशिष्यन्त इति ॥ ७ ॥ अन्ये तु अमुं श्लोकं न पठन्ति अमुं चास्य स्थाने पठन्ति॥ आगमविशुद्धं चित्तं ज्ञानवृद्धेभ्यः सकाशादुपजायत इत्युक्तं तत्रेदं किं सदुत्पद्यते, असद्वा, यदि सदिति पक्षः, स न युक्तः, सत उत्पादायोगात्, गगनस्येव, सतोऽप्युत्पादे उत्पादाविरामप्रसङ्गात्, अथासदिति पक्षः, सोऽप्ययुक्तः, सर्वथा असत उत्पादाभावात्, गगनाम्भोरुहस्येवेति, अत्रोत्तरमाह ॥

प्रकृत्या मार्गगामित्वं, सदपि व्यज्यते ध्रुवम् ॥ ज्ञानवृद्धप्रसादेन, वृद्धिं चाप्नोत्यनुत्तराम् ॥ ७ ॥

(वृत्तिः) अस्य व्याख्या–'प्रकृत्या' स्वभावेन, 'मार्गगामित्वं' आगमविशुद्धत्वं चेतस इति गम्यते, 'सदपि' क्वचिद्विद्यमानमपि, अपिशब्दात् व्यक्तितः अविद्यमानमपि, अनेनैकान्तसत्त्वासत्त्वपक्षोक्तदोषः परिहृतो भवति, किमित्याह, 'व्यज्यते' व्यक्तं भवति, 'ध्रुवं' निश्चितम्, अनेन ज्ञानवृद्धप्रसादस्य मार्गगामित्वव्यञ्जकत्वं प्रत्यव्यभिचारिकारणतामाह, केनाभिव्यज्यत इत्याह, ज्ञानेन बोधेन वृद्धा महान्तो ज्ञानं वा वृद्धं येषां ते ज्ञानवृद्धाः तेषां प्रसादः प्रसन्नता 'ज्ञानवृद्धप्रसादः' तेन, किमभिव्यक्तिमात्रमेव, नेत्याह, 'वृद्धिं च' विपुलतां च, 'चशब्दः' समुच्चये,'आप्नोति' लभते, 'अनुत्तरां' अविद्यमानप्रधानतरां मार्गगामित्वमिति प्रकृतमिति ॥ ७ ॥

शुभानुबन्ध्यतः पुण्यं कर्तव्यमित्युक्तम्, अथ तदुपायोपदर्शनायाह ॥

दया भूतेषु वैराग्यं, विधिवद्गुरुपूजनम् ॥ विशुद्धा शीलवृत्तिश्च, पुण्यं पुण्यानुबन्ध्यदः ॥ ८ ॥

(वृत्तिः) 'दया' कृपा, 'भूतेषु' सामान्यता जीवेषु, 'वैराग्यं' विरागता द्वेषाभावाविनाभूतत्वाद्वैराग्यस्येति विगतद्वेषता च, विधिर्विधानं शास्त्रोक्तो न्यायश्रद्धासत्कारक्रमयोगादिः स विद्यते यत्र तत् 'विधिवत्', इह यद्यपि विधिमत् इति

२४. पुण्यानुबन्धिपुण्यादिविवरणाष्टकम्

श्लो० ७–८

शब्दः सिद्ध्यति तथाप्यैन्द्रादिव्याकरणप्रवीणत्वात् हरिभद्राचार्यस्य नापशब्दः शङ्कनीय इति, गृणन्ति शास्त्रार्थमिति गुरवः साधवः तेषां पूजनं भक्तपानवस्त्रपात्रप्रणामादिभिरभ्यर्चनं गुरुपूजनं, 'विशुद्धा' निरतिचारा, 'शीलवृत्तिः' हिंसानृतादत्ताब्रह्मपरिग्रहविरमणरूपकुशलानुष्ठानवर्तनम्, 'चशब्द' उक्तसमुच्चये अनुक्तगुणान्तरसमुच्चये वा, किमेतदित्याह, 'पुण्यं' शुभं कर्म, पुण्यकर्मबन्धहेतुत्वेनोपचारात्, किम्भूतमित्याह, 'पुण्यानुबन्धि' शुभकर्मसन्तानवत्, 'अद' एतदनन्तरोदितम्, ननु दया भूतेषु इह भूतग्रहणमनर्थकं यतो दया प्राणिगोचरैव दया हि दुःखितेषु भवति दुःखितत्वं च प्राणिनामेवेति, अत्रोच्यते, न भूतग्रहणमचेतनव्यवच्छेदार्थमपि तु भूतसामान्यग्रहणार्थं,तेन सर्वभूतेषु दया विधेयेत्युक्तं भवति॥ आह च॥"दट्ठूण पाणिनिवहं, भीमे भवसागरम्मि दुक्खत्तं॥ अविसेसओ णुकम्पं, दुहावि सामत्थओ कुणइ॥१॥त्ति२०॥"

चतुर्विंशतितमाष्टकविवरणं समाप्तम् ॥ २४ ॥

---

## ॥ अथ पञ्चविंशतितमं पुण्यानुबन्धिपुण्यप्रधानफलाष्टकम् ॥२५॥

पुण्यानुबन्धिपुण्यं स्वरूपत उपदर्शितमथ तदेव प्रधानफलतो दर्शयन्नाह ॥

**अतः प्रकर्षसम्प्राप्ता-द्विज्ञेयं फलमुत्तमम् ॥ तीर्थकृत्त्वं सदौचित्य-प्रवृत्त्या मोक्षसाधकम् ॥ १ ॥**

(वृत्तिः) 'अतः' एतस्मात्पुण्यानुबन्धिपुण्यात्, 'प्रकर्षसम्प्राप्तात्' अतिप्रकृष्टतां गतात्, 'विज्ञेयं' ज्ञातव्यम्, 'फलं' कार्यम्, उत्तमं प्रधानम्, 'तीर्थकृत्त्वं' तीर्थकरत्वम्, किंस्वरूपं तदित्याह, 'सदा' सर्वकालं आगर्भावस्थायाः, 'औचित्यप्रवृत्त्या'

---

२०. दृष्ट्वा प्राणिनिवहं भीमे भवसागरे दुःखार्तम् । अविशेषतोऽनुकम्पां द्विधापि सामर्थ्यतः करोति ॥ १ ॥

यथार्हप्रवर्तनेन, 'मोक्षसाधकं' निर्वाणप्रापकमिति ॥ १ ॥ औचित्यप्रवृत्तिमेवाप्तस्य सार्वदिकीं दर्शयितुमाह ॥

सदौचित्यप्रवृत्तिश्च, गर्भादारभ्य तस्य यत् ॥ तत्राप्यभिग्रहो न्याय्यः, श्रूयते हि जगद्गुरोः ॥२॥

(वृत्तिः) 'सदा' सर्वकालम्, 'औचित्यप्रवृत्तिः' सङ्गतासेवनम्, 'चशब्दः' पुनःशब्दार्थः, 'गर्भादारभ्य' गर्भावस्थामवधीकृत्य, 'तस्य' इति यः प्रकृष्टपुण्यानुबन्धिपुण्यफलभूतस्तीर्थङ्करस्तस्य, भवतीति शेषः, कुत एतदेवं सिद्धमित्याह 'यत्' यस्मात्कारणात्, 'तत्रापि' गर्भेऽपि, आस्तां प्रव्रज्याप्रतिपत्तौ, 'अभिग्रहः' प्रतिज्ञाविशेषो वक्ष्यमाणस्वरूपः, 'न्याय्यो' न्यायादनपेतः, 'श्रूयते' आकर्ण्यते, 'हिशब्दो' वाक्यालङ्कारे, 'जगद्गुरोः' त्रिलोकगौरवार्हस्य महावीरस्येति भावना ॥ २ ॥

किमर्थमसावभिग्रह इत्याह ॥

पित्रुद्वेगनिरासाय, महतां स्थितिसिद्धये ॥ इष्टकार्यसमृद्ध्यर्थ-मेवम्भूतो जिनागमे ॥ ३ ॥

(वृत्तिः) माता च पिता च पितरौ तयोरुद्वेगश्चित्तसंतापस्तस्य निरासोऽभावः पित्रुद्वेगनिरासस्तस्मै 'पित्रुद्वेगनिरासाय,' यतन्ते च महान्तो विश्वस्यापि उद्वेगनिरासार्थं तेषां तथास्वभावत्वात्, विशेषतः पुनः पित्रोः अतिदुष्प्रतिकारित्वात्तयोरिति, तथा 'महतां' महापुरुषाणाम्, 'स्थितिसिद्धये' व्यवस्थासाधनाय, अन्येऽपि महान्तो मातापित्रुद्वेगनिरासेन प्रवर्तन्तामित्येतदर्थं प्रधानमार्गानुसारित्वाज्जनस्येति, तथा 'इष्टकार्यं' वाञ्छितप्रयोजनं मोक्षार्थिनां मोक्षोपायभूता प्रव्रज्या तस्य समृद्धिर्निष्पत्तिरिष्टकार्यसमृद्धिः तस्यै इदं 'इष्टकार्यसमृद्ध्यर्थम्, इदं चाभिग्रहः कृत इति गम्यमानक्रियाविशेषणं मोक्षसिद्धिहेतोरित्यर्थः, सिध्यति हि मोक्ष उचितप्रवृत्त्या, अनुचितप्रवृत्तिस्तु तद्विघ्न इति, 'एवम्भूतो' वक्ष्यमाणस्वरूपोऽभिग्रह इति योगः, 'जिनागमे' आप्तवचने, श्रूयते इति सम्बन्धः, पठ्यते चावश्यकनिर्युक्तौ॥ "अह सत्तमम्मि मासे,

गब्भत्थो चेव अभिग्गहं गिण्हे ॥ नाहं समणो होहं, अम्मापियरम्मि जीवन्ते ॥१॥ त्ति[21] ॥ " ॥ ३ ॥

यथाभूतोऽभिग्रहः श्रूयते तथाभूतमेवाह ॥

जीवतो गृहवासेऽस्मिन्, यावन्मे पितराविमौ ॥ तावदेवाधिवत्स्यामि, गृहानहमपीष्टतः ॥ ४ ॥

(वृत्तिः) किल भगवान् श्रीमन्महावीरवर्धमानस्वामी देवभवाच्च्युत्वा पूर्वभवोपात्तनीचैर्गोत्राभिधानकर्मशेषवशात् ब्राह्मणकुण्डग्रामाभिधाननगरनिवासिऋषभदत्ताभिधानद्विजातिजायाया देवानन्दाभिधानायाः कुक्षावुत्पन्नः । अथ द्व्यशीतितमदिवसे सिंहासनचलनजनितावधिप्रयोगपुरन्दरप्रयुक्तहरिनैगमेषिनाम्ना देवेन क्षत्रियकुण्डाभिधाननगरनायकसिद्धार्थाभिधाननरपतिप्रधानपत्न्यास्त्रिशलाभिधानायाः गर्भे संक्रमितः । ततो देवानन्दामुपलब्धचतुर्दशमहास्वप्नापहारां सम्भावितगर्भसंहारां हृतसर्वस्वामिवातिशोकसागरमग्नामवधिनावबुध्याहोऽस्मन्निमित्तमेषानाख्येयदुःखमवाप्तेत्येवमेषापि त्रिशला मदङ्गचलनचेष्टानिमित्तमसुखमथ मा प्रापदित्यालोच्य निश्चलोऽवतस्थे । ततोऽसौ निष्पन्दतां गर्भस्यावगम्य गलितो गर्भो ममेति भावनया गाढतरं दुःखसमुदयमगमत् । ततो भगवांस्तद्दुःखविनोदाय स्फुरतिस्म, पर्यालोचयांचकार च, यदुतादृष्टेऽपि मयि मातापित्रोरहो गाढः स्नेहो दृष्टे पुनः परिचयादवगतगुणग्रामे गाढतरोऽसौ भावी, ततः प्रव्रजनतो वियुज्यमाने शोकातिशयान्महानन्तस्तापो भविष्यति, ततोऽनयोर्जीवतोस्तत्सन्तापपरिहारार्थमप्रव्रजितेन मया भाव्यमिति सप्तममासेऽभिग्रहं जग्राहेति श्लोकसमुदायार्थः । अक्षरार्थस्त्वयम् । 'जीवतः' प्राणान्धारयतः, 'पितरौ' इति योगः, 'गृहवासे' गृहस्थतायाम्, 'अस्मिन्' अधुनातने न पुनर्देवादिभवसंभवेऽपि, 'यावत्' यत्परिमाण-

२१. अथ सप्तमे मासे गर्भस्थ एव अभिग्रहं गृह्णाति । नाहं श्रमणो भविष्यामि अम्बापित्रोर्जीवतोरिति ॥१॥

मिति पितृजीवनक्रियाविशेषणम्, 'मे' मम सम्बन्धिनौ, 'इमौ' प्रत्यक्षासन्नौ त्रिशलासिद्धार्थलक्षणौ न पुनर्ऋषभदत्त-देवानन्दास्वरूपौ, 'तावदेव' तत्परिमाणमेव न पुनरधिकम्, विरतावभिष्वङ्गाच्चेत्थमुक्तमवधारणम्, एतच्चाधिवत्स्यामीतिक्रियाविशेषणम्, 'अधिवत्स्यामि' अध्यासिष्ये, 'गृहान्' गेहम्, गृहशब्दो हि पुल्लिङ्गो बहुवचनान्तोऽप्यस्तीति, अथवा राजत्वाद् बहुगृहाधिपतित्वमनेन दर्शितम्, 'अहमपि' न केवलं पितरौ गृहानधिवत्स्यत इति 'अपिशब्दार्थः,' इष्टमिच्छा तदाश्रित्य 'इष्टतः' इच्छया स्वच्छन्दतया, न पुनः पारवश्येन, इति भावः ॥ ननु तावन्तं कालं चारित्रमोहनीयकर्मविशेषोदये सति तस्य गृहावस्थानमन्यथा वा, तत्र यद्याद्यः पक्षस्तदा कर्मविशेषोदय एव तत्रावस्थानकारणं नाभिग्रहणं ततः किं तदभिग्रहणेन, अथ चारित्रमोहनीयविशेषोदयाभाव इति पक्षः, तदप्यसङ्गतम्, मोहकर्मविशेषोदयाभावे विरतेरेव भावेन गृहावस्थानासम्भवात्, व्यर्थमेवाभिग्रहकरणमिति, अत्रोच्यते । मोहनीयविशेषोदय एव तत्र तस्यावस्थानम्, किन्तु तत्कर्मणः सोपक्रमत्वेन पितृउद्वेगनिरासाद्यवलम्बनाभिग्रहानङ्गीकरणे विरतेरेव भावान्न गृहावस्थानहेत्वभिग्रहकरणमसङ्गतम्, उच्यते च सोपक्रमता कर्मणाम् ॥ यदाह ॥ "उदयक्खयक्खओवसमो-वसमा जं च कम्मुणो भणिया ॥ दव्वं खित्तं कालं भावं च भवं च संपप्प[२२] ॥१॥" तदिहोक्तविशेषणाभिग्रहलक्षणं भावमाश्रित्य तत्क्षयोपशम इति न व्यर्थमभिग्रहकरणमिति ॥४॥ ननूक्ताभिग्रहकरणात्पितृउद्वेगनिरासो महतां च स्थितिसिद्धिरिति सङ्गतम्, यत्पुनरिष्टकार्यसमृद्धिरिति, तदसाम्प्रतम्, गृहावस्थानस्य प्रव्रज्याविरोधित्वादित्यस्यामाशङ्कायामाह ॥

**इमौ शुश्रूषमाणस्य, गृहानावसतो गुरू ॥ प्रव्रज्याप्यानुपूर्व्येण, न्याय्याऽन्ते मे भविष्यति ॥ ५ ॥**

---

२२. उदयक्षयक्षयोपशमोपशमा यच्च कर्मणो भणिताः । द्रव्यं क्षेत्रं कालं भावं च भवं च संप्राप्य ॥ १ ॥

(वृत्तिः) 'इमौ' प्रत्यक्षासन्नौ, 'गुरू' इति सम्बन्धः, 'शुश्रूषमाणस्य' परिचरतो 'मे' इति योगः, तथा तच्छुश्रूषणार्थमेव 'गृहान्' गेहं, 'आवसतो' अधितिष्ठतः सतः, 'गुरू' मातापितरौ, 'प्रव्रज्यापि' चिकीर्षितानगारितापि, आस्तां पित्रुद्वेगनिरासादि, 'आनुपूर्व्येण' परिपाट्या, 'न्याय्या' न्यायोपपन्ना युक्तेत्यर्थः, 'अन्ते' गुरुशुश्रूषावसाने एव, 'मे' मम, 'भविष्यति' सम्पत्स्यते ॥ ५ ॥ कुत एतदेवमित्याह ॥

सर्वपापनिवृत्तिर्यत्, सर्वथैषा सतां मता ॥ गुरूद्वेगकृतोऽत्यन्तं, नेयं न्याय्योपपद्यते ॥ ६ ॥

(वृत्तिः) 'सर्वपापनिवृत्तिः' अशेषावद्यानुष्ठानव्युपरतिः, 'यत्' यस्मात्,' 'सर्वथा' सर्वैः प्रकारैर्निमित्तभावेनापि इत्यर्थः, 'एषा' प्रव्रज्या, 'सतां' विदुषाम्, 'मता' इष्टा, इह तस्मादिति शेषो दृश्यः, तस्मात् 'गुरूद्वेगकृतो' मातापितृचित्तसन्तापकारिणः, 'अत्यन्तं' अतिशयेन तदसम्बोधनपूर्वकं शास्त्रोक्ततत्सम्बोधनोपायाप्रयोगपूर्वकं वा प्रवृत्तस्य, 'न' नैव, 'इयं' प्रव्रज्या, 'न्याय्या' युक्ता, 'उपपद्यते' घटते, पितृसन्तापरक्षणोपायाप्रवृत्तत्वेन निमित्तभावेन तच्चित्तसन्तापलक्षणपापकारित्वात्तस्येति, परिहर्तव्यश्च तच्चित्तसन्तापः॥ यदाह॥ "अपडिबुज्झमाणे(अपडिबुद्धे)कहिंचि पडिबोहिज्जा अम्मापियरो(रे)[23]" प्रव्रज्याभिमुखीकुर्वीतेत्यर्थः। "अपडिबुज्झमाणेसु य कम्मपरिणईए विहिज्जा जहासत्ति तदुवगरणं ,, "तओ अणुन्नाए पडिवज्जिज्ज धम्मं[24]"॥ अथ नानुजानीत, तदा, "*अन्नहा अणुवहे चेव उवहिजुत्ते सिया" अल्पायुरहमित्यादिकां मायां कुर्यादित्यर्थः। एवमुपायप्रवृत्तमपि यदा न मुत्कलयतः, तदा तौ त्यजेत्। न च तौ त्यजतस्तच्चित्तसंतापेऽपि तस्य दोषो

२३. अप्रतिबुध्यमानौ (अप्रतिबुद्धौ) कथञ्चित्प्रतिबोधयेद् अम्बापितरौ॥ २४. अप्रतिबुध्यमानेषु च कर्मपरिणत्या विदध्याद्यथाशक्ति तदुपकरणं॥ ततोऽनुज्ञातः प्रतिपद्येत धर्मम्॥ *अन्यथा (तदनुज्ञाभावे) अनुपध एव (भावतः) उपधियुक्तः (व्याजवान्) स्यात्॥

विशुद्धभावत्वात् ॥ यदाह॥ "सव्वहा अपडिवज्जमाणे चएज्जा ते अद्धाणे (अट्ठाण) गिलाणोसहत्थचागनाएणं[२५]" यथाध्वनि ग्लानीभूतयोः पित्रोरौषधाद्यर्थं गच्छतस्तत्त्यागोऽत्याग एव भावतः, एवं तयोः स्वस्यान्येषां चोपकाराय प्रव्रजत इति ज्ञातभावना, अत एव॥ "सोयणमक्कन्दणविल-वणं च जं दुक्खिओ तओ कुणइ ॥ सेवइ जं च अकज्जं, तेण विणा तस्स सो दोसो[२६] ॥" (पञ्चवस्तु गा. ८०) इत्यादिकमाक्षिप्यैवं परिहृतम् ॥ "अब्भुवगमेण भणियं, न उ विहिचागो वि तस्स हेउत्ति ॥ सोगाइम्मि वि तेसिं, मरणेव्व विसुद्धचित्तस्स[२७] ॥२॥" (पञ्चवस्तु गा. ९०) क्वचित्पठ्यते 'सर्वपापनिवृत्तिर्या' इति तत्र व्याख्येयं 'सर्वथा सर्वपापनिवृत्तिर्या इतीतरैषा सतां मता, गुरूद्वेगकारिणश्चात्यन्तं नेयं सर्वपापनिवृत्तिर्न्याय्योपपद्यत इति ॥ ६ ॥ कस्मादेवमित्याह ॥

प्रारम्भमङ्गलं ह्यस्या, गुरुशुश्रूषणं परम् ॥ एतौ धर्मप्रवृत्तानां, नृणां पूजास्पदं महत् ॥ ७ ॥

(वृत्तिः) 'प्रारम्भमङ्गलं' आदिमङ्गलम् , 'हि' यस्मात् , 'अस्याः' प्रव्रज्यायाः, 'गुरुशुश्रूषणं' मातापितृपरिचरणम् , 'परं' प्रकृष्टं भावमङ्गलमित्यर्थः, प्रारम्भमङ्गलता एवास्य कुत इत्याह, 'एतौ' गुरू, 'धर्मप्रवृत्तानां' मोक्षहेतुसदनुष्ठानसमुपस्थितानाम्, 'नृणां' पुंसाम् , नृग्रहणं च प्रधानतया तेषां, न तु तदन्यव्यवच्छेदार्थम् , 'पूजास्पदं' अर्हणास्पदम्, 'महत्' गुरुकम् ॥ यदाह ॥ मातापितृपूजा, आमुष्मिकयोगकारणम् ॥ तदनुज्ञया प्रवृत्तिः॥ प्रधानाभिनवोपनयनम् ॥ तदभोगोऽ-

२५. सर्वथा अप्रतिपद्यमानान् त्यजेत् तान् अध्वनि (अस्थान) ग्लानौषधार्थत्यागज्ञातेन ।
२६. शोचनमाक्रन्दनविलपनं च यदुःखितस्ततः करोति । सेवते यच्चाकार्यं तेन विना तस्य स दोषः ॥
२७. अभ्युपगमेन भणितं न तु विधित्यागोऽपि तस्य हेतुरिति । शोकादावपि तेषां मरणं इव विशुद्धचित्तस्य ॥

भोगोऽन्यत्र तदनुचितादिति ॥ ७ ॥ पूजास्पदत्वमेव समर्थयन्नाह ॥

स कृतज्ञः पुमान् लोके, स धर्मगुरुपूजकः ॥ स शुद्धधर्मभाक् चैव, य एतौ प्रतिपद्यते ॥ ८ ॥

(वृत्तिः)'स' इति य एतौ प्रतिपद्यते असावेव, 'कृतज्ञः' पितृकृतोपकारज्ञाता, 'पुमान्' नरः, 'लोके' लौकिकमार्गे, तथा 'स' एष (व)'धर्मगुरोः'दीक्षाचार्यस्य 'पूजकः' पूजयिता 'धर्मगुरुपूजकः,' भविष्यतीति गम्यते नान्यः, यदाह॥ "उपकारीति पूज्यः स्याद्गुरु चाप्युपकारिणौ॥ तावप्यर्चयते यो न, स हि धर्मगुरुं कथम् ॥१॥" तथा 'स' इति स एव, 'शुद्धधर्मभाग्' निर्दोषकुशलधर्मभाजनं, भवति, 'चशब्दः' समुच्चये, 'एवशब्दो'ऽवधारणे, तस्य च दर्शितः प्रयोगः, 'यः' पुमान्, 'एतौ' मातापितरौ, 'प्रतिपद्यते' सेवनतोऽङ्गीकरोति, दुष्प्रतिकारित्वात्तयोः॥ आह च॥ दुष्प्रतिकारौ माता–पितरौ स्वामी गुरुश्च लोकेऽस्मिन्॥ तत्र गुरुरिहामुत्र च, सुदुष्करतरप्रतीकारः॥" ॥१॥ इति ॥८॥ पञ्चविंशतितमाष्टकविवरणं समाप्तम् ॥२५॥

---

## ॥ अथ षड्विंशतितमं तीर्थकृद्दानमहत्त्वसिद्ध्यष्टकम् ॥ २६ ॥

प्रकर्षवतः पुण्यानुबन्धिपुण्यस्य तीर्थकरत्वफलमुक्तम्, तीर्थकरस्य च पुण्यप्रकर्षरूपत्वेन जगद्गुरुत्वाद्दानेन महता भाव्यम्, सङ्ख्यावच्च तत्तस्य श्रूयत इति कथं तद्दानस्य महत्त्वमित्यधुनोपदर्शयन्नाह ॥

जगद्गुरोर्महादानं, सङ्ख्यावच्चेत्यसङ्गतम् ॥ शतानि त्रीणि कोटीनां, सूत्रमित्यादि चोदितम् ॥ १ ॥

(वृत्तिः)'जगद्गुरोः'भुवनभर्तुर्जिनस्य,'महादानं'अतिशायिवितरणं वरवरिकारूपम्,'सङ्ख्यावच्च' परिगणितम्,'चशब्दः' समुच्चये, 'इति' एतत्, 'असङ्गतम्' विरुद्धम्, तथाहि, महादानं चेत्सङ्ख्यावत् कथम्, सङ्ख्यावच्चेन्महादानं कथमिति,

सङ्ख्यावत्त्वं तस्य कथं सिद्धमित्यारेकायामाह, यतः 'शतेत्यादि,' इह च "शतानि त्रीणि कोटीनां" इत्यतः परं इत्यादीति पदं द्रष्टव्यम्, ततश्च 'शतानि त्रीणि कोटीनामित्यादि' एवंप्रभृति, आदिशब्दात् 'अट्ठासीइं च होंति कोडीओ' (अष्टाशीतिश्च भवन्ति कोटयः) इत्यादेः परिग्रहः। 'सूत्रं' अर्थसूचनपरं वचनम्, 'चोदितं' उदितम्, तच्चेदम्, "तिन्नेव य कोडिसया, अट्ठासीइं च होंति कोडीओ ॥ असीइं च सयसहस्सा, एयं संवच्छरे दिन्नम्[२८] ॥१॥" पाठान्तरेण 'शास्त्र इत्यादि चोदित'-मिति तत्र 'शास्त्रे' आगमे, शेषं तथैवेति परवच इति ॥ १ ॥

एवं जिनस्य महादानविरुद्धतामभिधाय बुद्धस्य महादानसाङ्गत्यमभिधातुं पर एवाह ॥

अन्यैस्त्वसङ्ख्यमन्येषां, स्वतन्त्रेषूपवर्ण्यते ॥ तत्तदेवेह तद्युक्तं, महच्छब्दोपपत्तितः ॥ २ ॥

(वृत्तिः) 'अन्यैस्तु' अपरैः पुनर्जैनापेक्षया बौद्धैः, 'असङ्ख्यं' अविद्यमानपरिमाणम्, 'अन्येषां' जिनादपरेषां बोधिसत्त्वानाम्, 'स्वतन्त्रेषु' स्वकीयशास्त्रेषु, 'उपवर्ण्यते' प्रतिपाद्यते॥तद्यथा॥ "एते हाटकराशयः प्रवितताः शैलप्रतिस्पर्धिनो, रत्नानां निचयाः स्फुरन्ति किरणैराक्रम्य भानोः प्रभाम् ॥ हाराः पीवरमौक्तिकौघरचितास्तारावलीभासुरा, यानादाय निजानिव स्वगृहतः स्वैरं जनो गच्छति ॥१॥" 'तत्' इति तस्मात् 'तदेव' बुद्धदानमसङ्ख्यातमेव, 'इह' दानविचारे, 'तत्' इति महादानम्, 'युक्तं' सङ्गतम्, कुत इत्याह 'महच्छब्दोपपत्तितः' महद्ध्वनेस्तत्रैव बुद्धदान उपपद्यमानत्वात्, सङ्ख्यातदानापेक्षया असङ्ख्यातदानस्यानुपचरितमहत्त्वसिद्धेरिति ॥ २ ॥ ततः किमित्यत आह ॥

ततो महानुभावत्वा-त्तेषामेवेह युक्तिमत् ॥ जगद्गुरुत्वमखिलं, सर्वं हि महतां महत् ॥ ३ ॥

---

२८. त्रीण्येव च कोटिशतानि अष्टाशीतिश्च भवन्ति कोटयः । अशीतिश्च शतसहस्राणि एतत् संवत्सरे दत्तम् ॥ १ ॥

(वृत्तिः) यतो बोधिसत्त्वानां महच्छब्दोपपत्तितो महादानं युक्तं 'ततः' तस्मान्महादानयोगात्, 'महानुभावत्वात्' अचिन्त्यशक्तियुक्तत्वात्, 'तेषामेव' बोधिसत्त्वानामेव, न जिनस्य, 'इह' अस्मिन् लोके,'युक्तिमत' सोपपत्तिकम्, किं तदित्याह, 'जगद्गुरुत्वं' भुवनभर्तृत्वम्, किम्भूतमित्याह, अविद्यमानं खिलं गुरुत्वाविषयो यत्र जगद्गुरुत्वे तत् 'अखिलं' सर्वव्यापकं सम्पूर्णमिति यावत्, कुत एतदेवमित्याह,'सर्वं' निरवशेषं दानादिक्रियाजालम्,'हि' यस्मात्,'महतां' महासत्त्वानाम्, 'महत्' सातिशयं भवति, अतो महादानयोगात्त एव महानुभावा जगद्गुरवश्च भवन्ति नान्य इति, इह च तेषामिति धर्मी, जगद्गुरुत्वं साध्यम्, महानुभावत्वं हेतुः, महतां महदिति च हेत्वसिद्धतापरिहार इति ॥३॥ पूर्वपक्षमुपसंहरन्नाह ॥

एवमाहेह सूत्रार्थं, न्यायतोऽनवधारयन् ॥ कश्चिन्मोहात्ततस्तस्य, न्यायलेशोऽत्र दर्श्यते ॥ ४ ॥

(वृत्तिः) 'एवं' अनन्तरोक्तप्रकारम्,'आह' ब्रूते पूर्वपक्षवादी,'इह' प्रक्रमे,'सूत्रस्य'"तिन्नेव य कोडिसया," इत्यादेरागमस्य, 'अर्थः' अभिधेयः'सूत्रार्थः',तमनवधारयन्निति योगः, किं सर्वथानवधारयन्,नेत्याह,'न्यायतो' नीतिमाश्रित्यार्थोपपत्तिगम्यमर्थमित्यर्थः, 'अनवधारयन्' अनवबुध्यमानः, 'कश्चित्' इत्यसम्बद्धभाषित्वात् अनिर्देश्यनामा सौगत इति भावः। 'मोहात्' अज्ञानात्, यत एवं 'ततः' तस्मात्कारणात्, 'तस्य' मूढवादिनः, 'न्यायलेशो' युक्तिमात्रा, 'अत्र' दानव्यतिकरे, 'दर्श्यते' अभिधीयत इति ॥ ४ ॥ तत्प्रतिपादनायैवाह ॥

महादानं हि संख्याव-दर्थ्यभावाज्जगद्गुरोः ॥ सिद्धं वरवरिकात-स्तस्याः सूत्रे विधानतः ॥ ५ ॥

(वृत्तिः) 'महादानं' अतिशायिविश्राणनम्,'हिशब्दो' दानमहत्त्वभावनार्थः, यत् 'संख्यावत्' विद्यमानपरिमाणम्, तत् 'अर्थ्यभावात्'प्रयोजनिनामविद्यमानत्वात्, न पुनरौदार्याभावात् द्रव्याभावाद्वा, 'जगद्गुरोः' भुवननायकस्य जिनस्य, कुत

२६. तीर्थकृद्दानमहत्त्वसिद्ध्यष्टकम्

एतदवगतमित्याह, 'सिद्धं' निर्णीतम् , वरं वृणुत वरं वृणुतेत्येवमाख्यानं वरवरिका तस्याः 'वरवरिकातः' हेतोः, न च तस्या अप्यसिद्धिरित्याह, 'तस्या' वरवरिकायाः, 'सूत्रे' निर्युक्तिरूपे आगमे, 'विधानतो' विहितत्वात् , तथाहि, "सिंघाडगतियचउक्क-चच्चरचउम्मुहमहापहपहेसु॥ दारेसु पुरवराणं,रत्थामुहमज्झयारेसु॥१॥वरवरिया घोसिज्जइ, किमिच्छियं दिज्जए बहुविहीयं ॥ सुरअसुरदेवदाणव-नरिन्दमहियाण निक्खमणेत्ति ॥२॥ २९ " ॥५॥

अथ वरवरिकया दीयमानमर्थ्यभावात् तत्संख्यात्वदिति कुतः सिद्धमित्यत्राह ॥

तया सह कथं संख्या, युज्यते व्यभिचारतः ॥ तस्माद्यथोदितार्थं तु, संख्याग्रहणमिष्यताम् ॥ ६ ॥ श्लो० ७

(वृत्तिः) 'तया' वरवरिकया, 'सह' सार्धम् , 'कथं' केन प्रकारेण न कथञ्चिदित्यर्थः, 'संख्या' परिमाणम् , ' युज्यते ' सङ्गच्छते, कुत इत्याह, 'व्यभिचारतो' विसंवादात् , अर्थिसद्भावे सतीति गम्यम् , तथाहि, अर्थिनः प्रभूता महेच्छाश्च दानं वरवरिकया दीयत इति कथं तन्नियतसंख्यं भवितुमर्हति, यस्मादेवं 'तस्मात् यथोदितार्थं तु' अनन्तरास्मदुक्तप्रयोजनमेव तथाविधार्थ्यभावप्रतिपादनार्थपरमेव,'संख्याग्रहणं' "तिन्नेव य कोडिसया" इत्यादिदानसंख्याविधानम् ,'इष्यतां' अभ्युपगम्यतां, न पुनरौदार्याभावद्रव्याभावाभ्यामिति । ननु यदि तीर्थकरानुभावादशेषदेहिनां संतोषभावादर्थ्यभावः स्यात्तदा संख्याकरणमप्ययुक्तम् , अल्पस्यापि दानस्यासम्भवादिति, अत्रोच्यते, देवताशेषाया इव संवत्सरमात्रेणाप्रभूतप्राणिग्राह्यत्वाद्युक्तमेव संख्यावत्त्वमिति, अनेन महादानं संख्यावच्चेत्यसङ्गतम् ' इत्येतत्परवचो निरस्तमिति ॥ ६ ॥

२९. शृङ्गाटकत्रिकचतुष्कचत्वरचतुर्मुखमहापथपथेषु ॥ द्वारेषु पुरवराणां रथ्यामुखमध्येषु ॥ १ ॥
वरवरिका घोष्यते किमीप्सितं दीयते बहुविधिकं ॥ सुरासुरदेवदानवनरेन्द्रमहितानां निष्क्रमणे ॥२॥ इति ॥

अथ यदुक्तं ततो महानुभावत्वादित्यादि तद्दूषयन्नाह ॥

महानुभावताप्येषा, तद्भावे न यदर्थिनः ॥ विशिष्टसुखयुक्तत्वा-त्सन्ति प्रायेण देहिनः ॥ ७ ॥

(वृत्तिः) 'महानुभावतापि' अतिशायिप्रभावतापि, न केवलं 'देहिनां' संतोषसंपत्संपादनेन संख्योपेतमेव 'दानं' महादानमित्यपिशब्दार्थः, 'एषा' एषैव वक्ष्यमाणस्वरूपा न पुनर्देहिनामसंख्यातवित्तवितरणरूपा, तामेवाह, 'तद्भावे' जगद्गुरुसद्भावे, 'न' नैव, 'यत्' इति यदेतत्, 'अर्थिनः' तुच्छतया परप्रार्थनशीलाः सन्तीति सम्बन्धः, कुत इत्याह, 'विशिष्टसुखयुक्तत्वात्' अपेक्षया सातिशयानन्दसम्पदुपेतत्वात्, सुखं च संतोषो, यदाह॥"सज्ज्ञानं परमं मित्र-मज्ञानं परमोरिपुः॥ संतोषः परमं सौख्य(ख्य)माकाङ्क्षा दुःखमुत्तमम् ॥१॥" 'सन्ति' भवन्ति, 'प्रायेण' बाहुल्येन, अनेन च निरुपक्रमकर्मजनितधनादानवाञ्छास्तद्भावेऽप्यर्थिनः केचित्सम्भवन्तीत्यावेदयति, भवति चैवं॥ यतः॥ "जगत्प्रिये सुरूपे च, शशिनो रश्मिमण्डले। सत्यप्यम्भोजिनीखण्डं, न विकासं प्रपद्यते ॥" अत एव संख्यातदानसंभवोऽन्यथा तदसम्भव एव स्यादिति, 'देहिनः' प्राणिनः, दृश्यन्ते च द्रव्याणां प्रभावविशेषाः, यतः॥ "समुद्गच्छत्यसौ कोपि, हेतुर्गगनमण्डले ॥ यस्मात्प्रमुदितप्राणि, जायते जगतीतलम् ॥१॥" तदेवमसंख्येयदानस्य महादानत्वाभावादसंख्येयदानदायिनां महानुभावत्वासिद्धेर(रित्य)सिद्धो हेतुरित्यभिहितम् ॥ ७ ॥ तथा।

धर्मोद्यताश्च तद्योगा-त्ते तदा तत्त्वदर्शिनः ॥ महन्महत्त्वमस्यैव-मयमेव जगद्गुरुः ॥ ८ ॥

(वृत्तिः) 'धर्मोद्यताश्च' कुशलानुष्ठाननिरताश्च भवन्ति न केवलमनर्थिन इति चशब्दार्थः, 'तद्योगात्' जगद्गुरुसम्बन्धात्, 'ते' देहिनः, 'तदा' तस्मिन् जगद्गुरुकाले, तथा 'तत्त्वदर्शिनो' भवन्ति, अथवा कुतस्ते धर्मोद्यता इत्याह यतः 'तत्त्वदर्शिनः,

तत्त्वं च॥ "क्लेशायासपराः प्रायः, प्राणिनां बाह्यसंपदः॥ एकान्तेनापरायत्तं, सुखं संतोष इष्यते॥१॥" इत्यादिकम्, ततश्च किमित्याह, 'महद्' अतिशायि, 'महत्त्वं' माहात्म्यं महानुभावत्वम्, अथवा महद्भ्यो महतां वा महत्त्वं 'महन्महत्त्वम्,' 'अस्य' जिनस्यैव, व्यवच्छेदफलत्वाद्वचनस्येति नान्येषां बोधिसत्त्वादीनाम्, 'एवम्' अनन्तरोदितया नीत्या संख्यावद्दानतो महादानदायित्वेन महानुभावता इत्येवंरूपया, 'अयमेव' जिनपतिरेव न तु बोधिसत्वः, 'जगद्गुरुः' भुवनभर्तेति, अनेन च बोधिसत्त्वलक्षणे धर्मिणि महानुभावत्वलक्षणस्य हेतोरसिद्धतोक्ता महानुभावत्वनिबन्धनमहादानस्यामहत्त्वख्यापनात्, जिनलक्षणे च धर्मिणि महादानताख्यापनतो महानुभावत्वहेतोः सिद्धताभिधानेन जिनस्य जगद्गुरुतोक्ता, अतो निरस्तं 'ततो महानुभावेत्यादि' दूषणमिति ॥ ८ ॥ षड्विंशतितमाष्टकविवरणं समाप्तम् ॥ २६ ॥

## ॥ अथ सप्तविंशतितमं तीर्थकृद्दाननिष्फलतापरिहाराष्टकम् ॥

अनन्तरं जगद्गुरोर्महादानमुक्तम् तच्च न युक्तमिति परमतमावेदयन्नाह ॥

**कश्चिदाहास्य दानेन, क इवार्थः प्रसिध्यति ॥ मोक्षगामी ध्रुवं ह्येष, यतस्तेनैव जन्मना ॥ १ ॥**

(वृत्तिः) अथ 'कश्चित्' दुर्विदग्धमतिः, 'आह' ब्रूते, 'अस्य जगद्गुरोः, 'दानेन' वितरणेन, 'क इव' न कश्चिदित्यर्थः, 'अर्थः' पुरुषार्थः धर्मार्थकाममोक्षाणामन्यतमः, फलं वा, 'प्रसिध्यति' निष्पद्यते, अर्थादिषु तस्य निरपेक्षत्वाद्दानधर्मस्य च तत्कारणत्वात्, मोक्षार्थः सिध्यतीति चेत्, नेत्याह, 'मोक्षं' निर्वाणम्, गमिष्यति यास्यतीति 'मोक्षगामी' 'ध्रुवं' निश्चितम्, हिशब्दो जिनदानस्य प्रयोजनाभावभावनार्थः, 'एष' जगद्गुरुः, 'यतो' यस्मात् कारणात्, 'तेनैव' अधिकृतेन यस्मिन्

जन्मनि दानं ददाति न जन्मपरम्परया, 'जन्मना' भवेन, दानं हि भवपरम्परया मोक्षफलं येन च तद्भवेनैवावश्यं निर्वा-(र्वर्ति) तव्यं तस्य दानेन न कश्चिदर्थ इति ॥ १ ॥ अत्रोत्तरमाह ॥

उच्यते कल्प एवास्य, तीर्थकृन्नामकर्मणः ॥ उदयात्सर्वसत्त्वानां, हित एव प्रवर्त्तते ॥ २ ॥

(वृत्तिः) 'उच्यते' अनन्तरोदिताक्षेपस्य समाधिरभिधीयते, कल्पशब्दः करणार्थो, यदाह॥"सामर्थ्ये वर्णनायां च, च्छेदने करणे तथा ॥ औपम्ये चाधिवासे च, कल्पशब्दं विदुर्बुधाः ॥१॥" करणं च क्रियासमाचार इत्यर्थः, ततश्च 'कल्प एव' जीतमेव वक्ष्यमाणो दानादिना सर्वसत्त्वहितवर्तनलक्षणः, 'अस्य' जगद्गुरोः, न पुनः फलविशेषं प्रति प्रत्याशा, किंरूपोऽसौ कल्प इत्याह, तीर्थकृतस्तीर्थकरस्य सम्बन्धि तीर्थकरत्वनिबन्धनं यन्नामाख्यं कर्मादृष्टं तत्तथा तस्य 'तीर्थकृन्नामकर्मणः,' 'उदयात्' विपाकात्, 'सर्वसत्त्वानां' सकलशरीरिणाम्, इह च हितशब्दयोगेऽपि न चतुर्थी, सम्बन्धस्यैव विवक्षितत्वात्, 'हिते एव' अनुकूलविधावेव, इह यदिति शेषो दृश्यः तेन यदेतत् प्रवर्तते व्याप्रियते भगवानिति, ततश्चास्य दानात् कल्पपरिपालनं विना नान्यत्फलमस्तीति भावनेति ॥ २ ॥ परिहारान्तरमाह ॥

धर्माङ्गख्यापनार्थं च, दानस्यापि महामतिः ॥ अवस्थौचित्ययोगेन, सर्वस्यैवानुकम्पया ॥ ३ ॥

(वृत्तिः) धर्मस्य कुशलात्मपरिणामविशेषस्याङ्गमवयवः कारणं वा धर्माङ्गं तस्य ख्यापनं प्रकाशनं धर्माङ्गख्यापनं तस्मै 'धर्माङ्गख्यापनार्थं' भावप्रत्ययगर्भत्वान्निर्देशस्य धर्माङ्गताख्यापनार्थमिति द्रष्टव्यं महादानं दत्तवानिति प्रक्रमगम्यम्, धर्माङ्गं दानम्, भगवता प्रवृत्तत्वात्,शीलवत्,इति भव्यजनसम्प्रत्ययार्थमित्यर्थः, 'चशब्दः'पूर्वोक्तपरिहारापेक्षया परिहारान्तरसमुच्चयार्थः। कस्येत्याह 'दानस्यापि' विश्राणनस्यापि, न केवलं शीलादेर्धर्माङ्गतेत्यपिशब्दार्थः,'महामतिः' अव्याहतबोधो

भगवान्, किं यथाकथञ्चिदस्य धर्माङ्गतायाः ख्यापनं नेत्याह, अवस्थाया भूमिकाया औचित्ययोग आनुरूप्यलक्षणधर्मसम्बन्धः 'अवस्थौचित्ययोगः' तेन स्वभूमिकोचितत्वेनेत्यर्थः, धर्माङ्गता च तस्य किं गृहिणामेव, नेत्याह, 'सर्वस्यैव' एवशब्दस्यापिशब्दार्थत्वात् न केवलं गृहिण एव निरवशेषस्यापि दातुर्यतेर्गृहिणो वा, 'अनुकम्पया' कृपया, ननु गृहिणामनुकम्पादानमुचितम्, "अणुकम्पादाणं पुण, जिणेहिं न कयाइ पडिसिद्धं॥३०" इति वचनात्, यत्पुनः साधुः साधवे ददाति तदनुकम्पानिमित्तं न भवति, भक्तिनिमित्तत्वात् तस्य, यत्पुनरसंयताय दानं तत्साधोर्न सम्भवति, "गिहिणो वेयावडियं न कुज्जा, अभिवायणं वन्दणं पूयणं च॥३१" इति वचनात्, (दशवैकालिकद्वितीयचूलिकायाम्) ततः सर्वस्यापि गृहस्थस्येति व्याख्येयम्, नैवम्, यतो विशिष्टपुष्टालम्बनसद्भावे यतेरप्यनुकम्पादानसम्भव इति न दोषः, अमुं चार्थं ग्रन्थकार एव व्यक्तीकरिष्यति, श्रूयते चागमे आर्यसुहस्त्याचार्यस्य रङ्कदानम्, न चानुकम्पादानं साधुषु न सम्भवति, "आयरियणुकम्पाए, गच्छो अणुकम्पिओ महाभागो॥३२" इति वचनादिति ॥ ३ ॥ धर्माङ्गमेव दानं यतः ॥

शुभाशयकरं ह्येत-दाग्रहच्छेदकारि च ॥ सदभ्युदयसाराङ्ग-मनुकम्पाप्रसूति च ॥ ४ ॥

(वृत्तिः) शुभं प्रशस्तमाशयं चित्तं कर्तुं शीलमस्येति 'शुभाशयकरम्', 'हि' इति यस्मादेवं तस्माद्धर्माङ्गता दानस्येति प्रकृतम् 'एतत्' इति दानम्, तथा 'आग्रहच्छेदकारि च' वित्तं प्रति ममकारलक्षणाभिनिवेशनाशकर्तृ च, 'चशब्दः' समुच्चये, तथा सन् शोभनोऽभ्युदयान्तरानुबन्धित्वेन योऽभ्युदयः कल्याणावाप्तिस्तस्य साराङ्गं प्रधानकारणं 'सदभ्युदयसाराङ्गम्,'

३०. अनुकम्पादानं पुनर्जिनैर्न कदापि प्रतिषिद्धम्। ३१. गृहिणो वैयावृत्त्यं न कुर्यात् अभिवादनं वन्दनं पूजनं च ॥
३२. आचार्यानुकम्पया गच्छोऽनुकम्पितो महाभागः।

आह च। "दानेन भोगानाप्नोति, यत्र य (त)त्रोपपद्यते ॥ शीलेन भोगान् स्वर्गं च, निर्वाणं चाधिगच्छति, ॥१॥" तथा अनुकम्पाया दयायाः सकाशात् प्रसूतिः प्रभवो यस्य तत् 'अनुकम्पाप्रसूति,' 'चशब्दः' समुच्चय इति ॥ ४ ॥

यतिनाप्यौचित्येन दानं देयमिति ज्ञापकेन समर्थयन्नाह ॥

**ज्ञापकं चात्र भगवान्, निष्क्रांतोऽपि द्विजन्मने ॥ देवदूष्यं ददद्धीमा–ननुकम्पाविशेषतः ॥ ५ ॥**

(वृत्तिः) 'ज्ञापकं च' उदाहरणं पुनः चशब्दस्य पुनरर्थत्वात्, 'अत्र' अनुकम्पया दाने, 'भगवान्' वर्धमानस्वामी, किम्भूतो 'निष्क्रान्तोऽपि' प्रव्रज्याप्रतिपत्त्या गृहवासान्निर्गतोऽपि, आस्तामनिर्गतः, 'द्विजन्मने' ब्राह्मणाय, 'देवदूष्यं' देवांशुकम्, 'ददत्' प्रयच्छन्, 'धीमान्' ज्ञानचतुष्टययोगान्महाप्रज्ञः, अनेन च "ज्ञानवदासेवितमालम्बनीयं भवति" इत्यावेदितम्, कुतो ददद्दित्याह, 'अनुकम्पाविशेषतः' दयातिशयादिति, उदाहरणप्रयोगश्चैवम्, यतेरप्यवस्थाविशेषे असंयताय दानमदुष्टम्, अनुकम्पानिमित्तत्वात्, यदनुकम्पानिमित्तं तददुष्टं निष्क्रान्तस्य भगवतो द्विजन्मदानवत्, अनुकम्पानिमित्तं च यतेरसंयतदानम्, तस्मात् तददुष्टमिति, अथवा 'ज्ञापकं' हेतुरित्यर्थः, तत्र चैवं प्रयोगः, यद्भगवदासेवितं तद्यतीनां सेवनीयं शीलमिव, आसेवितं च भगवता असंयतदानमिति। श्रूयते च, "किल भगवान्महावीरो महामेघ इवानवरतवसुधाराभिः प्रहतपटुपटहकनादगर्जितध्वनिना निर्विभागं संवत्सरं यावद्दानवर्षेण विगतवित्तवाञ्छापिपासासन्तापं तर्षुकलोकचातककुटुम्बकं कृत्वा अमरनरनायकनिकरानुगम्यमानो ज्ञातखण्डवनमुपागत्य परित्यक्तसकलसङ्गः प्रव्रज्यां प्रतिपन्नवान्। अत्र चावसरे भगवत्पितृवयस्यो ब्राह्मणो देशान्तरसरणपरिक्षीणशरीरकः स्वकीयनिकेतनमागतो भार्यया चाभिहितः यदुत भगवान्निखिलभूतलमापूर्णमनरथं वरवरिकावितरणतो विधायानगारितां गतः। भवांस्तु निर्भाग्यतया अर्थार्थी देशान्तरा-

ण्यनुसरति, ततस्त्वरितं गत्वा भगवन्तं याचस्व, दास्यतीदानीमपि किञ्चिदिति। ततोऽसौ भगवत्समीपमागत्य याचितवान्, भगवांस्तु नाकनायकसमर्पितस्य कल्प इति गृहीतस्य देवदूष्यस्यार्धमनुकम्पापरीतान्तःकरणो गुणान्तरापेक्षी तस्मै प्रदत्तवानिति"। नन्विहैव ग्रन्थे "तस्यानुकम्पया दाने पुण्यबन्धः प्रकीर्तितः" (७-२) इत्यादिना यतेरसंयतदानं निवारितम्, "गिहिणो वेयावडियं न कुज्जा" (गृहिणो वैयावृत्त्यं न कुर्यात्) इत्यादिना चागमे, तत्कथं न विरुध्यते। उच्यते, अवस्थौचित्ययोगेनेति विशेषणोपादानान्न विरोधः, पठन्ति चेहार्थे लौकिका अपि ॥ "उत्पद्यते हि सावस्था, देशकालामयान् प्रति ॥ यस्यामकार्यं कार्यं स्या-त्कर्म कार्यं च (तु) वर्जयेत् ॥ १ ॥ इति ॥ ५ ॥ एतदेव स्फुटयन्नाह ॥



श्लो० ६

इत्थमाशयभेदेन, नातोऽधिकरणं मतम् ॥ अपि त्वन्यद्गुणस्थानं, गुणान्तरनिबन्धनम् ॥ ६ ॥

(वृत्तिः) 'इत्थं' अनेनानन्तरोक्तेनावस्थौचित्ययोगलक्षणेन, य 'आशयभेदो' अध्यवसायविशेषोऽनुकम्पाविशेषः कथमयं वराकः कर्मकान्तारोत्तारणेन निखिलासुखविरहभाजनं भविष्यतीत्यादिरूपस्तेन, 'न' नैव, 'अतो' असंयतदानात्, अधिक्रियते प्राणी दुर्गतावनेनेति 'अधिकरणं' दानेनासंयतस्य सामर्थ्यपोषणतः पापारम्भप्रवर्तनम्, 'मतं' इष्टं वदुषाम्, यतस्तद्वाधिकरण यद्दुर्गतिनिबन्धनं, यत्पुनर्देहिनां बोधिनिमित्ततयापवर्गकारणं तत्कथं तदिति, अनेन च दानादनर्थस्यासंभव उक्तः। अथ अर्थप्राप्तिमाह, 'अपि तु' इत्यभ्युच्चये, 'अन्यत्' अधिकृतगुणस्थानकान्मिथ्यादृष्टित्वादेरपरमविरतसम्यग्दृष्ट्यादिकम्, गुणानां ज्ञानादीनां स्थानं विशेषो 'गुणस्थानं' मतमिति प्रकृतम्, किम्भूतम्, विवक्षितगुणादन्यो गुणो गुणान्तरं सर्वविरत्यादिस्तस्य निबन्धनं हेतु 'गुणान्तरनिबन्धनमिति' ॥ ६ ॥ ननु यद्यतोऽसंयतदानादधिकरणं न भवति तदा कथमस्य प्रशंसाया अपि निषेधपरं सूत्रमिदं न विरुध्यते, यदुत॥ जे उ दाणं पसंसन्ति, वहमिच्छन्ति पाणिणं ॥ जे उ (य) णं

पडिसेहन्ति, वित्तिच्छेयं करन्ति ते॥१॥[34] " इत्येतदाशङ्क्याह ॥

ये तु दानं प्रशंसन्ती-त्यादिसूत्रं तु यत्स्मृतम् ॥ अवस्थाभेदविषयं, द्रष्टव्यं तन्महात्मभिः ॥ ७ ॥

(वृत्तिः)'ये तु' ये पुनः धर्मविचारकाः,'दानं' असंयताय वितरणं जीवोपमर्दका(द्वा)रकत्वात्,'प्रशंसन्ति' श्लाघन्ते,'इत्यादि' एतदालापकप्रभृतिकमनन्तरोपदर्शितमसंयतदाननिषेधगर्भार्थम्, 'सूत्रं' अर्थसूचकवाक्यम्, 'तुशब्दः' पुनःशब्दार्थः, 'यत्स्मृतं' अभिहितं सूत्रकृताङ्गे, 'अवस्थाभेदविषयं' दातृपात्रयोर्दशाविशेषगोचरमपुष्टालम्बनमित्यर्थः, पुष्टालम्बनं त्वाश्रित्य न निषेधपरं तत्, यदाह ॥ "सालम्बणो पडन्तो वि, अप्पयं दुग्गमे वि धारेइ ॥ इय सालम्बणसेवी, धारेइ जई असढभावा[35] ॥१॥ " 'द्रष्टव्यं' विज्ञेयम्,'तत्' इत्यनन्तरोक्तं सूत्रम्,'महात्मभिः' सद्भिरिति। स्वकीयासंयतदानसमर्थन-गर्भार्थमिदं प्रकरणं सूरिणा कृतमिति केचित्कल्पयन्ति, हरिभद्राचार्यो हि स्वस्य भोजनकाले शङ्खवादनपूर्वकमर्थिभ्यो भोजनं दापितवानिति श्रूयते, न चैतत्सम्भाव्यते, संविग्नपाक्षिको ह्यसौ, न च संविग्नस्य तत्पाक्षिकस्य वाऽनागमिकार्थोपदेशः सम्भवति, तत्त्वहानिप्रसंगात्, आह च॥ "संविग्गोऽणुवएसं, न देइ दुब्भासियं कडुविवागं॥ जाणन्तो तम्मि तहा, अतहक्कारो उ मिच्छत्तं[36] ॥१॥ " इति ॥ ७ ॥ उक्तं प्रासंगिकम्, अधुना प्रकृतार्थनिगमनायाह,

---

३४. ये तु दानं प्रशंसन्ति वधमिच्छन्ति प्राणिनां । ये पुनः एतत् प्रतिषेधन्ति वृत्तिच्छेदं कुर्वन्ति ते ॥

३५. सालम्बनः पतन्नपि आत्मानं दुर्गमेऽपि धारयति । इति सालम्बनसेवी धारयति यतिरशठभावम् ॥

३६. संविग्नोऽनुपदेशं न ददाति दुर्भाषितं कटुविपाकम् । जानन् तस्मिन् तथा अतथाकारस्तु मिथ्यात्वम् ॥

एवं न कश्चिदस्यार्थ–स्तत्त्वतोऽस्मात्प्रसिध्यति ॥ अपूर्वः किन्तु तत्पूर्व–मेवं कर्म प्रहीयते ॥ ८ ॥

(वृत्तिः) 'एवं' अनन्तरोक्तेन प्रकारेण कल्प एवास्येत्यादिनाभिहितेन, 'न' नैव, 'कश्चित्' कोऽपिचित्, 'अस्य' तीर्थकृतः, 'अर्थः' पुरुषार्थः फलं वा, 'तत्त्वतः' परमार्थतः, 'अस्मात्' महादानात्, 'प्रसिध्यति' प्रकर्षेण निष्पद्यते, किम्भूतोऽसावित्याह, 'अपूर्वः' अभिनवो हेत्वन्तराणामसाध्य इत्यर्थः। एवं सर्वथा दानस्य निरर्थकत्वं माभूदित्यत आह 'किन्तु' केवलम्, 'तत्' इति तीर्थकरत्वनिमित्तभूतम्, 'पूर्वं' पूर्वभवोपार्जितम्, 'एवं' अनन्तरोदितेन महादानलक्षणप्रकारेण, 'कर्म' अदृष्टम्, 'प्रहीयते' क्षयं यातुं प्रवर्त्तते, प्रशब्दस्यादिकर्मार्थत्वात्, अथवा 'तत्पूर्वं' दानपूर्वकं 'प्रहीयते' इत्येतस्याः क्रियाया विशेषणमिदमिति ॥ ८ ॥ सप्तविंशतितमाष्टकविवरणं समाप्तम् ॥ २७ ॥

॥ अथ अष्टाविंशतितमं राज्यादिदानेऽपि तीर्थकृतो दोषाभावप्रतिपादनाष्टकम् ॥

एवं जगद्गुरुविषयां महादानविप्रतिपत्तिं निरस्य तस्यैव राज्यदानविषयां तां निरस्यन् परमतं तावदाह ॥

श्लो० १ अन्यस्त्वाहास्य राज्यादि–प्रदाने दोष एव तु ॥ महाधिकरणत्वेन, तत्त्वमार्गेऽविचक्षणः ॥ १ ॥

(वृत्तिः) 'अन्यस्तु' जगद्गुरुमहादानपूर्वपक्षवाद्यपेक्षया अपरः पुनर्वादी, 'आह' ब्रूते, 'अस्य' जगद्गुरोः, 'राज्यादिप्रदाने' स्वपुत्रादिभ्यो नरनायकत्वकलत्रकलाकर्मशिल्पप्रभृतीनां वितरणे, 'दोष एव' अशुभकर्मबन्धलक्षणं दूषणमेव, 'तुशब्दः' पूरणे, केन हेतुनेत्याह महच्च तद्गुरुकमधिकरणं च दुर्गतिहेत्वनुष्ठानं 'महाधिकरणं' तद्भावस्तत्त्वं तेन, राज्यादिप्रदानं हि महाधिकरणम्, महारम्भमहापरिग्रहकुणिमाहारपञ्चेन्द्रियवधादिहेतुत्वात्तस्य, अग्निशस्त्रादिदान इवेति दृष्टान्तोऽभ्यूह्यः,

क एवमाहेत्याह, 'तत्त्वमार्गे' वस्तुपरमार्थाध्वनि परिच्छेत्तव्ये, 'अविचक्षणः' अपण्डितः, अविचक्षणत्वं चास्य वक्ष्यमाणराज्यादिदानहेतोरपरिज्ञानादिति, अथवा 'विचक्षण' इत्युपहासवचनमिति ॥ १ ॥ उत्तरमाह ॥

अप्रदाने हि राज्यस्य, नायकाभावतो जनाः ॥ मिथो वै कालदोषेण, मर्यादाभेदकारिणः॥ २ ॥
विनश्यन्त्यधिकं यस्मा–दिह लोके परत्र च ॥ शक्तौ सत्यामुपेक्षा च, युज्यते न महात्मनः ॥ ३ ॥
तस्मात्तदुपकाराय, तत्प्रदानं गुणावहम् ॥ परार्थदीक्षितस्यास्य, विशेषेण जगद्गुरोः ॥ ४ ॥

(वृत्तिः)'अप्रदाने' पुत्रादिभ्योऽवितरणे सति, 'हिशब्दः' पूर्वपक्षपरिहारभावनार्थः, 'राज्यस्य' भूपतित्वस्य, 'नायकाभावतः' स्वामिकाभावात्, 'जनाः' लोकाः, 'मिथः' परस्परेण, 'विनश्यन्ति' इति योगः, 'वैशब्दो' वाक्यालङ्कारे, 'कालदोषेण' अवसर्पिणीलक्षणस्य हीनहीनतरादिस्वभावस्य समयस्यापराधेन हेतुना, 'मर्यादाभेदकारिणः' स्वपरधनदारादिव्यवस्थालोपकारकाः सन्तः, 'विनश्यन्ति' क्षयमुपगच्छन्ति, नायकसद्भावेऽपि केचिद्विनश्यन्तो दृश्यन्त इत्यत्राह, 'अधिकं' अत्यर्थम्, 'यस्मात्' कारणात्, क विनश्यन्तीत्याह, 'इह लोके' इहैव मनुष्यजन्मनि प्राणादिक्षयात्, 'परत्र' च परलोके च हिंसानृतधनदारापहारादेः, तथा 'शक्तौ' सामर्थ्ये, 'सत्यां' विद्यमानायाम्, 'उपेक्षा' अवधीरणा, 'चशब्दो' हेत्वन्तरसमुच्चये, 'युज्यते' घटते, 'न' नैव, 'महात्मनो' जगद्गुरोर्युगादिदेवादेः ॥२–३ ॥ यस्मादेवं 'तस्मात्' कारणात्, तेषां परस्परेण विनश्यतामुपकारोऽनर्थत्राणं तदुपकारस्तस्मै 'तदुपकाराय,'तत्प्रदानं' राज्य(ज्यादि)दानम्, 'गुणावहं'राज्यदातुरुपकारकमेव न पुनर्दोषावहम्, परस्मै इदं 'परार्थं' परोपकारार्थमित्यर्थः,'दीक्षितस्य' कृतनिश्चयस्य, परार्थोद्यतस्येत्यर्थः,'अस्य' जगद्गुरोः, 'विशेषेण' सुतरां सामान्यराज्यदायकापेक्षया, 'जगद्गुरोः' भुवनभर्तुर्जिनस्येति, अनेन च राज्यप्रदानस्य महाधिकरणत्व-

भावत्वं व्युदस्तम्, तद्दानस्यैव महाधिकरणत्वेन प्रसाधनतः परोक्तो महाधिकरणत्वलक्षणो हेतुरसिद्ध इत्युक्तम्, तदसिद्धेश्च राज्यादिदाने दोष एवेत्यपहस्तितमिति ॥ ४ ॥ राज्यादिदाने दोष एवेत्यत्रादिशब्देन विवाहादिव्यवहारदर्शनं भगवतः सदोषमित्यासञ्जितम्, तत्र परिहारातिदेशमाह ॥

एवं विवाहधर्मादौ, तथा शिल्पनिरूपणे ॥ न दोषो ह्युत्तमं पुण्य–मित्थमेव विपच्यते ॥ ५ ॥

(वृत्तिः) यथा राज्यादि(राज्य)दाने न दोषो महाधिकरणत्वाभावाद्गुणावहत्वाच्च, 'एवं' अनेनैव प्रकारेण, विवाहःपरिणयनं तद्रूपो धर्मः समाचारो व्रतबन्धो वा 'विवाहधर्मः' तदादौ तत्प्रभृतिके, आदिशब्दात् राजकुलग्रामधर्मादिपरिग्रहः, 'तथाशब्दः' समुच्चये, 'शिल्पनिरूपणे' घटलोहचित्रवस्त्रनापितव्यापारोपदर्शने, किमित्याह, 'न दोषो' नैवाशुभकर्मबन्धलक्षणं दूषणमस्ति भगवतः, इह प्रतिज्ञायां हेतुमाह, 'हिशब्दो' यस्मादर्थः, ततश्च यस्मात्, 'उत्तमं' प्रकृष्टं तीर्थकरनामकर्मलक्षणम्, 'पुण्यं' शुभकर्म, 'इत्थमेव' अनेनैव विवाहशिल्पादिनिरूपणप्रकारेण, 'विपच्यते' विपाकं याति स्वफलं ददातीत्यर्थ इति ॥ ५ ॥ इहैवाभ्युच्चयमाह ॥

किञ्चेहाधिकदोषेभ्यः, सत्त्वानां रक्षणं तु यत् ॥ उपकारस्तदेवैषां, प्रवृत्त्यङ्गं तथास्य च ॥ ६ ॥

(वृत्तिः) 'किञ्चेति' उत्तरपक्षस्याभ्युच्चयप्रतिपादनार्थः, 'इहेति' राज्यदानविवाहधर्मशिल्पादिप्ररूपणेषु, 'अधिकदोषेभ्यः' राज्यादिदानाधिकरणलक्षणदोषापेक्षया ये अधिका अतिरिक्ता दोषाः परस्परोपघातपारदार्यादयस्तेभ्यः, 'सत्त्वानां' असुमताम्, 'रक्षणं' त्राणम्, 'तुशब्दः' पुनरर्थः, प्रयोगश्चास्य यत् पुनरित्येवं द्रष्टव्यः, 'उपकारो' हितकरणम्, 'तदेव' रक्षणमेव, 'एषां' सत्त्वानाम्, किञ्चान्यत् 'प्रवृत्त्यङ्गं' राज्यादिदानप्रवृत्तावङ्गं कारणं, तदेवेति प्रकृतम्, 'तथा' इति वाक्यान्तरत्वख्या-

:पनार्थम्, 'अस्य' जगद्गुरोः, 'चः' समुच्चयार्थः, अधिकतरानर्थपरिहारलक्षणोपकारकरणाय भगवतस्तत्र प्रवृत्तिरिति भावना ॥ आह च ॥ "एत्तोच्चिय निद्दोसं, सिप्पाइविहाणमो जिणिन्दस्स ॥ लेसेण सदोसंपि हु, बहुदोसनिवारणत्तेणं[37] ॥१॥" त्ति ॥ इति ॥ ६ ॥ उक्तमर्थं दृष्टान्तेन समर्थयन्नाह ॥

**नागादे रक्षणं यद्व–द्गर्त्ताद्याकर्षणेन तु ॥ कुर्वन्न दोषवांस्तद्व–दन्यथासम्भवादयम् ॥ ७ ॥**

(वृत्तिः) 'नागादेः' सर्पगोनसादेः सकाशात्, 'रक्षणं' इष्टपुत्रादित्राणम्, 'यद्वत्' यथा, 'गर्तादेः' श्वभ्रादेः सकाशात्, आदिशब्दात् सोपानपङ्क्त्यादिपरिग्रहः, 'आकर्षणं' आक्षेपणं, 'गर्त्ताद्याकर्षणं' तेनापि करणभूतेन हनुजानुप्रभृत्यङ्गघर्षणलक्षणानर्थकारणेन, अन्यथा रक्षणस्यासम्भवात् इति भावः, 'तुशब्दः' अपिशब्दार्थः, 'कुर्वन्' विदधत्, रक्षणमितियोगः, 'न' नैव, 'दोषवान्' दूषणवान्, मात्रादिरिति दृष्टान्तः, अथ दार्ष्टान्तिकमाह, 'तद्वत्' तथा राज्यादि यच्छन् घर्षणतुल्यानर्थसम्भवेऽपि नागादिरक्षणकल्पमहानर्थनिवारणलक्षणोपकारसंपादनेन न दोषवान् अयमिति योगः, अथ किमल्पस्यापि दोषस्याभावेन महानर्थरक्षां न करोतीत्याह, 'अन्यथा' अन्येन प्रकारेण अल्पस्याप्यनर्थस्यानाश्रयणलक्षणेन, 'असम्भवात्' महानर्थरक्षणस्याघटनात्, 'अयमिति' जगद्गुरुरिति । उक्तं च ॥ "तत्थ पहाणो अंसो, बहुदोसनिवारणाउ (णेह) जगगुरुणो ॥ नागाइरक्खणे जह, कड्ढणदोसे वि सुहजोगो[38] ॥ १ ॥ गत्ता(खड्डा)तडम्मि वसमे, इट्ठसुय पिच्छिऊण कीलन्तम् ॥ तप्पच्चवायभीया, तयाणणट्ठा गया जणणी[39] ॥२॥ दिट्ठो य तीए नागो, तं पइ एन्तो दुओ य गड्डा(खड्डा)ए,

---

[37] अत एव निर्दोषं शिल्पादिविधानं जिनेन्द्रस्य । लेशेन सदोषमपि खलु बहुदोषनिवारणत्वेन ॥ १ ॥

[38] तत्र प्रधानोंऽशो बहुदोषनिवारणात् (णेह) जगद्गुरोः । नागादिरक्षणे यथा कर्षणदोषेऽपि शुभ (सुख)योगः ॥ १ ॥

[39] गर्ततटे विषम इष्टसुतं प्रेक्ष्य क्रीडन्तम् । तत्प्रत्यपायभीता तदानयनार्थं गता जननी ॥ २ ॥

तो कड्ढिओ तगो तह, पीडाए विसुद्धभावाए ॥ ३ ॥ त्ति"४० ॥ ७ ॥

अधिकदोषनिवारणार्थां प्रवृत्तिरस्य किञ्चिद्दोषवत्यपि न दुष्टेत्येतस्य पक्षस्यानभ्युपगमे बाधामाह ।

**इत्थं चैतदिहैष्टव्य–मन्यथा देशनाप्यलम् ॥ कुधर्मादिनिमित्तत्वा–द्दोषायैव प्रसज्यते ॥ ८ ॥**

(वृत्तिः) 'इत्थं च' अनेनैवानन्तरोक्तेन गुरुतरानर्थनिवारकत्वलक्षणेन, चशब्दोऽवधारणे, 'एतत्' अनन्तरोदितं राज्यप्रदानादिकं वस्तु, 'इह' प्रक्रमे, 'एष्टव्यं' अभ्युपगन्तव्यम्, 'अन्यथा' एतस्यानभ्युपगमे, 'देशनापि' तत्त्वप्ररूपणापि, आस्तां राज्यादिदानं दोषायैवेति योगः, 'अलं' अत्यर्थम्, कुत इत्याह 'कुधर्माः' शाक्यादिप्रवचनान्यादिर्येषां, श्रुतचारित्रप्रत्यनीकत्वादिभावानां ते तथा तेषां 'निमित्तं' हेतुस्तद्भावस्तत्त्वं तस्मात्, जिनदेशना हि नयशतसमाकुला, नयाश्च कुप्रवचनालम्बनभूताः, 'दोषायैव' अनर्थायैव न पुनर्गुणाय, 'प्रसज्यते' प्राप्नोति, न च भगवद्देशनाया अनर्थनिबन्धनत्वमभ्युपगन्तव्यम्, अनन्योपायत्वेन नार्थप्राप्तेरभावप्रसङ्गादिति ॥ ८ ॥ अष्टाविंशतितमाष्टकविवरणं समाप्तम् ॥ २८ ॥



## ॥ अथ एकोनत्रिंशत्तमं सामायिकस्वरूपनिरूपणाष्टकम् ॥

राज्यादिदानपूर्वकं च जगद्गुरुः सामायिकं प्रतिपन्नवानिति तत्स्वरूपनिरूपणायाह ।

**सामायिकं च मोक्षाङ्गं, परं सर्वज्ञभाषितम् ॥ वासीचन्दनकल्पाना–मुक्तमेतन्महात्मनाम् ॥ १ ॥**

---

४० दृष्टश्च तया नागस्तं प्रति आयन् द्रुतश्च गर्त्तायाः । तदाकृष्टस्ततस्तथा पीडायामपि शुद्धभावया इति ॥ ३ ॥

(वृत्तिः) समस्य रागद्वेषकृतवैषम्यवर्जितस्य भावस्यायो लाभः समायः स एव 'सामायिकं' चारित्रं तच्च, चशब्दात् ज्ञानदर्शने च ॥ यदाह ॥ "सम्यग्दर्शनज्ञानचारित्राणि मोक्षमार्गः"(त. सू. १-१)अवधारणार्थत्वाद्वा चशब्दस्य सामायिकमेव, न तु परपरिकल्पितं कुशलचित्तम्, अथवा चशब्दः पुनरर्थः तस्य चैवं प्रयोगः, इह भगवता राज्यदानमहादानादीनि कृतानि सामायिकं पुनस्तेषु मोक्षाङ्गं निर्वाणकारणम्, नन्वेवं ज्ञानादीनां तद्कारणत्वं स्यादित्यत आह 'परं' प्रधानमनन्तरमित्यर्थः, ज्ञानादीनां हि सामायिककारणत्वेन मोक्षकारणत्वम् ॥ यदाह ॥ "णाणाहियस्स णाणं पुज्जइ, णाणं पवत्तए चरणं ति[41] ॥" तत्किं स्वमतिविकल्पितं नेत्याह 'सर्वज्ञभाषितम्,' अथवा कथमिदमवसितमिति चेदत आह यतः 'सर्वज्ञभाषितं' समस्तवित्प्रणीतम्, मोक्षादयो हि भावा अतीन्द्रियास्ते च सर्वविद्वचनावसेया एव भवन्ति, प्रमाणान्तरस्य तेष्वप्रवृत्तेः, एतच्च किं सर्वेषां भवति नेत्याह, वासी लोहकारोपकरणविशेषः, वासीव वासी अपकारकारी तां चन्दनमिव मलयजमिव दुष्कृततक्षणहेतुतयोपकारकत्वेन कल्पयन्ति मन्यन्ते 'वासीचन्दनकल्पाः,' यदाह, "यो मामपकरोत्येष, तत्त्वेनोपकरोत्यसौ ॥ शिरामोक्षाद्युपायेन कुर्वाण इव नीरुजम् ॥१॥" अथवा वास्यामपकारिणि चन्दनस्य, कल्प इव च्छेद इव य उपकारित्वेन वर्त्तन्ते 'वासीचन्दनकल्पाः,' ॥ आह च ॥ "अपकारपरेऽपि परे, कुर्वन्त्युपकारमेव हि महान्तः ॥ सुरभीकरोति वासीं,मलयजमपि(भि) तक्ष्यमाणमपि ॥१॥" वास्यां वा चन्दनस्येव कल्प आचारो येषां ते तथा, अथवा वास्यां चन्दनकल्पाश्चन्दनतुल्या ये ते तथा, भावना तु प्रतीतैव, तेषां 'वासीचन्दनकल्पानाम्,' 'उक्तं' अभिहितमाप्तैः, नान्येषाम् 'एतत्'सामायिकम् केषामेवंविशेषणानामित्याह, 'महात्मनां' उत्तमसत्त्ववतामिति ॥ १ ॥

४१ ज्ञानाधिकस्य ज्ञानं पूज्यते ज्ञानं प्रवर्त्तयति चरणमिति ।

सामायिकं फलतः स्वामितश्च निरूपितम्, अथ स्वरूपतस्तदेव निरूपयन्नाह, अथवा मोक्षाङ्गं सामायिकं यत आह ।

निरवद्यमिदं ज्ञेय–मेकान्तेनैव तत्त्वतः ॥ कुशलाशयरूपत्वा–त्सर्वयोगविशुद्धितः ॥ २ ॥

(वृत्तिः) निर्गतमवद्याद्गर्हितकर्मणो हिंसादिक्रोधादेरिति निरवद्यं स्वरूपेण, इदं सामायिकम्, ज्ञेयं ज्ञातव्यम्, एकान्तेनैव सर्वथैव न पुनरंशेनापि सावद्यम्, तथाविधस्य तस्याविशुद्धत्वात्, ॥ यदाह ॥ "पडिसिद्धेसु य देसे, विहिएसु य ईसिरागभावम्मि ॥ सामाइयं असुद्धं, सुद्धं समयाए दोण्हंपि[42] ॥ १ ॥" 'तत्त्वतः' परमार्थतो न तूपचारवृत्त्या, उपचरितं ह्यवस्तु, तत्कार्याकरणात्, कुत एतदेवमित्याह 'कुशलाशयरूपत्वात्' शुभाभिसन्धिस्वभावत्वात्, तस्य सर्वथा निरवद्यत्वाभावे हि कुशलाशयत्वं न स्यादिति, ननु ज्ञानदर्शनयोरप्येतदस्तीत्याह 'सर्वयोगविशुद्धितः' समस्तमनोवाक्कायव्यापारशुद्धिभावात्, न हिं ज्ञानादिषु योगविशुद्धिरस्तीति ॥ २ ॥

अथोक्तरूपसामायिकविलक्षणं शाक्यपरिकल्पितं कुशलचित्तं मोक्षाङ्गतया निषेधयन्नाह ।

यत्पुनः कुशलं चित्तं, लोकदृष्ट्या व्यवस्थितम् ॥ तत्तथौदार्ययोगेऽपि, चिन्त्यमानं न तादृशम् ॥ ३ ॥

(वृत्तिः) सामायिकं तावत् मोक्षाङ्गं, 'यत्पुनः' यदित्युद्देशे पुनरिति विशेषणार्थः, 'कुशलं' शुभम्, 'चित्तं' मनः, किं तत्त्वतः कुशलं नेत्याह 'लोकदृष्ट्या' सामान्यजनदर्शनेन, लोकोत्तरजनदृष्ट्या तु तस्य विचार्यमाणस्य कुशलाभासतैव, 'व्यवस्थितं' प्रतिष्ठितम्, 'तत्' चित्तम्, 'तथे'ति तथाविधस्य सामान्यबुद्धिजनसम्मतस्य 'औदार्यस्य' उदारताया, 'योगः' सम्बन्धः 'तथौदार्ययोगः' तत्रापि, आस्तां तदयोगेऽपि, 'चिन्त्यमानं' विचार्यमाणम्, 'न' नैव, 'तादृशं' सामायिकस-

---

४२ प्रतिषिद्धेषु च देशे विहितेषु चेषद्रागभावे । सामायिकमशुद्धं शुद्धं समतायां द्वयोरपि ॥

दृशम्, यत्किल सामायिकादधिकतमतया सम्मतं परेषां तद्विचार्यमाणं तत्सममपि न भवतीति कथं तन्मोक्षाङ्गमिति ॥ ३ ॥ अथ तदेव मायापुत्रीयकल्पितं कुशलचित्तमुपदर्शयन्नाह ।

मय्येव निपतत्वेत–ज्जगद्दुश्चरितं यथा ॥ मत्सुचरितयोगाच्च, मुक्तिः स्यात्सर्वदेहिनाम् ॥ ४ ॥

(वृत्तिः) 'मयि' इत्यनेन बोधिसत्त्व आत्मानं निर्दिशति, एवशब्दोऽवधारणे, तेन मय्येव न पुनः परत्र, 'निपततु' नितरामापद्यताम्, 'एतत्' प्रतिप्राणिप्रत्यक्षमक्षुण्णं(लक्षणं) सांसारिकासुखकारणम्, 'जगतां' प्राणिनां 'दुश्चरितं' हिंसादिनिबन्धनं कर्म 'जगद्दुश्चरितम्,' 'यथा' इत्युपदर्शनार्थः, तस्य चैवं सम्बन्धः तत्तथौदार्ययोगेऽपि चिन्त्यमानं न तादृशं यथा एतन्मय्येवेत्यादि, तथा 'मत्सुचरितयोगात्' मदीयाहिंसादिसदनुष्ठानसम्बन्धात्, चशब्दः समुच्चये, 'मुक्तिः' मोक्षः, 'स्यात्' भवेत्, 'सर्वदेहिनां' सकलसंसारिणामिति कुशलचित्तमिति ॥ ४ ॥

कस्मादिदं तथौदार्ययुक्तमपि न सामायिकसदृशं भवतीत्याह ।

असम्भवीदं यद्वस्तु, बुद्धानां निर्वृतिश्रुतेः ॥ सम्भवित्वे त्वियं न स्या–त्तत्रैकस्याप्यनिर्वृतौ ॥ ५ ॥

(वृत्तिः) 'असम्भवि' न सम्भवनस्वभावम्, 'इदं' अनन्तरोदितम्, 'यत्' यस्मात्, 'वस्तु' अन्यकृतकर्मणोऽन्यत्र सम्बन्धलक्षणोऽर्थः, कुत इत्याह 'बुद्धानां' बोधिसत्त्वानाम्, 'निर्वृतिश्रुतेः' निर्वाणगमनश्रवणात् तदागमे ॥ तथाहि ॥ "गङ्गावालुकासमा बुद्धा निर्वृता" इति तदागमः ॥ अयमभिप्रायो यदि जगद्दुश्चरितं बुद्धे न्यपतिष्यत्तदा तस्य निर्वाणं नाभविष्यत्, इष्यते च तत्तस्य, इति असम्भवीदं वस्तु, एतदेवाह, 'सम्भवित्वे तु' भवनस्वभावत्वे पुनरस्य वस्तुनः, 'इयं' श्रूयमाणा बुद्धनिर्वृतिः, 'न स्यात्' न भवेत्, 'तत्र' तेषु जगत्सु मध्ये, 'एकस्यापि' जगत आस्तां बहूनाम्, 'अनिर्वृतौ'

अनिर्वाणे सति, अतोऽसंभवित्वादस्य वस्तुन एतत् कुशलचित्तं न सामायिकसदृशमिति ॥ ५ ॥

यदि सामायिकसदृशं नेदं चित्तं तर्हि किंविधमित्याह ।

**तदेवं चिन्तनं न्याया–त्तत्त्वतो मोहसङ्गतम् ॥ साध्ववस्थान्तरे ज्ञेयं, बोध्यादेः प्रार्थनादिवत् ॥ ६ ॥**

(वृत्तिः) 'तत्' इति यस्मादसंभवीदं वस्तु तस्मात्, 'एवं' अनन्तरोदितं मय्येवेत्यादि, 'चिन्तनं' ध्यानम्, 'न्यायात्' उपदर्शितादसम्भवित्वलक्षणात् नयात्, 'तत्त्वतः' परमार्थचिन्तायाम्, 'मोहसङ्गतं' मोहनीयकर्मोदयानुगतम्, मोहोदयाभावे हि समस्तविकल्पोत्कलिकावर्जितमेव चित्तं भवति, सरागावस्थायां पुनः स्यादप्येवंविधं चित्तं साधुता च तस्य स्यादित्याह, 'साधु' शोभनमनन्तरोदितं प्रणिधानम्, 'अवस्थान्तरे' सरागावस्थायां, न पुना रागक्षये, 'ज्ञेयं' ज्ञातव्यम्, किंवदित्याह 'बोध्यादेः' आरोग्यबोधिलाभादेः, आदिशब्दात् समाधिवरपरिग्रहः, 'प्रार्थनादिवत्' याञ्चादि यथा, यदाह ॥ "आरुग्गबोहिलाभं, समाहिवरमुत्तमं दिंतु[43] ॥" आदिशब्दादर्हदादिरागपरिग्रहः, यदाह ॥ "अरिहन्तेसु य रागो, रागो साहूसु बम्भयारीसु ॥ एस पसत्थो रागो, अज्ज सरागाण साहूणं[44] ॥ १ ॥" अयमभिप्रायः, यद्यपि प्रार्थनीयानामर्हतां वीतरागतया बोधिलाभादिदानमसम्भवि, तथापि रागवतो भगवत्सु भक्तिमावेदयतो भावोत्कर्षादिदं साध्वेव, आह च ॥ "भासा असच्चमोसा, नवरं भत्तीइ भासिया एसा ॥ न हु खीणपेज्जदोसा, देन्ति समाहिं च बोहिं च[45] ॥ १ ॥" यदि च मोहसंगतमप्यौदार्यमात्रापेक्षया मय्येवेत्यादिचिन्तनमनवद्यं स्यात्तदा एतदनवद्यतरं भविष्यति, यथा ॥ "अन्धादीनां

---

४३ आरोग्यबोधिलाभं समाधिवरमुत्तमं ददतु ॥ ४४ अर्हत्सु च रागो रागस्साधुषु ब्रह्मचारिषु । एष प्रशस्तो राग आर्य ? सरागाणां साधूनाम् ॥ ४५ भाषा असत्यमृषा केवलं भक्त्या भाषितैषा । न खलु क्षीणप्रेमद्वेषा ददति समाधिं च बोधिं च ॥

यदज्ञान–मास्तां मय्येव तत्सदा ॥ मदीयज्ञानयोगाच्च, चैतन्यं तेषु सर्वदा ॥१॥" अथैतदसंभवान्मोहसंगतमिति चेत्, इतरत्राप्यसंभवित्वं तुल्यमेवेति । अस्य च श्लोकस्य प्रथमपादमन्यथापि पठन्ति, तद्यथा 'एवं च चिन्तनं ह्येतत्' इति, अर्थस्तु प्रकट एवेति ॥ ६ ॥ यदपि व्याघ्रादेः स्वकीयमांसदानादावतिकुशलं चित्तं परेणेष्यते, तदपि सामायिकापेक्षया असाध्विति दर्शयन्नाह ।

अपकारिणि सद्बुद्धि–र्विशिष्टार्थप्रसाधनात् ॥ आत्मम्भरित्वपिशुना, तदपायानपेक्षिणी ॥ ७ ॥

(वृत्तिः) 'अपकारिणि' अपकारकरणशीले बुद्धमांसभक्षके व्याघ्रादौ दुर्जने वा विषयभूते, सन् शोभनोऽयमिति बुद्धिर्मतिः 'सद्बुद्धिः', कुत इत्याह विशिष्टार्थस्य पीडोत्पादकतया कर्मकक्षकर्त्तनसाहाय्यककरणतः सकलशरीरनिर्वृतिहेतुभूतसर्वज्ञतासौधशिखरारोहणलक्षणस्य प्रधानवस्तुनः प्रसाधनं निष्पादनं 'विशिष्टार्थप्रसाधनं' तस्मात्, या सद्बुद्धिः सा किमित्याह, आत्मानमेव न परं बिभर्ति पुष्णातीति आत्मम्भरिस्तद्भावं पिशुनयति सूचयतीति 'आत्मम्भरित्वपिशुना', कुत एतदित्याह यतोऽसौ तेषां बुद्धशरीरापकारिणां व्याघ्रादीनां येऽपाया दुर्गतिगमनादयस्तान्नापेक्षत इत्येवंशीला 'तदपायानपेक्षिणी', आत्मम्भरित्वं परापकारानपेक्षित्वं च महद्दूषणं महतामिति ॥ ७ ॥ प्रकृतमुपसंहरन्नाह ।

एवं सामायिकादन्य–दवस्थान्तरभद्रकम् ॥ स्याच्चित्तं तत्तु संशुद्धे–र्ज्ञेयमेकान्तभद्रकम् ॥ ८ ॥

(वृत्तिः) 'एवं' अनन्तरोक्तनीत्या मोहसङ्गतत्वाभिधानलक्षणया, 'सामायिकात्' मोक्षभवादिसकलभावोपेक्षालक्षणात्, 'अन्यत्' अपरं, "मय्येव निपतत्वित्यादि" परपरिकल्पितं "आरुग्गबोहिलाभमित्यादि" जैनकल्पितं च चित्तमिति योगः, अवस्थान्तरे योग्यताविशेषे एव साभिष्वङ्गतायामेव, न तु केवलित्वे, भद्रकं कल्याणं युक्तं 'अवस्थान्तरभद्रकम्', 'स्यात्'

भवेत्, 'चित्तं' मनः, 'तत्तु' सामायिकं पुनः, 'संशुद्धेः' समस्तदोषवियोगाद्धेतोः, 'ज्ञेयं' ज्ञातव्यम्, 'एकान्तभद्रकं' सर्वथैव शोभनमिति ॥ ८ ॥ एकोनत्रिंशत्तमाष्टकविवरणं समाप्तम् ॥ २९ ॥

## ॥ अथ त्रिंशत्तमं केवलज्ञानाष्टकम् ॥

अनन्तरं सामायिकमेकान्तभद्रकमुक्तम्, तच्च कथम्, उच्यते, यतः ।

**सामायिकविशुद्धात्मा, सर्वथा घातिकर्मणः ॥ क्षयात्केवलमाप्नोति, लोकालोकप्रकाशकम् ॥ १ ॥**

(वृत्तिः) 'सामायिकेन' पूर्वोक्तस्वरूपेण विशुद्धो निर्मलीकृत 'आत्मा' स्वभावो यस्य स तथा, 'सामायिकं' वा 'विशुद्धं' यस्य स तथा, स चासौ 'आत्मा' चेति, स इत्थम्भूतो जीवः, 'सर्वथा' सर्वैः प्रकारैः, घातयति जीवगुणान्नाशयतीत्येवंशीलं घाति, क्रियत इति कर्म, घाति च तत्कर्म चेति 'घातिकर्म' ज्ञानावरणदर्शनावरणमोहनीयान्तरायाख्यं तस्य, 'क्षयात्', विनाशात्, किमित्याह 'केवलं' केवलज्ञानं केवलदर्शनं च, 'आप्नोति' लभते, किम्भूतमित्याह, लोकालोकौ ॥ "धर्मादीनां वृत्ति-र्द्रव्याणां भवति यत्र तत् क्षेत्रं ॥ तैर्द्रव्यैः सह लोक-स्तद्विपरीतं ह्यलोकाख्यम् ॥ १ ॥" इत्येवमुक्तलक्षणौ प्रकाशयतीति 'लोकालोकप्रकाशकं' इति ॥ १ ॥

सामायिकेन विशुद्धस्य विशुद्धसामायिकस्य वा जीवस्य केवलावाप्तिर्भवतीत्युक्तमेतदेव भावयन्नाह ।

**ज्ञाने तपसि चारित्रे, सत्येवास्योपजायते ॥ विशुद्धिस्तदतस्तस्य, तथाप्राप्तिरिहेष्यते ॥ २ ॥**

(वृत्तिः) 'ज्ञाने' ज्ञेयप्रकाशके दीपकल्पे श्रुतादौ, ज्ञानग्रहणात्सम्यक्त्वमपि गृहीतं द्रष्टव्यं, तद्विहीनस्य ज्ञानस्य अज्ञानत्वात्,

तथा 'तपसि' पुराणकर्मकचवरशोधके कर्मकरपुरुषकल्पेऽनशनादौ, तथा 'चारित्रे' च अभिनवकर्मरेणुनिवारणफले छिद्रस्थगनकल्पे संयमे, चशब्दो लुप्तोऽत्र द्रष्टव्यः, ज्ञानादिग्रहणं चेह एतस्य त्रयस्यात्मशुद्धाववन्ध्यकारणत्वेनाभिहितत्वात्, तथाहि ॥ "णाणं पयासयं सो–हओ तवो संजमो य गुत्तिकरो॥ तिण्हंपि समाओगे, मुक्खो जिणसासणे भणिओ[४६]॥१॥" एतस्मिन् त्रये, 'सत्येव' विद्यमान एव, 'अस्य' आत्मनः सामायिकस्य वा समभावरूपस्य 'उपजायते' भवति, कासौ 'विशुद्धिः' घातिकर्ममलविलयलक्षणा यथाख्यातरूपा वा, ततश्च ज्ञानतपश्चारित्राणां सामायिकस्वभावत्वात्सामायिकेन विशुद्धो भवत्यात्मा ज्ञानादिभिर्वा सामायिकं विशुद्ध्यतीति, अनेन च "सामायिकविशुद्धात्मा" इति भावितम्, अथ शेषभावनायाह, 'तत्' इति यत एवं तत्तस्मात्, 'अतो' ज्ञानादित्रयरूपसामायिककृतजीवविशुद्धेः सामायिकविशुद्धेर्वा सकाशात्, 'तस्य' केवलज्ञानस्य, 'तथा' तेन प्रकारेण घातिकर्मक्षयलक्षणेन मोहक्षयलक्षणेन वा, 'प्राप्तिः' लाभः, 'इह' प्रक्रमे, 'इष्यते' तत्त्ववेदिभिरभिमन्यत इति ॥ २ ॥ अथ किं स्वरूपं केवलज्ञानमित्याह ।

स्वरूपमात्मनो ह्येत–त्किन्त्वनादिमलावृतम् ॥ जात्यरत्नांशुवत्तस्य, क्षयात्स्यात्तदुपायतः ॥ ३ ॥

(वृत्तिः) 'स्वरूपं' स्वभाव एव, अवधारणार्थस्य हिशब्दस्येह सम्बन्धात्, कस्येत्याह 'आत्मनो' जीवस्य, 'एतत्' केवलज्ञानम्, एतेन चेदमुक्तं भवति, न प्रकृतिवियोगमात्रं केवलज्ञानं तस्याभावरूपत्वात्, नापि आत्मनो भिन्नं पुरुषान्तरज्ञानवदसंवेदनप्रसङ्गात्, नापि समवायवशात् तत्र वर्त्तत इति समवायकृतो विशेषः, तस्यैकत्वेन सर्वत्र तद्दर्शनप्रसङ्गादिति, ननु यद्येतदात्मनः स्वरूपं तत्कुतः सदा नोपलभ्यत इत्यत्राह, 'किन्तु' केवलं अनादिः अप्राथम्यो यो मलो

४६ ज्ञानं प्रकाशकं शोधकं तपः संयमश्च गुप्तिकरः । त्रयाणामपि समायोगे मोक्षो जिनशासने भणितः ॥

ज्ञानावरणादिकर्मरूपः तेनावृतमाच्छादितं 'अनादिमलावृतं' इति कृत्वा सदा नोपलभ्यते, अनादित्वं च कर्ममलस्य प्रवाहापेक्षया, सादित्वे चास्य मुक्तस्येव बन्धाभावः स्यादिति, किंवदित्याह जात्यं प्रधानं यद्रत्नं माणिक्यं मरकतादि तस्यांशवः किरणास्त इव 'जात्यरत्नांशुवत्,' 'तस्य' अनादिमलस्य, 'क्षयात्' विनाशात, 'स्यात्' सञ्जायते, 'तत्' केवलज्ञानम्, मलक्षय एव कथं स्यादित्याह 'उपायतः' उपायाद्धेतोः सामायिकाभ्यासलक्षणात्, नन्वनादित्वादेव न युक्तोऽस्य कर्ममलवियोगो व्योमात्मनोरिव, नैवम्, अनादित्वेऽपि रत्नांशुमलसंयोगस्योपायतः क्षयदर्शनात्, आह च ॥ "जह वेह कंचणोवल-संजोगोऽणाइसंतइगओ वि ॥ वोच्छिज्जइ सोवायं, तह जोगो जीवकम्माणं ति[47] ॥१॥" ॥३॥

नन्वात्मरूपत्वेऽपीदं, केवलज्ञानं कथं लोकालोकप्रकाशकमित्यत आह ।

आत्मनस्तत्स्वभावत्वा-ल्लोकालोकप्रकाशकम् ॥ अत एव तदुत्पत्ति-समयेऽपि यथोदितम् ॥ ४ ॥

(वृत्तिः) 'आत्मनः' जीवस्य, तत् लोकालोकप्रकाशनं स्वभावोऽस्य स तद्भावस्तत्त्वं तस्मात् 'तत्स्वभावत्वात्', 'लोकालोकप्रकाशकं' सकलपदार्थसार्थाविर्भासकमित्यर्थः, केवलमिति प्रकृतम्, ननूत्पत्तिसमये तद्यथोक्तप्रकाशं न सङ्गत-मुत्पद्यमानत्वात् दीपादिरिव, दीपो हि क्रमेण स्वप्रकाश्यं प्रकाशयतीत्यत आह 'अत एव' इति यत एव तत् लोकालोकप्रकाशकस्वभावात्मरूपं अत एव कारणात्, 'तत्' केवलज्ञानम्, 'उत्पत्तिसमयेऽपि' प्रादुर्भावक्षणेऽपि, आस्तामुत्पत्तिसमयानन्तरम्, 'यथोदितं' उक्तस्वरूपमेव युगपल्लोकालोकप्रकाशकमित्यर्थ इति ॥ ४ ॥

अथेदं किं प्राप्य विषयं परिच्छिनत्सि ? अप्राप्य वा ?, अप्राप्येति ब्रूमः, कथम् ?, यतः ।

---

[47] यथा वेह काञ्चनोपलसंयोगोऽनादिसंततिगतोऽपि । व्यवच्छिद्यते सोपायं तथा योगो जीवकर्मणामिति ॥

**आत्मस्थमात्मधर्मत्वा–त्संवित्त्या चैवमिष्यते ॥ गमनादेरयोगेन, नान्यथा तत्त्वमस्य तु ॥ ५ ॥**

(वृत्तिः) आत्मनि जीवे शरीरपरिमाणे तिष्ठतीति 'आत्मस्थम्', शरीरपरिमाणता चास्य तत्रैव तद्गुणोपलब्धेः, कुत
आत्मस्थं तदित्याह 'आत्मधर्मत्वात्' जीवपर्यायत्वात् । यो हि यस्य धर्मः स तत्रैव वर्तते यथा घटे रूपम्, आत्म-
धर्मश्च केवलज्ञानमिति । न केवलमात्मधर्मत्वात्तदात्मसंस्थं, 'संवित्त्या च' स्वसंवेदनाच्च हेतोः, तथाहि, यद्यत्र संवेद्यते
तत्तत्रैव वर्तते यथा घटे रूपम्, संवेद्यते चात्मनि ज्ञानमित्यात्मस्थज्ञानसिद्धिः, तथा यद्यज्ज्ञानं तत्तदात्मस्थं यथा रूप-
ज्ञानं, ज्ञानं च केवलमिति, 'एवं' अनेन प्रकारेणात्मस्थतालक्षणेन, 'इष्यते' अभिमन्यते, केवलमिति प्रक्रमः, तदेवं संवे-
दनात्प्रणालिकयात्मस्थकेवलसिद्धिः, अथवा 'आत्मस्थं' केवलम्, 'आत्मधर्मत्वात्', अथ आत्मधर्मत्वमेव कथमित्याह,
'संवित्त्या' पुनः, 'एवं' आत्मधर्मत्वेन, 'इष्यते' केवलज्ञानम्, संवेद्यते ह्यात्मधर्मतया ज्ञानं, ज्ञानं च केवलमित्यात्मधर्मस्त-
दित्यात्मधर्मत्वलक्षणहेतुसिद्धिः, तथा 'गमनादेः' केवलज्ञानस्य ज्ञेयदेशे गत्यादेः, आदिशब्दात् ज्ञेयदेशं गत्वा पुनः स्व-
स्थानागमनग्रहः, 'अयोगेन' अयुज्यमानत्वेन, केवलस्य हि ज्ञेयदेशगमने आत्मनो निःस्वभावत्वं स्यात् तत्स्वरूपत्वादा-
त्मनः, केवलस्य चात्मधर्मत्वं न स्यात् आत्मविरहेऽपि भावादिति, किमित्यत आह, 'नान्यथा' नैवान्येन प्रकारेण प्राप्य
परिच्छेदतोऽनात्मस्थतालक्षणेन, 'तत्त्वं' तत्स्वरूपम्, 'अस्य' केवलस्य, 'तु' शब्दोऽवधारणे, तस्य च प्रयोगो दर्शित एव,
ततो यदभिधीयते ॥ "अज्जवि धावइ नाणं, तहवि अलोओ अणन्तओ चेव ॥ अज्जवि न कोइ एवं, पावइ सव्वण्णुयं
जीवो ॥१॥ त्ति[४८] ॥" तन्निरस्तमिति, अथवा 'गमनादेरयोगेनात्मस्थं' तदिति योगः, 'अन्यथेति' गमनादिसद्भावे पुनः, 'तत्त्वं'

[४८] अद्यापि धावति ज्ञानं तथापि अलोकोऽनन्तक एव । अद्यापि न कोऽपि एवं प्राप्नोति सर्वज्ञत्वं जीव इति ॥

केवलत्वं, 'अस्य' न 'स्यात्', केवलज्ञानं हि सकलज्ञानमुच्यते अलोकश्चानन्तत्वेन गमनतः सकलो ज्ञातुमशक्यः, 'तुशब्दः' पुनरर्थो योजितश्चेति ॥ ५ ॥ अथ यदीदमात्मस्थमेव तदा कथं चन्द्रादिप्रभोपमानमेतदभिधीयते ॥ "स्थितः शीतांशुवज्जीवः, प्रकृत्या भावशुद्धया ॥ चन्द्रिकावच्च विज्ञानं, तदावरणमभ्रवत् ॥ १ ॥" इति । अत्रोत्तरमाह—

॥ ९९ ॥ यच्च चन्द्रप्रभाद्यत्र, ज्ञातं तज्ज्ञातमात्रकम् ॥ प्रभा पुद्गलरूपा य—त्तद्धर्मो नोपपद्यते ॥ ६ ॥

(वृत्तिः) आत्मस्थमेवेदं तावत्केवलज्ञानं 'यच्च' यत्पुनः, 'चन्द्रप्रभादि' शीतांशुरश्मिप्रभृतिकं, आदिशब्दादादित्यदीपादिपरिग्रहः, 'अत्र' केवलज्ञानस्वरूपे ज्ञापयितव्ये प्रकाशमात्रसाधर्म्यात्, 'ज्ञातं' ज्ञापकम्, तत्किमित्याह, ज्ञातमेव ज्ञातमात्रं, तदेव चावगीतं 'ज्ञातमात्रकं' विशिष्टसाधर्म्याभावात्, कुत एतदेवमित्याह 'प्रभा' दीप्तिः 'पुद्गलरूपा' परमाणुप्रचयस्वभावा, 'यत्' यस्मात् कारणात् ततोऽसौ प्रभा, 'तद्धर्मः' चन्द्रादिपर्यायः, 'नोपपद्यते' न घटते, न हि पुद्गलानां धर्मतास्ति, द्रव्यत्वात्, तदेवं केवलस्य जीवधर्मत्वात् प्रभायाश्चाधर्मत्वात् न सर्वसाधर्म्यं ततो ज्ञातमात्रकमेवैतदिति, अथवा प्रभा पुद्गलरूपा यस्ततश्च प्रभाकेवलयोर्विशिष्टसाधर्म्याभ्युपगमे 'तदिति' केवलज्ञानं, 'धर्मो' जीवपर्यायो, 'नोपपद्यते,' द्रव्यत्वेन प्रभायाः केवलस्यापि द्रव्यत्वप्राप्तेरन्यथा सर्वसाधर्म्यं न स्यादित्यतो ज्ञातमात्रकत्वमिति ॥ ६ ॥

श्लो० ६-७

पुनर्ज्ञातमात्रतामेवास्य समर्थयन्नाह—

अतः सर्वगताभास—मप्येतन्न यदन्यथा ॥ युज्यते तेन सन्न्याया—त्संवित्त्यादोऽपि भाव्यताम् ॥ ७ ॥

(वृत्तिः) 'अतः' एतस्माच्चन्द्रप्रभाज्ञातात्, सर्वेषु समस्तेषु वस्तुषु गतः प्राप्त आभासः प्रकाशो यस्य तत् 'सर्वगताभासं' न केवलमात्मस्थं आत्मधर्मो वा न युज्यते 'सर्वगताभासमपि' न युज्यत इति सम्बन्धः, 'एतत्' केवलज्ञानम्, 'न' नैव,

'घत्' यस्मात् कारणात्, 'अन्यथा' अनन्तरोक्तप्रकारात् प्रकारान्तरेण चन्द्रप्रभाज्ञातस्य सर्वसाधर्म्यज्ञाततालक्षणेन, 'युज्यते', घटते, अघटना चैवं, चन्द्रप्रभा हि न सर्वगताभासा तत्साधर्म्याच्च केवलमपि तथा स्यादिति, 'तेन' इति तस्मात्कारणात्, 'सन्न्यायात्' उक्तलक्षणया शोभनोपपत्त्या, 'संवित्त्या' स्वसंवेदनेन च, 'अदोऽपि' एतदपि प्रभाज्ञातस्य ज्ञातमात्रत्वमपि, न केवलमात्मस्थत्वं केवलस्य, 'भाव्यतां' पर्यालोच्यताम्, तथा हि' संवेद्यत एव ज्ञातस्य ज्ञातमात्रत्वं प्रभायाः पुद्गलद्रव्यत्वेन केवलस्य जीवधर्मत्वेन वैधर्म्यस्येष्टत्वादिति ॥ ७ ॥

अथ पूर्वोक्तस्वरूपं केवलज्ञानं निगमयन्नाह ।

**नाद्रव्योऽस्ति गुणोऽलोके, न धर्मान्तो विभुर्न च ॥ आत्मा तद्गमनाद्यस्य, नास्तु तस्माद्यथोदितम् ॥८॥**

(वृत्तिः) 'न' नैव, 'अद्रव्यो' द्रव्यवर्जितः, 'अस्ति' विद्यते, 'गुणो' धर्मः, "द्रव्याश्रया निर्गुणा गुणाः" इति वचनात्, (त. ५.४०) अत आत्मगुणत्वात् केवलस्य, आत्मस्थमेव तदिति गर्भः, तथा,'अलोके' केवलाकाशे, 'न' नैव, धर्मश्च धर्मास्तिकायो जीवपुद्गलानां गत्युपष्टम्भकारी अन्तश्च पर्यवसानं 'धर्मान्तौ', स्त इति गम्यते, इदमुक्तं भवति, लोके गमनसंभवात् सम्भवति तदनात्मस्थमपि लोकप्रकाशकम्, अलोके पुनर्धर्मास्तिकायाभावाद्गमनाभावेन अन्ताभावाच्च सर्वत्रालोके गन्तुमशक्तत्वेनात्मस्थमेव सत्तदलोकप्रकाशकमिति, अथ सर्वगतत्वादात्मन आत्मस्थमपि केवलं लोकालोकप्रकाशकं भविष्यतीत्याशङ्क्याह, 'विभुः' सर्वव्यापी, 'न च' नैव च, 'आत्मा' जीवः, शरीरमात्र एव चैतन्योपलब्धेः, अतः शरीरावगाहमानमेव सत् तत् सर्वाभासकमिति भावः, 'तत्' इति यस्मादेवं तस्मात्, 'गमनादि' गत्यादिका क्रिया, आदिशब्दादगमनपरिग्रहः, 'अस्य' केवलज्ञानस्य, 'न' नैव, अस्तीति गम्यते, 'अस्तु' भवतु, 'तस्मात्' कार-

णात्, 'यथोदितं' यथाभिहितमात्मस्थं केवलमित्यर्थ इति ॥ ८ ॥ त्रिंशत्तमाष्टकविवरणं समाप्तम् ॥ ३० ॥

## ॥ अथ एकत्रिंशत्तमं तीर्थकृद्देशनाष्टकम् ॥

ननु केवलज्ञानावाप्तौ कृतकृत्यो भगवान् किमिति धर्मदेशनायां प्रवर्तत इत्याशङ्कायामाह ।

**वीतरागोऽपि सद्वेद्य–तीर्थकृन्नामकर्मणः ॥ उदयेन तथा धर्म–देशनायां प्रवर्तते ॥ १ ॥**

(वृत्तिः) 'वीतरागोऽपि' विगताभिष्वङ्गोऽपि, सरागः किल प्रवर्तत इत्यपिशब्दार्थः, सद्वेद्यं च सातवेदनीयं तीर्थकृन्नाम च सद्वेद्यतीर्थकृन्नाम्नी ते एव कर्म 'सद्वेद्यतीर्थकृन्नामकर्म', अथवा सता शोभनेन धर्मदेशनादिना प्रकारेण यद्वेद्यते तत् 'सद्वेद्यं' तच्च (तत्) 'तीर्थकृन्नामकर्म' च तस्य, 'उदयेन' विपाकेन, 'तथा' तेन प्रकारेण समवसरणादिश्रीसमनुभवलक्षणेन, 'धर्मदेशनायां' कुशलानुष्ठानप्रज्ञापनायाम्, 'प्रवर्तते' व्याप्रियते इति ॥ १ ॥ कर्मस्वरूपमेवाह ।

**वरबोधित आरभ्य, परार्थोद्यत एव हि ॥ तथाविधं समादत्ते, कर्म स्फीताशयः पुमान् ॥ २ ॥**

(वृत्तिः) 'वरबोधितो' विशिष्टसम्यग्दर्शनलाभात्, 'आरभ्य' तत्प्रभृति, 'परार्थोद्यत एव' परहितकरणोद्यमवानेव नान्यथाविधः, पुमानिति योगः, आह च "*अरहन्तसिद्ध" इत्यादि, 'हिशब्दो' वाक्यालङ्कारे, तथा तत्प्रकारा विधा

---

* अरिहंत १ सिद्ध २ पवयण ३, गुरु ४ थेर ५ बहुस्सुए ६ तवस्सीसुं ७ (य) ॥ वच्छल्लया य एसिं, अभिक्खनाणोवओगे ८ य ॥१॥ दंसण ९ विणए १० आव–स्सए ११ य सील १२ व्वए १३ निरइयारो ॥ खणलव १४ तव १५ च्चियाए १६, वेयावच्चे समाही १७ य ॥ २ ॥ अपुव्वनाणगहणे १८, सुयभत्ती १९ पवयणे पभावणया २० ॥ एएहिं कारणेहिं, तित्थयरत्तं लहइ जीवो ॥ ३ ॥

स्वभावो यस्य तत् 'तथाविधं' प्रकृतधर्मदेशनानिबन्धनं तीर्थकृन्नामकर्मेत्यर्थः, 'समादत्ते' बध्नाति, 'कर्म' अदृष्टम्, 'स्फीताशयः' उदाराभिप्रायः, 'पुमान्' पुरुषः, पुंग्रहणं मनुष्यमात्रोपलक्षणं न तु स्त्रीनिवृत्त्यर्थम्, नार्यां अपि तद्बन्धकत्वात् इति ॥ २ ॥ ततः किमित्याह ।

यावत्संतिष्ठते तस्य, तत्तावत्संप्रवर्तते ॥ तत्स्वभावत्वतो धर्म—देशनायां जगद्गुरुः ॥ ३ ॥

(वृत्तिः) 'यावत्' इति निपातस्तेन यावन्तं कालम्, 'संतिष्ठते' अक्षीणमास्ते, 'तस्य' जगद्गुरोः, 'तत्' तीर्थकरनामकर्म परहितोद्यतताहेतुकम्, 'तावत्' इति तावन्तं कालम्, 'संप्रवर्तते' व्याप्रियते, कुत इत्याह 'तत्स्वभावत्वतो' धर्मदेशनाप्रवृत्तिस्वभावत्वात् तस्य, आह च ॥ "तित्थयरो किंकारणं, भासइ सामाइयं तु अज्झयणं॥ तित्थयरनामगोत्तं, बद्धं से वेइयव्वं तु[४९] ॥१॥" तथा॥ "तं च कहं वेइज्जइ, अगिलाए धम्मदेसणाईहिं[५०] ॥" क्व संप्रवर्तते इत्याह, 'धर्मदेशनायां' कुशलानुष्ठानप्ररूपणायाम्, कोऽसावित्याह 'जगद्गुरुः' भुवननायक इति ॥ ३ ॥

जगद्गुरुतानिबन्धनस्य तद्वचनस्य स्वरूपमाविर्भावयन्नाह,

वचनं चैकमप्यस्य, हितां भिन्नार्थगोचराम् ॥ भूयसामपि सत्त्वानां, प्रतिपत्तिं करोत्यलम् ॥ ४ ॥

(वृत्तिः) 'हितां' समस्ताङ्गिवर्गोपकारिणीम्, 'भिन्नार्थगोचरां' विविधवस्तुविषयाम्, 'भूयसामपि' असंख्यातानामपि, 'वचनं' वाक्, 'च शब्दः' पुनरर्थः, वचनं पुनः, 'एकमपि' अभिन्नस्वभावमपि न केवलमनेकम्, 'अस्य' जगद्गुरोः,

४९ तीर्थकरः किंकारणं भाषते ? सामायिकं तु अध्ययनम् । तीर्थकरनामगोत्रं बद्धं तस्य वेदितव्यन्तु ॥

५० तच्च कथं वेद्यते ! अग्लान्या ( ग्लानिरहितत्वेन ) धर्मदेशनादिभिः ॥

किमुताल्पानाम्, 'सत्त्वानां' प्राणिनाम्, प्रतिपत्तिं प्रतीतिं 'करोति' विदधाति, 'अलं' अतिशयेनेति ॥ ४ ॥

कुत इदमीदृशमसंभाव्यं भवतीत्याह ।

**अचिन्त्यपुण्यसंभार-सामर्थ्यादेतदीदृशम् ॥ तथा चोत्कृष्टपुण्यानां, नास्त्यसाध्यं जगत्त्रये ॥ ५ ॥**

(वृत्तिः) अचिन्त्योऽप्रमेयः स चासौ पुण्यसंभारश्च तीर्थकरनामादिशुभकर्मसंचयः 'अचिन्त्यपुण्यसंभारः' तस्य 'सामर्थ्यं' प्रभावस्तस्मात्, 'एतद्' वचनम्, 'ईदृशं' ईदृक्षमेकमप्यसंख्येयसत्त्वानां भिन्नार्थविषयप्रतिपत्तिकरणसमर्थमिति भावः, एतस्यैवार्थस्य समर्थनार्थमाह, तथेत्यादि, 'तथा च' इत्यनन्तरोक्तार्थोपप्रदर्शनार्थः, 'उत्कृष्टपुण्यानां' उत्तमशुभकर्मणाम्, 'नास्ति' न विद्यते, 'असाध्यं' साधयितुमशक्यम्, 'जगत्त्रये' त्रिभुवन इति ॥ ५ ॥

ननु यद्यसौ सत्त्वानां भिन्नार्थप्रतीतिं करोति तदा किमभव्यानामपि न करोतीत्याह ।

**अभव्येषु च भूतार्था, यदसौ नोपपद्यते ॥ तत्तेषामेव दौर्गुण्यं, ज्ञेयं भगवतो न तु ॥ ६ ॥**

(वृत्तः) 'अभव्येषु' सिद्धिगमनायोग्येषु, 'चशब्दः' पुनरर्थः, 'भूताः' समु(सद्भू)ता 'अर्था' जीवादयो यस्यां सा तथा, 'यत्' इत्युद्देशे, 'असौ' इत्याद्यश्लोकोपात्ता देशना प्रतिपत्तिर्वा, 'नोपपद्यते' न घटते, तत् इति देशनाया अनुपपद्यमानत्वम्, 'तेषां' अभव्यानाम्, 'एव' दौर्गुण्यं दुर्गुणत्वम्, 'ज्ञेयं' ज्ञातव्यम्, न तु इतीह दृश्यं, तेन 'न तु' न पुनः, 'भगवतो' जगद्गुरोरिति ॥ ६ ॥ अमुमेवार्थं दृष्टान्तेन समर्थयन्नाह ।

**दृष्टश्चाभ्युदये भानोः, प्रकृत्या क्लिष्टकर्मणाम् ॥ अप्रकाशो ह्युलूकानां, तद्वदत्रापि भाव्यताम् ॥७ ॥**

(वृत्तः) 'दृष्टश्च' उपलब्धश्च, न केवलं श्रुत एव, 'अभ्युदये' उद्गमने, 'भानोः' आदित्यस्य, अप्रकाश इति योगः,

'प्रकृत्या' स्वभावेन, 'क्लिष्टकर्मणां' अशुभादृष्टानाम्, 'अप्रकाशः' चक्षुषोऽव्यापारः, 'हिशब्दो'ऽभव्यदौर्गुण्यभावनार्थः, 'उलूकानां' घूकानाम्, 'तद्वत्' उलूकाप्रकाशवत्, 'अत्रापि' तीर्थकरदिनकरदेशनामयूखमण्डलोद्गमेऽप्यभव्यकौशिकाप्रबोध इति, 'भाव्यतां' पर्यालोच्यतामिति ॥ ७ ॥ भगवद्देशनाया एव स्वरूपमाह ।

इयं च नियमात् ज्ञेया, तथानन्दाय देहिनाम् ॥ तदात्वे वर्त्तमानेऽपि, भव्यानां शुद्धचेतसाम् ॥८॥

(वृत्तिः) 'इयं च' एषा पुनरनन्तरोदितातिशया भागवती देशना, 'नियमात्' अवश्यंभावेन, 'ज्ञेया' अवसेया, 'तथा' तेन प्रकारेण "वणिग्वृद्धदास्युदाहरणतः" प्रसिद्धेन, 'आनन्दाय' हर्षाय, 'देहिनां' प्राणिनाम्, कदेत्याह, 'तदात्वे' तस्मिन्काले तदा तदेत्यस्य भावस्तदात्वं तस्मिन् देशनाकरणकाल एवेत्यर्थः, किं तदात्व एव, नेत्याह, 'वर्तमानेऽपि' साम्प्रतकालेऽपि, किं सर्वेषां सत्त्वानामानन्दाय, नेत्याह, 'भव्यानां' सिद्धिगमनोचितानाम्, किं जातिमात्रवतामपि, नेत्याह, 'शुद्धचेतसां' विदलन्महामोहमलपटलमनसामिति ॥ ८ ॥ एकत्रिंशत्तमाष्टकविवरणं समाप्तम् ॥ ३१ ॥

## ॥ अथ द्वात्रिंशत्तमं मोक्षाष्टकम् ॥

सामायिकविशुद्धात्मनो घातिकर्मणः क्षयात् केवलं भवतीत्युक्तमथ सकलकर्मक्षयाद्यत्स्यात्तद्दर्शयितुमाह ।

कृत्स्नकर्मक्षयान्मोक्षो, जन्ममृत्य्वादिवर्जितः ॥ सर्वबाधाविनिर्मुक्त, एकान्तसुखसङ्गतः ॥ १ ॥

(वृत्तिः) कृत्स्नं सकलं कर्म ज्ञानावरणाद्यष्टधा तस्य क्षयोऽत्यन्तविलयः कृत्स्नकर्मक्षयस्तस्मात् 'कृत्स्नकर्मक्षयात्,' मोचनं 'मोक्षो' अपवर्गः, किंविधोऽसावित्याह, 'जन्म' प्रादुर्भावो 'मृत्युः' मरणं तावादिर्येषां जरादीनां ते तथा तैः 'वर्जितो' यः

स तथा, भवति हि "कारणाभावात् कार्याभाव" इति, तथा 'सर्वबाधाविनिर्मुक्तः' निःशेषशारीरमानसपीडाविप्रमुक्तः, तथा 'एकान्तेन' सर्वथा, 'सुखसङ्गत' आनन्दयुक्तो यः स तथेति ॥ १ ॥

मोक्ष एवान्यैः परमपदसंज्ञयाभिहित इति परमपदस्वरूपं दर्शयन्नाह ॥

यन्न दुःखेन संभिन्नं, न च भ्रष्टमनन्तरम् ॥ अभिलाषापनीतं य–त्तज्ज्ञेयं परमं पदम् ॥ २ ॥ श्लो० २

(वृत्तिः) 'यत्' पदम्, 'न' नैव, 'दुःखेन' असुखेन, 'संभिन्नं' व्यामिश्रम्, 'न च' नैव च, 'भ्रष्टं' क्षीणम्, 'अनन्तरं' उत्पत्तिक्षणानन्तरम्, अथवा 'अनन्तरं' अव्यवच्छिन्नम्, तथा अभिलाषेभ्यो विविधवाञ्छाभ्योऽपनीतमपेतं 'अभिलाषापनीतम्', 'यत्' पदम्, 'तत्' इति तदेव, 'ज्ञेयं' ज्ञातव्यम्, 'परमं' सर्वोत्तमम्, 'पदं' आस्पदं सर्वगुणानामिति गम्यम्, मूलटीकाकृता तु नायं श्लोको व्याख्यात इति ॥ २ ॥ एकान्तसुखसंगतो मोक्ष इत्युक्तं तत्र परविप्रतिपत्तिं दर्शयन्नाह ॥

कश्चिदाहान्नपानादि–भोगाभावादसङ्गतम् ॥ सुखं वै सिद्धिनाथानां, प्रष्टव्यः स पुमानिदम् ॥३॥

(वृत्तिः) 'कश्चित्' कोऽप्यनिर्दिष्टनामा पारमार्थिकसुखरूपावगमवर्जितः, 'आह' ब्रूते, अन्नमोदनादि पानं द्राक्षापानादि एते आदिर्येषां खाद्यस्रक्चन्दनाङ्गनादीनां ते तथा तेषां यो भोगः सेवा तस्याभावो 'अन्नपानादिभोगाभावः' तस्मात्, 'असङ्गतं' अयुक्तम्, किं तदित्याह, 'सुखं' शर्म, 'वै' इति वाक्यालङ्कारे, केषामित्याह, 'सिद्धिनाथानां' निर्वृतिस्वामिनां सिद्धानामित्यर्थः, "भोगसद्भावे हि सुखं दृष्टं तदभावे तदभाव" इति परमतम्, अत्राचार्यः समाधानदानायाह, 'प्रष्टव्यः' प्रच्छनीयः, 'स' इति सिद्धिसुखाभाववादी, 'पुमान्' पुरुषः, इदं वक्ष्यमाणस्वरूपमिति ॥ ३ ॥

तदेव प्रष्टव्यमाह ॥

किम्फलोऽन्नादिसंभोगो?, बुभुक्षादिनिवृत्तये ॥ तन्निवृत्तेः फलं किं स्यात्?, स्वास्थ्यं तेषां तु तत् सदा ॥४॥

(वृत्तिः) किं फलं-प्रयोजनमस्येति 'किम्फलः,' 'अन्नादिसंभोगः' अशनपानस्रक्चन्दनाङ्गनादिपरिभोगः?, एवं पृष्टः परः किल वक्ष्यति, 'बुभुक्षादिनिवृत्तये' क्षुत्पिपासारत्यादिदुःखविनिवर्त्तनाय, आचार्य एव परं पृच्छन्नाह, 'तन्निवृत्तेः' बुभुक्षादिदुःखनिवर्तनस्य, 'फलं' प्रयोजनम्, 'किं स्यात्' किं भवेदिति प्रश्नः, अथ परोक्तमुत्तरं दर्शयन्नाह, स्वस्मिंस्तिष्ठतीति स्वस्थः तद्भावः 'स्वास्थ्यं' अनाबाधता, एवं परेणोक्ते आचार्य आह, 'तेषां तु' सिद्धानां पुनः, 'तत्' स्वास्थ्यम्, 'सदा' सर्वकालमस्ति, अस्वास्थ्यहेतूनां कर्मणामिच्छादीनां वाऽल्वाऽभावात्, अतोऽन्नादिभोगाभावेऽपि सुखमेव सिद्धानामिति ॥४॥

अमुमेवार्थं भङ्ग्यन्तरेणाह ।

अस्वस्थस्यैव भैषज्यं, स्वस्थस्य तु न दीयते । अवाप्तस्वास्थ्यकोटीनां, भोगोऽन्नादेरपार्थकः ॥ ५ ॥

(वृत्तिः) 'अस्वस्थस्यैव' अपटोरेव, 'भैषज्यं' औषधं, दीयत इति योगः, इह च संप्रदानस्याविवक्षितत्वात्सम्बन्धस्य तु विवक्षितत्वात् तथाप्रयोगदर्शनाच्च षष्ठीनिर्देशः कृतः, 'स्वस्थस्य तु' निरातङ्कस्य पुनः, 'न' नैव, 'दीयते' वितीर्यते, अयं च दृष्टान्तः, अथ दार्ष्टान्तिकार्थप्रतिपादनायाह, यत एवं ततः, अवाप्ता-लब्धा स्वास्थ्यकोटिः-अनाबाधताप्रकर्षपर्यन्तो यैस्ते तथा तेषां 'अवाप्तस्वास्थ्यकोटीनाम्', सिद्धानामिति गम्यम्, 'भोगः' सेवा, 'अन्नादेः' अशनादेः, 'अपार्थकः' निरर्थकः, साध्यस्य सिद्धत्वात् इति ॥ ५ ॥ यत एवमत एव ।

अकिञ्चित्करकं ज्ञेयं, मोहाभावाद्रताद्यपि । तेषां कण्ड्वाद्यभावेन, हन्त कण्डूयनादिवत् ॥ ६ ॥

(वृत्तिः) अकिञ्चित्करं-अफलं तदेव 'अकिञ्चित्करकम्,' पाठान्तरे 'तथाऽकिञ्चित्करं' इति व्यक्तं च, 'ज्ञेयं' ज्ञातव्यम्, कुतो

'मोहाभावात्' पुंवेदादिमोहनीयाभावात्, किं तदित्याह, 'रताद्यपि' न केवलमन्नादिभोगो मैथुनाद्यपि, आदिशब्दाद्विलेपनादिग्रहः, केषामित्याह, 'तेषां' सिद्धानां मुक्तानाम्, अत्र दृष्टान्तमाह, 'कण्ड्वाद्यभावेन' खर्ज्वाद्यभावेन हेतुना, आदिशब्दात् शीतादिपरिग्रहः, 'हन्त' इति प्रत्यवधारणार्थः कोमलामन्त्रणार्थो वा, 'कण्डूयनादिवत्' खर्जूकरणादिकमिव, आदिशब्दादनलसेवनादिवदिति ॥ ६ ॥ सिद्धसुखं स्वरूपत आह ॥

अपरायत्तमौत्सुक्य–रहितं निष्प्रतिक्रियम् ॥ सुखं स्वाभाविकं तत्र, नित्यं भयविवर्जितम् ॥ ७ ॥

(वृत्तिः) 'अपरायत्तं' स्वाधीनं स्वतन्त्रत्वात् सिद्धानाम्, सुखमिति योगः, 'औत्सुक्यरहितं' विषयाकाङ्क्षावर्जितं रागाभावात्, निर्गतं प्रतिक्रियाया दुःखप्रतीकाररूपाया इति 'निष्प्रतिक्रियम्', इदं हि सांसारिकसुखवद्वेदनाप्रतिकाररूपं न भवति, 'सुखं' सौख्यम्, स्वभावे विषयानपेक्षे आत्मस्वरूपे भवं 'स्वाभाविकं' अनन्तज्ञानदर्शनसुखवीर्यरूपत्वादात्मनः, 'तत्र' मोक्षे परमपदे वा, 'नित्यं' सार्वदिकं साद्यपर्यवसितत्वात्, अत एव 'भयविवर्जितं' प्रतिपातजनितभीतिविरहितम्, सांसारिकसुखं त्वेतद्विपरीतमिति ॥ ७ ॥ इदं च परैः परमानन्द इत्यभिहितमेतदेवाह ।

परमानन्दरूपं त–द्गीयतेऽन्यैर्विचक्षणैः ॥ इत्थं सकलकल्याण–रूपत्वात्साम्प्रतं ह्यदः ॥ ८ ॥

(वृत्तिः) 'परमानन्दरूपं' प्रकृष्टाह्लादस्वभावम्, 'तत्' इति मोक्षसुखम्, 'गीयते' अभिधीयते, 'अन्यैः' आर्हतेभ्योऽपरैः, 'विचक्षणैः' पण्डितैः, उपसंहरन्नाह, 'इत्थं' अनन्तरोक्तप्रकारेण "अपरायत्तमित्यादिना", 'सकलकल्याणरूपत्वात्' निखिलश्रेयःस्वभावत्वात् हेतोः, 'साम्प्रतं' युक्तम्, 'हि' शब्दोऽवधारणे तस्य चैवं प्रयोगः, अद एव–एतदेव मोक्षसुखं, न पुनः सांसारिकमिति ॥ ८ ॥ अथ केषामिदमवसेयमित्यत आह ।

संवेद्यं योगिनामेत–दन्येषां श्रुतिगोचरः ॥ उपमाऽभावतो व्यक्त–मभिधातुं न शक्यते ॥ ९ ॥

(वृत्तिः) 'संवेद्यं' संवेदनार्हम्, 'योगिनां' केवलिनाम्, 'एतत्' मोक्षसुखम्, अन्येषां का वार्तेत्याह, 'अन्येषां' अयोगिनाम्, 'श्रुतिगोचरः' श्रवणविषय एव, न संवेदनीयम्, श्रुतिगोचरोऽपि तदन्येषां यथावत्तया न भवति, तथात्वेन तस्य वक्तुमशक्यत्वात्, एतदेवाह, 'उपमाऽभावतो' दृष्टान्ताभावेन, 'व्यक्तं' स्फुटम्, वक्तुं 'अभिधातुं', 'न' नैव, 'शक्यते' पार्यते मुक्तिसुखमिति प्रक्रमः, यदाह ॥ "जह नाम कोइ मिच्छो, नगरगुणे बहुविहे वियाणन्तो ॥ न चएइ परिकहेउं, उवमाएँ तहिं असंतीए[51] ॥१॥" सामान्येन पुनरभिधीयते, तद्यथा ॥ "जह सव्वकामगुणियं, पुरिसो भोत्तूण भोयणं कोई ॥ तण्हाछुहाविमुक्को, अच्छिज्ज जहा अमियतित्तो[52] ॥ २ ॥ इय सव्वकालतित्ता, अउलं निव्वाणमुवगया

---

[51] यथा नाम कश्चिन्म्लेच्छो नगरगुणान् बहुविधान् विजानन् । न शक्नोति परिकथयितुमुपमायां तत्रासत्याम् ॥

भावार्थः कथानकगम्यः ॥ म्लेच्छः कोऽपि महारण्ये, वसति स्म निराकुलः । अन्यदा तत्र भूपालो, दुष्टाश्वेन प्रवेशितः ॥१॥ म्लेच्छेनासौ नृपो दृष्टः, सत्कृतश्च यथोचितम् । प्रापितश्च निजं देशं, सोऽपि राज्ञा निजं पुरम् ॥२॥ ममायमुपकारीति, कृतो राज्ञाऽतिगौरवात् । विशिष्टभोगभूतीनां, भाजनं जनपूजितः ॥ ३ ॥ ततः प्रासादशृङ्गेषु रम्येषु काननेषु च । वृतो विलासिनीसार्थैर्भुंक्ते भोगसुखान्यसौ ॥ ४ ॥ अन्यदा प्रावृषः प्राप्तौ, मेघाडम्बरमण्डितम् । व्योम दृष्ट्वा ध्वनिं श्रुत्वा, मेघानां स मनोहरम् ॥५॥ जातोत्कण्ठो दृढं जातोऽरण्यवासगमं प्रति । विसर्जितश्च राज्ञाऽपि, प्राप्तोऽरण्यमसौ ततः ॥ ६ ॥ पृच्छन्त्यरण्यवासास्तं, नगरं तात कीदृशम्? ॥ स स्वभावान् पुरः सर्वान्, जानात्येव हि केवलम् ॥ ७ ॥ न शशाकतमां तेषां, गदितुं स कृतोद्यमः ॥ वने वनेचराणां हि नास्ति सिद्धोपमा तथा ॥ ८ ॥

[52] यथा सर्वकामगुणितं पुरुषो भुक्त्वा भोजनं कश्चित् । तृष्णाक्षुद्विमुक्तस्तिष्ठेत् यथाऽमृततृप्तः ॥

सिद्धा ॥ सासयमव्वाबाहं, चिट्ठंति सुही सुहं पत्त[५३] ॥३॥त्ति" ॥९॥ द्वात्रिंशतोऽष्टकप्रकरणानां समाप्तिसूचकं श्लोकमाह ॥

अष्टकाख्यं प्रकरणं, कृत्वा यत्पुण्यमर्जितम् ॥ विरहात्तेन पापस्य, भवन्तु सुखिनो जनाः ॥ १० ॥

(वृत्तिः) मूलटीकायां नास्त्येवायं श्लोकः, इह तु स्पष्टत्वान्न व्याख्यातः, केवलं विरहशब्देन हरिभद्राचार्यकृतत्वं प्रकरणस्यावेदितम्, विरहाङ्कत्वाद्धरिभद्रसूरेरिति ॥ द्वात्रिंशत्समाष्टकविवरणं समाप्तम् ॥ ३२ ॥

( वृत्तिकृत्प्रशस्तिः )

जिनेश्वरानुग्रहतोऽष्टकानां, विविच्य गम्भीरमपीममर्थम् ॥ अवाप्य सम्यक्त्वमपेतरेकं, सदैव लोकाश्वरणे यतध्वम् ॥१॥

सूरेः श्रीवर्धमानस्य, निःसंबन्धविहारिणः । हारिचारित्रपात्रस्य, श्रीचन्द्रकुलभूषिणः ॥ २ ॥

पादाम्भोजद्विरेफेण, श्रीजिनेश्वरसूरिणा । अष्टकानां कृता वृत्तिः, सत्त्वानुग्रहहेतवे ॥ ३ ॥

समानामधिकेऽशीत्या, सहस्रे विक्रमाद्गते । श्रीजाबालिपुरे रम्ये, वृत्तिरेषा समापिता ॥ ४ ॥

नास्त्यस्माकं वचनरचनाचातुरी नापि तादृग्, बोधः शास्त्रे न च विवरणं नाऽ(वाऽ)स्ति पौराणमस्य ॥

किन्त्वभ्यासो भवतु भणितौ सूदितायाममुष्मात्, संकल्पान्नो विवरणविधावत्र जाता प्रवृत्तिः ॥ ५ ॥

प्रत्यक्षरं निरूप्यास्या, ग्रन्थमानं विनिश्चितम् । त्रयस्त्रिंशच्छतानि स्युः, श्लोकानां ससतिस्तथा ॥ १ ॥

॥ श्रीचन्द्रकुलाम्बरभास्करश्रीजिनेश्वराचार्यकृता तच्छिष्यश्रीमदभयदेवसूरिप्रतिसंस्कृता अष्टकवृत्तिः समाप्ता ॥

[५३] सर्वकालतृप्ता अतुलंनिर्वाणमुपगताः सिद्धाः । शाश्वतमव्याबाधं तिष्ठन्ति सुखिनः सुखं प्राप्ता इति ॥

# ॥ सवृत्तिकाष्टकप्रकरणस्य शुद्धिपत्रकम् ॥

| अशुद्धं | शुद्धं | पत्रं | पृष्ठं | पंक्तिः |
|---|---|---|---|---|
| सहस्र | सहस्र | ५ | १ | ९ |
| वशे | विशे | ७ | १ | ३-८ |
| हस्व | ह्रस्वं | ७ | २ | १ |
| काचि | काद्यनुचि | ८ | १ | १० |
| ड्यादि | वुड्यादि | ८ | २ | १ |
| तेम | तेन | १० | २ | ३ |
| ह्यं | ह्र्स्यं | ११ | २ | १३-१४ |
| त्रतं | चैत | १४ | १ | १० |
| न्यच्छे | न्यच्छे | २४ | १ | ५ |
| मंप | ते संप | २५ | १ | ५ |
| वहि | विहि | २६ | २ | १० |
| त्प्री | त्प्रपी | ३३ | २ | ६ |
| गश्चे | गश्चै | ३८ | १ | ४ |
| र्थंषु | र्थेषु | ३९ | २ | ५ |
| काव्य | काय | ४१ | २ | ९ |
| दोष | दोष | ४७ | १ | ७ |
| अर्हि | अर्हिं | ५९ | २ | १३ |
| स्वाश्च | स्वाश्च | ६४ | १ | २ |
| मन- | मतमि- | ६४ | २ | १० |
| कश्च | किञ्च | ६५ | २ | १३ |
| वद्रू | वद्र | ६७ | १ | ३ |
| मांच्छा | सांश्छो | ६७ | १ | १३ |
| षाऽत्र | षोऽत्र | ७० | १ | १८ |
| कलत्र | कलत्रे | ७० | २ | १३ |
| म | मैथुन | ७१ | १ | ९ |
| नर्दो | निर्दो | ७१ | १ | १० |
| कोर्ति | कीर्ति | ७२ | १ | १४ |
| तिया | प्रतिया | ७४ | २ | ११ |
| नर्दि | निर्दि | ७१ | १ | १० |
| नर्थ | ननर्थ | ७८ | १ | ६ |
| जन | जिन | ७८ | १ | १२ |
| स्वभावहे | स्वहे | ७८ | १ | १२ |
| स्वज | स्वभावज | ७८ | १ | १२ |
| माप | मपि | ७९ | २ | ६ |
| वद् | विद् | ७९ | २ | १३ |
| बाज | बीज | ८० | १ | १३ |
| तेत्, एइ | ते, इ | ८० | २ | ६ |
| काशा | कौशा | ८० | २ | १२ |
| नद्रा | निद्रा | ८२ | २ | १ |
| कचि | क्वचि | ८३ | १ | ९ |
| पत्रु | पित्रु | ८४ | २ | ९-१० |
| शुश्र | शुश्र | ८६ | १ | ३ |
| तअ | तओ | ८६ | १ | ११ |
| ऋयो | ऋगो | ८९ | २ | २ |
| वद्रु | विद्रु | ९१ | २ | १० |
| वम्र | विम्र | ९४ | १ | १२ |
| निर्वे | निर्वृ | ९६ | १ | १५ |
| वाऽस्य | वोऽस्य | ९८ | २ | ९ |
| मु[सङ्ग] | मु[म]ङ्ग | १०१ | २ | १५ |

श्रीचन्द्रकुलाम्बरदिनमणि–संविग्नशिरःशेखरश्रीजिनेश्वरसूरिपुरन्दरप्रणीत–तच्छिष्यनवाङ्गीवृत्तिकृदिति-
सुप्रथितनामधेयश्रीमदभयदेवसूरिप्रतिसंस्कृतवृत्तिविभूषितम्
भव्यसत्त्वानुग्रहसंस्कृतप्राकृतगद्यपद्यात्मानेकलक्षश्लोकप्रमितविरहाङ्कचतुश्चत्वारिंशदुत्तरचतुर्दशशतशास्त्र-
प्रासादसूत्रणसूत्रधार–पूर्वधरासन्नकालवर्ति–सुविहिताग्रणी–सकलसूरिपुरन्दर–
श्रीमद्धरिभद्रसूरिसन्दृब्धं

# ॥ श्रीअष्टकप्रकरणम् ॥

समाप्तम्.

प्रकाशिका–श्रीराजनगरस्था श्रीजैनग्रन्थप्रकाशकसभातः ॥

तैयार छे ! न्यायविशारद–न्यायाचार्य–महामहोपाध्याय श्रीमद्-यशोविजयगणिप्रणीत– –अतिदुर्लभप्राय. तैयार छे ! !